सामस्त्येन सुन्दरत्वात् मूलग्रन्थविरोधिनः कस्याप्यंशस्याभावात् तत्त्व-जिज्ञासूनामिदमेवालम्, किं दर्शनेनेत्याकलय्येव तदनन्तरैस्तद्व्याख्यान-एव व्याम्रियत। पश्चात्तदेवम्तु स्वोक्तांशे शास्त्रे तत्रतत्र प्रमाणयन् तच्छलेन बहूनि सूत्राणि व्याचख्यौ।

भाष्यव्याख्याश्च व्योमवतीकन्दलीकिरणावल्यः व्योमशिवाचार्य-श्रीधराचार्योदयनाचार्यकृताः भाष्योदाहृतानि, तदभिप्रेतानि अन्यानि च सूत्राणि तत्रतत्रोद्धृत्य व्याचक्षत। तासां दर्शनेन बहूनि सूत्राणि यथावदवगतान्यासन्। क्वचिदपूर्वाण्यपि सूत्राण्युपलब्धान्यभूवन्। इमास्तिस्र इव लीलावत्यपि काचिद् व्याख्येति न्यायकन्दलीटीकायां राजशेखरेणोक्तमिति कन्दलीभूमिकायां विन्ध्येश्वरीप्रसादशर्मणा दर्शितम्। सा लीलावती श्रीवत्साचार्यविरचितेति तत्रैवोदटङ्कि। साम्प्रतमुपलभ्यमाना तु लीलावती वल्लभाचार्यविरचिता। तथा नेयं भाष्यव्याख्यानरूपाऽपि। तदत्र तिसृषु व्याख्यासु किरणावली अपूर्णा। व्योमवती मध्ये तिरोभूता नातिचिरेण प्राकाश्यं प्राप्ता। कन्दल्येका तु चिरात् पूर्णा प्रसिद्धा। कन्दल्यादिदर्शितादन्यदपि सूत्रं व्योमवत्यामस्त्युल्लिखितम्। साक्षात् सूत्रव्याख्यानानामयत्वेऽनुपलम्भेऽपि एतद्व्याख्यात्रयोपेतभाष्यमूलमेव सूत्रार्थो विमृश्य निर्णयः।

अत्र कन्दलीकिरणावल्योः पौर्वापर्ये विवदन्ते। "त्र्यधिकदशोत्तरनवशत (९१३=९९१ AD) शाकाब्दे न्यायकन्दली रचिता। श्रीपाण्डुदासयाचित भट्टश्रीश्रीधरेणैवम्" इति न्यायकन्दल्यन्ते श्लोकः, "तर्काम्बराङ्कप्रमितेष्वतीतेषु (९०६=९८४ AD) शकान्ततः। वर्षेषूदयनश्चक्रे संक्षिप्तां लक्षणावलीम्" इति लक्षणावल्यन्ते किरणावलीकारश्लो-

कश्च कालं निश्चाययत एव। समानकालिकत्वेऽपि मिथोग्रन्थदर्शनं नासंभवि। किरणावल्या असमाप्तत्वेनान्तिमग्रन्थत्वावसायात् कन्दलीतः पश्चादेव किरणावली। तमोनिरूपणादौ कन्दलीपक्षखण्डनमप्यत्र दृश्यते। अतो लक्षणावली कन्दलीतः प्राक्; किरणावली तु पश्चादिति। व्योमवती आभ्यां पश्चात्तनीत्यत्र न दृढं प्रमाणम्। उदयनाचार्यग्रन्थे व्योमशिवाचार्यकथितस्यानुवादोऽपि सुवचः। राजशेखरनिर्दिष्टक्रमेणैव व्योमवतीकन्दलीकिरणावलीलीलावतीनां प्रादुर्भाव इति स्वरसगत्यनुगुणमेव तु वयं संभावयामः। एवञ्चैषां व्याख्येयभूतं प्रशस्तपादभाष्यमितः कियतः कालात् प्राक्तनमिति परामर्शे भाष्यग्रन्थे कालनिर्णयकांशदौर्लभ्यात् दुर्निर्णयमेव भवति। सर्वथा वैशेषिकदर्शनस्य अस्य भाष्यस्य च मध्ये महान् कालोऽतिपपातेति मन्तव्यम्।

एवं सम्यङ्निष्कृष्टवताऽपि भाष्यकारेण षण्णां पदार्थानां तत्त्वज्ञानं कणादोद्देशसूत्रानुरोधेन प्रतिज्ञातवता अभावविषये उदासि। सूत्रकारस्तु नवमे चतुर्विधमप्यभावं प्रत्यक्षप्रसंगे न्यरूपयत्। कन्दल्यादावपि भावनिरूपणाधीननिरूपणत्वादभावस्यानुद्देशेऽपि अभावो नापलप्य इति व्यक्तमुदितम्। "द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद् भाभावस्तमः" इति तमसो भावातिरिक्ताभावत्वसमर्थनमपि तदैवाञ्जस्यमश्नुते। 'एवम्भूतानेकार्थनिर्धारणं साक्षात् सूत्रपरामर्शेनैव कार्यमस्ति। अतिप्राक्तनी विचारवैखरी साक्षादनुभवनीया चे'ति अक्षरशः सूत्रार्थावधारणमप्यावश्यकम्। इत्थमालोचयद्भिर्नैकशताब्द्यनन्तरभाविना श्रीशङ्करमिश्रेण सूत्राणि व्याख्याय रक्षितानि, यदिदानीमुपस्कारनाम्ना विश्रुतः

प्रथते । अयञ्च, "सूत्रमात्रावलम्बेन निरालम्बेऽपि गच्छतः" इति लिखन् साक्षात् सूत्रव्याख्यानादर्शनमावेदयति । परंतु वृत्तिग्रन्थः कार्त्स्न्येन वाऽन्यथा वा तेनावालोकीति तदीयग्रन्थत एव जानीमः । व्योमवती तेनावलोकितेति न ज्ञायते । अन्यत् सर्वमनेकवारमालोड्यैव व्याख्यामयं वितेने । अथापि दुरवगाहत्वात् सूत्राणां कुत्र किमन्यथा स्यादिति विमृशन्नपि अन्ते आह, "श्लाघास्पदं यद्यपि नेतरेषामियं कृतिः स्यादुपहासयोग्या । तथाऽपि शिष्यैर्गुरुगौरवेण परस्सहस्रैः समुपासनीया" इति ।

अस्माभिश्च बहुकृत्व उपस्कारं पाठितवद्भिः पदेपदे सूत्रार्थवर्णने अनौचित्यमालोचितम् । सूत्रानुपूर्वीशोधने च मनः उद्युक्तमासीत् । भाष्यतद्व्याख्यादिबहुग्रन्थावधानेन यत् विमृष्टम्, तत् वैशेषिकदर्शनविमर्शे प्रथमं प्राकाशि । तदैव च प्रत्यज्ञायि भाष्यतद्व्याख्या-ग्रन्थान्तरादिगतिनिरीक्षणेन तत्रतत्र सूत्रयथावस्थितार्थनिष्कर्षेण ससंगति सावतरणं कृत्स्नं दर्शनमानुपूर्व्या व्याख्येयमिति । गते गणरात्रे तथैव वृत्तिं रसायननाम्नीं विधायान्तेवासिभ्यः प्राचीकशम् ।

चिरप्रनष्टं प्राच्यतर्कशास्त्रं शिरोमण्यादिविरुद्धकल्पनेन पुनरिह प्रादुर्भावितवतां कीर्तिमूर्तीनां श्रीमतां महामहोपाध्यायकुप्पुस्वामिशास्त्रिमहोदयानां लोकान्तरमलङ्कुर्वतामपि नूनमीदृशकार्यनिरीक्षणेनात्मा तर्कगुरूणामिव परमां तृप्तिं प्राप्स्यतीति प्रत्येमि । अस्तु नवीने प्रकाशितं प्रकाशनीयञ्च ; प्राच्ये तु न्यायकुसुमाञ्जलिविस्तरः वैशेषिकरसायनञ्च प्राकाश्यं प्रापिते । शिष्यते पुनर्न्यायदर्शनभाष्यप्रदीपः । तत्प्रकाशनावसरे

समानतन्त्रयोः सौहार्दं भूमिकायामाविश्चिकीर्षन् अधुनैतावति तिष्ठासामि। यथा व्याकरण वेदान्तशास्त्रयः सूत्राण्यपरित्यज्यैवाधीयेते, तथैव वैशेषिकन्यायदर्शनयोरपि मूलग्रन्थयोरध्ययने अवश्यकर्तव्ये तदुपेक्षया कतिपयार्वाचीनग्रन्थमात्राध्ययनपरिपाटी कथमपि कदाचिदुपक्रान्ता। एवं तर्कसंग्रहादिषु किञ्चिदधीत्य वादाहवोपयोगिषु तत्त्वचिन्तामणि-घटकानुमानखण्डैकदेशलेशविषयविशेषचर्चारूपेषु नवीनग्रन्थेषु निष्णातैस्तार्किकैर्बभूवे। ग्रन्थेषु कतिपयमात्राध्ययनेन तार्किकंमन्यता तन्मत-ज्ञानाय वा तत्प्रतिक्षेपिब्रह्मसूत्रतद्भाष्यतद्व्याख्यादिगतिविज्ञानाय वा नैव पर्याप्तेति प्राचीनदर्शनग्रन्थप्रचारः संप्रति संपादितः। मीमांसादर्शनेऽपि सूत्राध्ययनपद्धतिः परिपाल्याऽस्ति। किं बहुना, कतिपयग्रन्थाध्ययनेन पूर्णतत्तन्मतप्रमेयावधारणं मूलग्रन्थाध्ययनत एवेतः संपाद्यम्। एवं दर्शन-विज्ञानमेव साम्प्रतिकसंस्कृतपरिस्थितिपरिशीलने कथञ्चिच्छक्यमपीति सर्वत्र देशे मूलभूतसर्वदर्शनग्रन्थप्रचारसंविधानमेव कार्यमित्यलं बहुना।

तत्र, "कारणायौपद्यात्-घटपटादिबुद्धीनां....."इति सूत्रे दृष्टतया कणादप्रभृति घटपटादिशब्दप्रयोगमपि तथैव रक्षन्त एव सन्तोऽप्यर्वाञ्चो यथावत् सूत्रार्थमपि न ररक्षुरिति निष्कम्पमेतत्। क्वचित् सूत्रक्रमे प्रायः सूत्राणामर्थवर्णनविषये चोपस्कारगतिमुपेक्ष्य, प्रशस्तपादभाष्यादि परि-शील्य, तार्किकसंमतप्रमेयनिकर्षभूमानमप्यनुचिन्त्य, सूत्राणां बहूनामर्थभेदमेवात्र वृत्तौ आदृतवानस्मि। यथाशक्ति वैशेषिकमतासाधरणांशानां स्थापने च मतान्तराक्षेपपरिहारपूर्वकं सूत्रगाम्भीर्यसंरक्षणेन सूक्ष्मया सारदर्शिन्या प्रक्रियया यथावत् सर्वत्र व्यापरितवानस्मि। तत्रतत्र संदर्भ-शुद्धिमपि संपादितवानस्मि। बौद्धादिमतवैलक्षण्येन कार्यकारणभावशोध-

नम्, सामान्यविशेषसमवायस्थापनम्, अतीन्द्रियवाय्वादिनिर्णयः, अनुमानविधा, हेत्वाभासविधा, आत्मन आगमनिरपेक्षं सिद्धिः, अणुस्थापनम्, अवहननादिलौकिककर्मप्रस्तावौचित्यम्, यमनियमादियोगाङ्गनिरूपणैदम्पर्थम्, परमाणुपाकः, परिमाणभेदः, निर्विकल्पादि, योगिप्रत्यक्षादि, अभावगतिः, शब्दादेरनुमानत्वम्, सुखदुःखविवेकः, आम्नायप्रामाण्यमितीदृशेषु विषयेषु, किं पृथगुक्त्या, पदेपद एव तत्त्वार्थशोधनश्रद्धया सूत्रस्वारस्यात्यागेन यदत्रापूर्वं व्युत्पादितवानस्मि, तत्र तार्किकाः सहृदयाः सर्वेश्वरश्चैव प्रमाणमिति तेभ्य इदं सरसायनं दर्शनं सरसमुपहृत्य शास्त्रयथार्थप्रचारः परमास्तिकधनिकसहृदयपरमोदारपुरुषपरिषदायत्त इति तदभ्युदयेन सह वेदवैदिकप्रचारमनारतमभिकांक्षन्नस्मि ।

अन्धकारपरीतेऽस्मिन् अर्थान् अनधिजग्मुषि ।
कणादः कल्पयाञ्चक्रे जगत्यौलूक्यदर्शनम् ॥

मद्रनगरी.
१–२–'५८

उत्तमूर् ति॰ वीरराघवाचार्यः

---

# सूत्रयाथात्म्यशोधनम्

औत्तरो महाशयो विन्ध्येश्वरीप्रसादशर्मा, सूत्रपाठस्यैकं प्रायः शुद्धं पु पुस्तकं स्वनिकटे स्थितमावेदयत्; अदर्शयच्च तत्रोपस्कारग्रन्थे च प्रत्यध्यायं सू ख्याभेदम्। किरणावलीग्रन्थमुद्रणे आदौ तन्मुद्रितसूत्रपाठस्तु न तदनुगु कन्दलीकिरणावल्यादावन्तःप्रविश्य सूत्रवैलक्षण्यनिर्धारणे तु नैव स ख्याप्रि अतस्तत्कृतः प्रत्यध्यायं सूत्रसंख्यानिर्देशो नाक्षेपं विना समादरणीयोऽस्ति। त पाठभेदस्तु क्वचिदस्मदनुकूल इति अधस्तात् दर्शयिष्यते। सूत्रसंख्या तावदे चिदध्यायेषु भिद्यते—

1. अध्याये, उपस्कारे 48 सूत्राणि, रसायने 49 अथवा अ. उ. 68, र. 69 अथवा 68, 3. अ. उ. 24 र. 25, 4. 44, र. 45, 5. अ. उ. 53, र. 54.

आनुपूर्वीसाम्येऽपि क्वचित् एकसूत्रद्विधाकरणात् सूत्रद्वयैकीकार ध्येश्वरीप्रसाद निर्दिष्टसंख्यायां न्यूनाधिकभावः संपद्येत।

तद्दर्शितपाठभेदश्चैवम्—

१-८. धर्मविशेषसूतात्-(पदार्था-नामिति पदं न)
१-१८. द्रव्याश्रयो—न कारण—
१-१९. संयोगविभागयोः
१-२३. (न द्रव्याणां कर्म व्यतिरेका-दिति एकसूत्रम्)
-९. गुणकर्मसु भावात्
१-२. स्निग्धाश्चेति चकारोऽधिकः।
-१०. शब्दलिङ्गाविशेषादिति सूत्रं न।
-१. —गन्धाप्रादुर्भाव—
-४. तेजस्युष्णता
२४. नापि कर्माचाक्षुषत्वात् प्रत्ययस्य
३१. संयोगाद्विभागाच्छब्दाच्च—
१. —चैकं मनः
१०. यदृष्टं प्रत्यक्षमहं—
१३. — [illegible]

५-१-१५. —सूच्यभिसर्पणमदृष्टकारणम्
५-२-१. नोदनादभिघातात्—
५-२-५. नाडपवायुसंयोगात्—
५-२-८. —तेजसः संयोगात्
५-२-१७. (कायकर्मणाऽऽत्मकर्म व्याख्या तमित्येदि सूत्र
६-१-१५. —गुणानामात्मान्तरे (रेषु) अकारणत्
७-१-१६. —गुणैर्गुणाः—
७-१-२२. अविद्या विद्यालिङ्गम्
७-२-१८. शब्दार्थावसंबद्धौ
७-२-२४. (कर्मभिः कर्माणि, गुणैर्गुणा इति सूत्रद्वयं नास्ति
८-१-१२ (—प्रत्यक्षमितिपदं नास्ति)
९-२-४. (—करणमितिपदं नास्ति)
१०-२-८ [illegible]

एतत्पाठभेदसूचीतो ग्राह्या अनेके प्रामाणिका अंशाः गृहीताः अन्यच्च सुबहु रसायने अपूर्वं दर्शितमधोनिर्दिष्टपाठभेदतः सुगमम्—

21. पुटे 1-1-11 भविष्यति पटः—इति सूत्रम्-संयोगभाष्यकन्द
परामर्शमूलकमिति स्पष्टं वैशेषिकविमर्शे ।

21. पुटे 1-1-12 तथाभवतीति— ,, ,,

25. पुटे 1-1-17 क्रियावत् गुणवत्— ,, भाष्यटीकाद्यनुसारा

53 पुटे 2-1-2 रूपरस—स्निग्धाश्च—अठग्रन्थकन्दलीकिरणावली

53 पुटे 2-1-4. वायुः स्पर्शवान्— ,, वायुग्रन्थ- ,,

54. पुटे 2-1-6 सर्पिर्जतु-पार्थिवानां- ,, पृथिवीग्रन्थ- ,,

5॰. पुटे 2-1-7 त्रपु—तैजसानां— ,, ,,

78. पुटे 2-2-4 तेजस्युष्णता ,, विन्ध्येश्वरीप्रसादपाठादि

80. पुटे 2-2-6 अपरस्मिन् परं युगपद्युगपत् ,, सर्वार्थसि
कन्दल्यादितः । उपस्कारोऽप्यनुकूल इव ।

90. पुटे ..-2-18 दृष्टञ्च दृष्टवत् दृष्टा ,, हेत्वाभासकन्दल्यादि

91. पुटे 2-2-19 यथादृष्टमयथादृष्टञ्चोभयथादृष्टत्वात ,, ,,

94. पुटे 2-2-22 तस्मिन् द्रव्यं गुणः कर्मेति संशयः ,, ,,
1-1-5 न्यायभाष्यतोऽ

96. पुटे 2-2-25 नापि—प्रत्ययस्य ,, वि-प्र-पाठात् उपस्कार

102. पुटे 2-2-32 संयोगाद्विभागाच्छब्दाच्च ,, अत्र विभागा
चकाररहितपाठः प्राच्यसूत्रपाठा

102 पुटे 2-2-33 लिङ्गाच्चानित्यः अत्र अन्ते 'शब्द' इति नास्ति

103. पुटे 3-1-11 अभूतं भूतस्य ,, अत्र प्राक् 'विरोधि'इति पदं नास्तीति भाष्यव्योमवतीकन्दल्यादितः ।
124. पुटे 3-2-3 प्रतिशरीरमेकं मनः ,, अत्र व्याख्यातः प्राच्य-सूत्रपाठाच्च विमृश्यमस्ति ।
128. पुटे 3-2-10 यद् दृष्ट ,, विन्ध्येश्वरीप्रसादपाठादितः ।
139. पुटे 3-2-20 नानात्मानो व्यवस्थातः ,, कन्दलीतः, नाना वेदान्तग्रन्थतः, उपस्कारतोऽपि ।
145. पुटे 4-1-4 अनित्यमिति च-प्रतिषेधाभावः- ,, शाङ्करसूत्रभाष्यादितः (2-2-15)
146. पुटे 4-1-5 अविद्या च ,, ,, ,,
148. पुटे 4-1-7 अद्रव्यद्रव्यत्वात् परमाणावनुपलब्धिः ,, न्यायवार्तिकात (2-1-3.)
149. पुटे 4-1-8 ........... ,, अत्र 'सत्यपि द्रव्यत्वे महत्त्वे' इति नास्ति। न्यायवार्तिकात् (2-1-3)उपस्कारादितश्च
152. पुटे 4-1-43 अरूपिषु अचाक्षुषत्वात् व्योमवत्यां पञ्चम्यन्तपाठः ।
167. पुटे 5-1-15 मणि—कारणकम्(कारितम्) वि-प्र-कोशपाठात्
169. पुटे 5-2-1 नोदनाभिघातात्-(नोदनादभिघातात्) ,, ,,
170. पुटे 5-2-7 नाड्यवायु ,, उपस्कारसंमतिरपि। नाड्यःइति पा•
173. पुटे 5-2-13 अग्नेः—कर्मेत्यदृष्टकारितानि ,, श्रीभाष्यन्यायकुलिशादेः
177. पुटे 5-2-17 कायकर्मणाऽऽत्मकर्म व्याख्यातम्— ,, यथावस्थितोपस्कार-प्राक्तनसूत्रपाठादितः ।
179. पुटे 5-2-19 तदभावे—स मोक्षः ,, प्राक्तनपाठ-उपस्कारात्•

181. पुटे 5-2-20 द्रव्यगुण-भाभावस्तमः. कन्दल्यादिव्याख्यानुसारात्

192. पुटे 6-1-5 आत्मान्तर—त्मान्तरगुणेष्वकारणत्वात् ,,
कन्दल्याद्यनुसारात् । वि.प्र. पाठोऽपि गमक इव ।

209. पुटे 7-1-1 पृथिव्यादिरूप—.व्योमवत्यां पृथिव्यादीति विनापाठः

210. पुटे 7-1-2 एतेन नित्येष्वनित्यत्व— ,, व्योमवती—
उपस्कारोद्धृतवृत्त्यादितः ।

215. पुटे 7-1-8 अविभुनि—वात् । ,, व्योमवतीदर्शितमिदम् ।

220. पुटे 7-1-10 कारणवहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च महत्
,, शाङ्करसूत्रभाष्यात् (2-2-11)

227. पुटे 7-1-22 अविद्या[च]विद्यालिङ्गम् ,, (वि.प्र.) चकारो न

230. पुटे 7-1-20 कारणे कालाख्या । कालभाष्यकन्दल्यु-
पस्काररादेः ।

235. पुटे 7-2-7 कार्ये—पृथक्त्वे न विद्येते— ,, व्योमवतीतः ।

242. पुटे 7-2-18 शब्दार्थावसंबद्धौ ,, वि-प्र. पाठात् ।

245. पुटे 7-2-22 कारण — परत्वापरत्वे. कन्दल्युपस्कारादेः ।

246. पुटे 7-2-24,25 कर्मभिःकर्माणि,गुणैर्गुणाः ,, प्राक्तनपाठे नेति ।

254. पुटे 8-1-9 समवायिनः....एते ,, अत्र एते इति पदपाठचिन्ता ।

261. पुटे 8-2-6 तथाऽऽप.... ,, एतदुपरि व्योमवत्यां सूत्रत्रयम्

271. पुटे 9-1-11 आत्मन्यात्म.... अत्रात्मनीति पदं न न्यायभाष्ये ।

272. पुटे 9-12-1 तथा-प्रत्यक्षम् ,, अत्र प्रत्यक्षपदं न प्राच्यसूत्रपाठे ।

306. पुटे 10-2-9 अस्मद्बुद्धिभ्यो लिङ्गमृषेस्तद्वचनादाम्नायप्रामाण्यम् ,,

# विषयसूची

1-1. उपक्रमस्था चतुःसूत्री एतद्दशाध्याय्युपजीव्या । ततः प्रथमाह्निकार्थस्तावत् सर्वपदार्थोद्देशपूर्वकमर्थशब्दाभिधेयानां साधर्म्य-वैधर्म्याभ्यां सह व्युत्पादनम् ।

1-2. अर्थातिरिक्तानामुद्दिष्टानां पदार्थानां (त्रयाणां) यथावन्निरूपणम् ।

2-1. भूतानां तत्तद्गतविशेषगुणवत्त्वेन लक्षणम् । तत्राप्रत्यक्षतया वायोः आकाशस्य च परीक्ष्य स्थापनम् ।

2-2. तत्तदसाधारणगुणवत्त्वेन भूतकथनम् । मध्ये कालदिशोरपि लक्षणकथनं प्रसङ्गात् ।

3-1. आत्मनां चेतनशब्दवाच्यत्वात् चैतन्यगुणेनैव तत्स्थापनम् । तच्छेषतयाऽत्रैव हेतुहेत्वाभासविवेचनम्, आत्मस्थापनफलत्वात् अनुमानप्रमाणनिरूपणस्य ।

3-2. मनस्तत्त्वविवेचनपूर्वं चैतन्यातिरिक्तानामात्मसाधकानामंशानां प्रतिबोधनम् ।

4-1. भूतेषु नित्यानित्यविवेकः । परमाणुसाधनप्रपञ्चनम् ।

4-2. कार्यद्रव्य—शरीरनानात्व—अयोनिजशरीरनिरूपणम् ।
अथ कर्मनिरूपणार्थाध्यायद्वये—

5-1. शरीरातिरिक्तेनात्मना निःश्रेयसार्थाय कर्तव्येषु कर्मसु प्रसिद्धोत्क्षेपणादिलौकिकशारीरकर्मव्युत्पादनमुखेन सुग्रहकारणककर्मनिरूपणम् ।

5-2. दुर्ग्रहकारणक (भूकम्पादि) लौकिककर्मनिरूपणम् ।

6-1. वैदिककर्मनिरूपके षष्ठे, प्रथमं वेदप्रामाण्यस्थापनपूर्वं दानप्रति-ग्रहादिमुखेन सर्वं यमरूपयोगाङ्गनिरूपणम् ।

6-2. वर्णाश्रमधर्मादिवर्णनमुखेन नियमरूपयोगाङ्गनिरूपणम् ।

अथ गुणनिरूपणार्थाध्यायचतुष्टये—

7-1. एकद्रव्यसापेक्ष (रूपरसगन्धस्पर्शपरिमाण) बाह्यगुणनिरूपणम् ।

7-2. अनेकद्रव्यनिरूप्यगुणनिरूपणम् ।

8-1. बाह्यभावपदार्थविषयकप्रत्यक्षनिरूपणम् ।

8-2. तत्कारणभूतानां विषयेन्द्रियाणां निरूपणम् ।

9-1. उक्तावशिष्ट(अभावलौकिक-योगादिजन्यालौकिक)प्रत्यक्षनिरूपणम्

9-2. प्रत्यक्षभिन्न (लैङ्गिक-स्मृति-स्वप्नादि) सर्वज्ञाननिरूपणम् ।

10-1. सुखदुःखनिरूपणम् ।

10-2. द्रव्यगुणकर्मणां कारणत्ववैविध्यप्रदर्शनपूर्वकः शास्त्रोपसंहारः ।

"अतिविरसमसारं मानवार्ताविहीनं प्रविततबहुवेलप्रक्रियाजाल-दुःस्थम् । उदधिसममतन्त्रं तन्त्रमेतद् वदन्ति" इति किरणावल्यनुदितानां दोषाणामनास्पदमिदं दर्शनमिति यथेदं निरूपितं भवेत्, तथाऽस्मदीयंविमर्शग्रन्थतो विज्ञेयमिति आह्निकार्थसारमात्रसंजिघृक्षया, ग्रन्थमध्य एव प्रतिपाद्यविषयः प्रतिपुटमुपरि, वाचकग्रहणसौकर्याय पृथक्पृथग्दर्शितोऽस्तीति च अत्र संग्रहत एव एवं विषयसूची न्यबन्धि ॥ एकैकाह्निकावान्तरार्थविभागः तत्तदवसानस्थया रसायनकारिकयाऽपि ग्राह्यः । तत्तद्विषयनिरूपणपौर्वापर्यौचित्यादिकमपि अस्मदीयवैशेषिक-दर्शनविमर्शतो विज्ञेयम् ।



श्रीः

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीगुरुभ्यो नमः

# वैशेषिकदर्शनम्

## वैशेषिकरसायनसहितम्

---

यन्मुख्यद्रव्यभव्यं यदिह गुणगुणोद्भासि निर्धूतहेयं
यस्यैतत् कर्म सर्वं यदपि सुरनराद्यात्मसामान्यसेव्यम् ।
इष्टैर्जुष्टं विशेषैर्वृषगिरिसमवायेन लक्ष्मीपदं तत्
सर्वार्थप्रापकोऽजःकणचरणसरोजन्म धाम प्रपद्ये ॥ १ ॥

---

1. धाम—परं ब्रह्म, प्रकृतवैशेषिकदर्शनञ्च । तत्र ब्रह्म मुख्यद्रव्येण शुद्धसत्त्वेन भव्यम्; यस्यैतत् सर्वं जगत् कर्म; 'यस्य वैतत् कर्मे'ति जगद्वाचित्वाधिकरणश्रुतिः स्मर्तव्या । सुरनराद्यात्मसामान्यं-सर्वे आत्मानः । इष्टविशेषाः—अप्राकृत-भोग्य—भोगोपकरण महिषीपरिजनादयः । वृषगिरिसमवायेन—वेङ्कटाद्रिनित्यवासेन तत्प्रीतलक्ष्मीयुक्तम् । सर्वपुरुषार्थप्रदः प्रभावलेशोऽपि यस्य तादृशचरणसरोजविशिष्टञ्च । वैशेषिकदर्शनं तु द्रव्यगुणकर्मादि पदार्थयुक्तं निर्धूतहेयम्-अप्रामाणिकपरसंमत-पदार्थान्तरनिषेधकं सुरत्वनरत्वादिजातिप्रतिपादकं परमाणुगतविशेषबोधकं वृषगिरि-धर्मवचसि 'अथातो धर्मं व्याख्यास्याम' इत्येवम्भूते स्थितम् समवायाख्येन पदार्थेन च शोभमानम् अभावपर्यन्त सर्वपदार्थप्रतिपादनसामर्थ्यसंपन्नं कणादाख्यात् सरस उत्पन्नञ्च । प्रपद्ये-प्रकर्षेण प्राप्नोमि ।

श्रीः

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीगुरुभ्यो नमः

# वैशेषिकदर्शनम्

## वैशेषिकरसायनसहितम्

---

यन्मुख्यद्रव्यभव्यं यदिह गुणगुणोद्भासि निर्धूतहेयं

यस्यैतत् कर्म सर्वं यदपि सुरनराद्यात्मसामान्यसेव्यम् ।

इष्टैर्जुष्टं विशेषैर्वृषगिरिसमवायेन लक्ष्मीपदं तत्

सर्वार्थप्रापकं जः कणचरणसरोजन्म धाम[1] प्रपद्ये ॥ १ ॥

---

1. धाम—परं ब्रह्म, प्रकृतवैशेषिकदर्शनञ्च । तत्र ब्रह्म मुख्यद्रव्येण शुद्धसत्त्वेन भव्यम्; यस्यैतत् सर्वं जगत् कर्म; 'यस्य वैतत् कर्मे'ति जगद्वाचित्वाधिकरणश्रुतिः स्मर्तव्या । सुरनराद्यात्मसामान्यं-सर्वे आत्मानः । इष्टविशेषाः—अप्राकृतभोग्य—भोगोपकरण महिषीपरिजनादयः । वृषगिरिसमवायेन—वेंकटाद्रिनित्यवासेन तत्प्रीतलक्ष्मीयुक्तम् । सर्वपुरुषार्थप्रदः प्रभावलेशोपि यस्य तादृशचरणसरोजविशिष्टञ्च । वैशेषिकदर्शनं तु द्रव्यगुणकर्मादि पदार्थयुक्तं निर्धूतहेयम्-अप्रामाणिकपरसंमतपदार्थान्तरनिषेधकं सुरत्वनरत्वादिजातिप्रतिपादकं परमाणुगतविशेषबोधकं वृषगिरिधर्मवचसि 'अथातो धर्मं व्याख्यास्याम' इत्येवम्भूते स्थितम् समवायाख्येन पदार्थेन च शोभमानम् अभावपर्यन्त सर्वपदार्थप्रतिपादनसामर्थ्यसंपन्नं कणादाख्यात् सरस उत्पन्नञ्च । प्रपद्ये-प्रकर्षेण प्राप्नोमि ।

सूत्रव्याख्यानभङ्गीं जहदपि निपुणं मेयनिष्कर्षि भाष्यं
प्राचीनं यत् प्रशस्तप्रथितमिदम् इदम्व्याकृतीश्चावलम्ब्य ।
प्राज्ञोत्तंसप्रणीतेऽप्यपि सरसमशेषार्थवर्षिण्यनेकां
वीक्ष्योपस्कार एवं क्षति[2]महमधुना व्याचिकीर्षामि शास्त्रम् ॥२॥

अत्र लक्ष्मीहयग्रीवो गुरवश्च गुणोज्ज्वलाः ।
अधीतानि च शास्त्राणि प्रसीदन्त्वाश्रिते मयि ॥ ३ ॥

नातीवास्मि निरालम्बो न च सर्वं सुनिश्चितम् ।
अद्य यावद्विमृष्टं तु नान्तर्जरयितुं क्षमम् ॥ ४ ॥

वैशेषिकरहस्यार्थाः मतान्तरविलक्षणाः ।
सूत्रैर्व्युत्पाद्य रक्ष्यन्ते शैलीशुद्धिश्च दर्श्यते ॥ ५ ॥

अथ तत्रभवान् प्रत्यक्षितपदार्थतत्त्वः परमकारुणिकः कणादो महर्षिरास्तिकतार्किकान् अनुजिघृक्षुः अशेषपदार्थतत्त्वज्ञप्तये विंशत्याह्निकं दशाध्यायं वैशेषिकं नाम दर्शनं प्रणिनाय; यस्येदमादिमं सूत्रम्—

**१. अथातो धर्मं व्याख्यास्यामः ॥**

अथशब्द आनन्तर्ये प्रसिद्धः; अतश्शब्दश्चैतच्छब्दप्रकृतिकः समनन्तरोपस्थितस्य हेतुत्वे । अत्र अथशब्दस्य शिष्यप्रश्नानन्तर-

---

2. एवं सूत्रपाठभेदोऽपि प्रामाणिको बहुलमत्र द्रष्टव्यः । अस्मदीये वैशेषिकदर्शनविमर्शे यत् प्रागेव न्यवेदि, ततोऽधिकं विज्ञेयमप्येतदुपोद्घाते द्रष्टव्यम् । उपस्कारसारोऽपि लिख्यते ।

उपस्कारसारः सू. I. अथ—शिष्याकांक्षानन्तरम्, अतः—सदन्तेवास्युपसंपत्तेः, धर्मं व्याख्यास्यामः । अथेति मङ्गलार्थं वा ।

मित्यर्थः । यदाह श्रीपार्थसारथिमिश्रो मीमांसान्यायरत्नाकरे, 'यथा शास्त्रान्तरेषु अथातो धर्मं व्याख्यास्याम इत्यादिषु शिष्यप्रश्नानन्तर्य-रूपसंबन्धोऽभिधीयते' इति । अत इत्यस्य, 'यतः शुश्रूषवोऽनसूयवश्चा-न्तेवासिन उपसेदुः, अतः' इत्यर्थ इति किरणावलीत एव ज्ञायते । ननूपसत्तिपूर्वकशिष्यप्रश्नानन्तर्यपरेणाथशब्देनैवोपसत्तेर्हेतुत्वलाभात् अत इति व्यर्थमिति चेन्न—उपसन्नानां शिष्याणां सत्पात्रत्वादित्यस्य अतश्शब्दविवक्षितत्वात् । एवं प्रश्नानन्तरं पात्रत्वाद्व्याख्यास्याम इति वदन्, "नापृष्टः कस्यचिद् ब्रूयात् न चान्यायेन पृच्छतः', 'नापात्रे शास्त्रमुत्क्षिपेत्' इति शास्त्रार्थं बोधयन्, एवमिदं दर्शनं रक्षणीयमिति शिष्यान् शिक्षयति । यद्वा अतश्शब्देनैव सर्वलाभात् अथशब्दो न किञ्चिदर्थवाची, केवलं मङ्गलार्थं प्रयुक्तः ; 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ' इति मङ्गलरूपत्वस्मरणात् । अकारौकारयोः कण्ठस्थानकत्वात् कण्ठं भित्त्वा विनिर्यातावित्युच्यते' इति मैथुरानाथः । कण्ठं भित्त्वेत्यनेन ततः पूर्वं शब्दानुच्चारणसूचनात् ब्रह्मणापि प्रारम्भे पुरा तदा तदाऽनयोः प्रयुक्तत्वान्मङ्गलत्वं ज्ञेयमिति ज्ञाप्यते । प्रथमं तदुच्चारणपूर्वमारब्धं चतुर्मुखकार्यं सर्वमविच्छिन्नं प्रवहतीति च तस्य मङ्गलत्वम् । अवश्यञ्च अनवाप्तविघ्नावकाशेनाप्यास्तिकाग्रेसरेण अन्तेवासिशिक्षणार्थं वा मङ्गलं कर्तव्यम्, अविघ्नप्रचारातिशयाद्यर्थं च निबन्धनीयमिति ।

वस्तुत एवं शब्दस्वरूपतो मङ्गलात्मकस्सन्नेवायमथशब्दो यदि वाक्यार्थान्वयिकिञ्चिदर्थपरोऽपि स्यात्, तदा भवत्यौचित्यातिशय इति

तदर्थचिन्तायाम् इष्टदेवतानमस्कारादिमङ्गलाचरणानन्तरमित्यर्थमपि बोधयितुमर्हति। उक्तञ्च केश्चित् (व्योमवत्यां), 'सूत्रेऽथशब्दोऽप्यानन्तर्ये वर्तत इति अन्यस्यासंभवान्नमस्कारानन्तरमिति लभ्यते। स च ज्ञानप्रस्तावादीश्वरस्यैवे'ति।

अथात्र सूत्रे धर्मव्याख्यानमेव प्रतिज्ञायते; न पदार्थतत्त्वनिरूपणम्। एवञ्च निरूपयितव्यपदार्थत्यागेन धर्मः किमिति व्याख्यायत इति शिष्याः शङ्केरन्निति तत्परिहाराय अतश्शब्दप्रयोग इत्युक्तौ प्रयोजनवत्तरं स्यादतःपदम्। एवञ्च वक्ष्यमाणतत्त्वज्ञानोपयोगित्वादिति तदर्थो वाच्यः। अतोऽतःपदेन शिष्यप्रश्नरूपार्थालाभादथशब्दस्य पूर्वोक्तशिष्यप्रश्नानन्तर्यमेवार्थोऽस्त्विति चेत — सत्यम्, तदेव सुवचम्। धर्मव्याख्यानोपयोग्येव चातश्शब्दपरामृश्यम्। एवमपि, अतः— तत्त्वसाक्षात्कारस्य तापत्रयाभिहतशिष्यापेक्षितत्वादित्यर्थवर्णनेऽपि अपेक्षिततत्त्वज्ञानोपयोगित्वाद्धर्मो व्याख्यायत इत्युक्तं भवतीति नमस्कारानन्तर्यपरत्ववादिनामाशयः। ननु नमस्कारादेः प्रागाचरितत्वे तत एव मङ्गलसिद्ध्या किमिति पुनरथशब्दो मङ्गलार्थ इति चेन्न। शिष्यशिक्षार्थं नमस्कारानन्तर्ये बोधनीये पदान्तरेण तद्बोधनापेक्षया अथशब्देन तद्बोधने ह्यर्थादधिकमङ्गलसिद्धिरिति।

मङ्गलं नाम निर्विघ्नपरिसमाप्त्युद्देशविहितव्यापारः कायिको वाचिको मानसो वा। तीर्थस्नान-हिरण्यदानादेरपि विघ्ननिवृत्त्यनुकूलतयाऽर्थात् समाप्तिहेतुत्वेऽपि तदुद्देशविहितत्वाभावान्न मङ्गलत्वेन प्रसिद्धिः। यद्यपि समाप्तिकामो मङ्गलमाचरेदिति वाक्ये समाप्तिसाधन-

व्यापारविशेषत्वेन रूपेण तस्य मङ्गळपदबोध्यत्वं न सम्भवति । तद्रा-वयबलादेव साधनतायाः ज्ञास्यमानत्वात्--तथापि समाप्तिकामो देवतान-मस्कारं कुर्यादिति रीत्या प्रातिस्विकरूपेण विधिकल्पनान्न दोष इति मणिकृतः । मङ्गळत्वं तु न जातिः । प्रारम्भगतनास्तिकशब्दकर्मज्ञानादि-वृत्तितया शब्दत्वादिना साङ्कर्यात् । समाप्तिमङ्गळयोः कार्यकारणभावस्तु मङ्गळपदवाच्यत्वेन सर्वानुगमेन वा स्यात्, यथायथं पृथगेव वा । "समाप्तिश्च निष्पत्तिः, न तु ध्वंसः ; ग्रन्थः समाप्तः इत्यस्य ग्रन्थो ध्वस्त इत्यर्थाभावात्" इति प्राञ्चः । सा च चरमवर्णोत्पत्तिर्ग्रन्थविषये । यागादौ च तत्तद्घटकान्तिमकार्योत्पत्तिः । न च समाप्तिं प्रति मङ्गळस्य कारणत्वे स्वतस्सिद्धविघ्नविरहस्थले मङ्गळानाचरणेऽपि तदुत्प-त्त्या व्यभिचार इति शङ्क्यम्---विघ्नवत्पुरुषप्रारब्धकार्यसमाप्तिं प्रत्येव मङ्गळकारणताया विवक्षितत्वात् । तर्हि विघ्नविरहस्थलेऽपि कैश्चित् किमिति मङ्गळमाचर्यत इति चेत्-विघ्नविरहाज्ञानेन विघ्नशङ्कया कैश्चित् ; विज्ञानिभिस्तु लोकसङ्ग्रहार्थमिति गृह्यताम् । यदि तु मङ्गळं विघ्नध्वं-सद्वारेव भविष्यद्विघ्ने पुंसि विघ्नप्रागभावपरिरक्षणेनापि समाप्तिहेतुरिति विभाव्यते, तर्हि संभवद्विघ्नपुरुषप्रारब्धसमाप्तिं प्रति मङ्गळं कारणमिति कार्यकारणभावो वाच्यः । तत्र क्वचिद्विघ्नध्वंसः, अन्यत्र विघ्नप्रागभाव-रक्षणं च व्यापारः। स च व्यापारः मङ्गळेन बहुक्षणसाध्यनानाव्यापारस-मुदायात्मकेन न साक्षात् क्रियते ; किन्त्वपूर्व-देवताप्रसादद्वारेत्यन्यदेतत् ।

अथ मङ्गळं विना तीर्थस्नानादिनापि विघ्नविनाशनात् मंगळस्य कारणत्वं व्यभिचरितमिति चेत् -न--तादृशस्थले ग्रन्थारम्भसमये विघ्ना-

भावात् । विघ्नवत्पुरुषप्रारब्धकार्यसमाप्तिं प्रत्येव तत्कारणताया उक्तत्वात् । ग्रन्थारम्भात् परं तीर्थस्नानादिकरणे च प्राक्कृतमङ्गलेनैव तादृशविघ्नविनाशः । किञ्च किं व्यतिरेकव्यभिचारात् कारणत्वं दुर्ग्रहमित्युच्यते, किं वा नियतपूर्ववृत्तित्वरूपकारणत्वस्यैव भङ्ग इति ? नाद्यः, न ह्यत्रान्वयव्यतिरेकदर्शनेन कारणत्वमनुमीयते ; किंत्वागमवशात् कारणत्वं बुध्यत इति । अतो न दुर्ग्रहत्वम् । नान्त्यः ; अनुमानावगम्यकारणत्वस्थल एव हि नियतपूर्ववृत्तित्वरूपं कारणत्वमिष्यते । आगमावगतकारणत्वस्वरूपं तु सहकारिवैकल्यप्रयुक्तकार्याभावकत्वं सहकारिकलापविशिष्टस्वनियतोत्तरवृत्तिकार्यकत्वं वा । यद्वा यत्र तृणारणिमणिस्थल इव कार्ये वैजात्यं न दृश्यते, तत्र वैकल्पिकानेककारणस्थले तावत्कारणाभावे कार्याभाव इत्येव व्यतिरेकांशो निरूप्यः । यथा अवहनन-अश्मकुट्टन नखविदलनानामभावे वैतुष्याभाव इति तेषां कारणत्वम् । अत इह तीर्थस्नानहिरण्यदानाद्यभावविशिष्टमङ्गलाभावे विघ्नध्वंसाभाव इति मङ्गलस्य कारणत्वमिति । तथाच यथा तत्सत्त्वे तत्सत्त्वमित्यन्वयस्थले तदितरयावत्कारणसत्त्वे तत्सत्त्वे कार्यसत्त्वमित्यन्वयशिक्षा, तद्वत तत्तुल्यवैकल्पिकहेतुत्वाभिमतवस्त्वभावविशिष्टतदभावे कार्याभाव इति व्यतिरेकशिक्षाऽपि सुकरेत्यलम् ।

तत् सिद्धं मङ्गलस्य ग्रन्थादौ कर्तव्यत्वम् । अतो मङ्गलरूपमथशब्दं प्रयुञ्जान एव दर्शनं प्रारभमाणो वक्ष्यमाणार्थोपयोगितया धर्मव्याख्यानमादौ प्रतिजज्ञ इति ॥ १ ॥

उपसन्ना इमेऽन्तेवासिनः, 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयत'इत्यादिशास्त्रतर्कपर्यालोचनया धर्मा-

णामनर्थमिश्रात्यल्पफलमात्रहेतुतां निश्चित्य ततो विरज्य तत्त्वज्ञानेदमपराः तान् स्वरूपतोपि मा परित्याक्षुरिति धर्मव्याख्यानं प्रतिज्ञाय तल्लक्षणवर्णनमुखेन तेषामत्याज्यत्वमुपदिदिक्षुराह—

**२. यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ।**

अभ्युदयः ऐहिकामुष्मिकफलम् । निःश्रेयसमपवर्गः । तयोर्यतो निष्पत्तिः, स धर्मः । अभ्युदयनिःश्रेयसान्यतरसाधनत्वं धर्मत्वम् । अभीष्टसाधनं धर्म इति अनुगतलक्षणे वक्तव्ये एवं कथनम, अन्तेवासिभिरभ्युदयसाधनत्वस्य ज्ञातत्वात्, न केवलमभ्युदयसाधनं धर्मः, किंतु निःश्रेयससाधनमपीति तेषां प्रतिबोधनार्थम् । तत्राभ्युदयसाधनं ज्योतिष्टोमादि; निःश्रेयससाधनमात्मध्यानम् ! एवं यदेवाभ्युदयसाधनम्, तदेव निःश्रेयससाधनमपि प्रयोगभेदेन; "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन", "क्रियावानेष ब्रह्मविदां वरिष्ठः"इत्यादिश्रवणात् । अतोऽभ्युदयस्यानर्थरूपतया हेयत्वेऽपि तद्धेतवो धर्मा न हातुमर्हाः, तेषामेव फलाभिसन्धिं परित्यज्य भूयिष्ठमनुष्ठेयत्वात् । एवं विरक्तैरनुष्ठीयमान एव धर्मो निवृत्तिधर्म इत्युच्यत इति । अत्र विवक्षितं च लक्षणमदृष्ट-यागादिरूपसर्वधर्मसाधारणमिति ध्येयम् । अत्राभ्युदयः—तत्त्वज्ञानमिति व्याख्यानं न स्वरसम् । उक्तरीत्या सर्वधर्मलक्षणपरत्वे संभवति सूत्रस्य धर्मविशेषपरतया संकोचो न युक्त इति ॥ २ ॥

अत्राभीष्टसाधनत्वं धर्मत्वमित्यनुगतलक्षणं सिध्यति । तत् रागप्राप्ते भोजनादावतिप्रसक्तम् । शाक्यजैनादिभिरुपदिश्यमाना अपि

---

उप. सू. २. अभ्युदयः – तत्त्वज्ञानम्, स्वर्गादि वा ।

तर्हि धर्मा भवेयुरिति शङ्काऽपि स्यात्। कर्मकाण्डे क्षुद्रफलसाधनत्वेनैव विहितानां धर्माणां निःश्रेयससाधनत्वे च किं प्रमाणमितीमेऽन्तेवासिनोऽपि अनुयुञ्जीरन्नित्यमिसन्धायाह—

**३. तद्वचनादाम्नायस्य प्रामाण्यम् ॥**

तस्य धर्मस्य वचनात् बोधनादाम्नायस्य श्रुतिस्मृतिलक्षणस्य प्रामाण्यम्। एतदुक्तं भवति—शाक्यादिवाक्यानां प्रामाण्याभावात् तद्बोधितेषु कर्मसु तदुक्ताभीष्टसाधनत्वमेव नास्तीति न तत्रातिव्याप्तिः शंक्या। भोजनादेर्लोकावगतत्वादाम्नायप्रमाणकत्वाभावान्न तत्रातिव्याप्तिः, आम्नायप्रमिताभीष्टसाधनताकत्वं धर्मत्वमित्येव लक्षणनिष्कर्षात्। निःश्रेयससाधनत्वेऽपि न संदेग्धव्यम्, अभ्युदयसाधनत्वस्येव तत्साधनत्वस्याप्याम्नायत एव प्रमितत्वात्। न च विविदिषन्तीत्यादीनां वाक्यानां तत्त्वज्ञानिभिरपि कर्म न त्युत्यजमित्येवंरीत्या केवलमर्थवादत्वकल्पनया कर्मकाण्डोक्तक्षुद्रफलार्थतयैव कर्मविनियोजकः कृत्स्न आम्नाय इति मन्तव्यम्, तथाऽऽम्नायस्यापार्थकल्पनानुपपत्तेः। विनिगमनाविरहेण विपरिवर्तस्याप्यापत्तेः। अत आम्नायस्याभ्युदयनिःश्रेयससाधनधर्मवचनादेव प्रामाण्यमिति ॥

इदमप्यत्र निगूढम्—उपनिषदां कर्मभागशेषत्वाभावेऽपि, 'तत्त्वनिरूपणपरतया प्रामाण्यमिति, न तासां कार्यान्तरे कर्मविनियोगे तात्पर्यम्; बहुशः कर्मनिन्दनादित्युत्प्रेक्ष्य निःश्रेयससाधनत्वं कर्मणां न निराकर्तुमर्हम्। पृथिव्यादीनां बाह्यानाम्, आत्मनः, परमात्मनश्च

---

उप. सू. ३. तद्वचनात्=तेन प्रसिद्धेनेश्वरेण प्रणयनात्।

यथायथं प्रत्यक्षानुमानपरिच्छेद्यतायाः सत्तर्कसंप्रधारितत्वेन तदतिरिक्तस्योपनिषद्वेद्यस्य तत्त्वस्याभावेन तत्त्ववचनादाम्नायप्रामाण्यमनुपपन्नमिति उपनिषदामपि तदनुवादेन तादृशतत्त्वानुबन्धि योगकर्मोभयानुष्ठापनपरताया एव वाच्यत्वेन निःश्रेयससाधनधर्मवचनतयैव प्रामाण्यमास्थेयमिति।

ननु, 'श्रुतिस्मृतिलक्षणोऽप्याम्नायो वक्तृप्रामाण्यापेक्षः ; तद्वचनादाम्नायप्रामाण्यम्'इति भाष्यदर्शने, तद्वचनादिति सौत्रपदस्य तेन पुरुषेण वचनात् प्रणयनादित्यर्थोऽवगम्यते। अत इह तत्पदमीश्वरपरम्। न च तस्य पूर्वप्रस्तुतत्वाभावाद् ग्रहणायोगः, तच्छब्दस्य प्रसिद्धपरताया बहुळं दर्शनात; ईश्वरस्य चातिप्रसिद्धत्वात् ; तच्छब्दस्य तदर्थकतायाः ओं तत् सदिति गीतादिसिद्धत्वाच्च। यद्वा, 'कृष्णं धर्मं सनातनम्' इत्याद्यनुरोधेन भगवानेव धर्मः। तद्व्याख्यानमेवेह प्राक् प्रतिज्ञातमस्तु। तदेव च द्वितीयसूत्रे लक्षितम्। सर्वं हि फलमतः परमात्मन एवाऽऽराधिताद्भवतीति वेदान्तघण्टापथः। एवञ्च तद्वचनादित्यस्य तेन धर्मभूतेनेश्वरेण वचनादित्यर्थो निराबाध इति चेन्न—चतुर्थसूत्रे धर्मविशेषप्रसूतादिति निर्देशबलेन, स्वारस्येन च सर्वधर्मलक्षणपरताया एवेह प्रकरणेऽवगमेन क्लिष्टगत्या परमात्मग्रहणस्यानुचितत्वात्। भाष्यं तु तद्वचनादाम्नायप्रामाण्यमिति एतद्दर्शनान्तिमसूत्राभिप्रायेणोपपन्नम्। तत्र तत्पदं परमात्मपरमिति च वक्ष्यते ॥ ३ ॥

ननु धर्मादेव चेन्निःश्रेयसम्, तर्हि तत्त्वज्ञानं व्यर्थम्। तत्त्वज्ञानान्मोक्ष इति प्रमाणप्रतिपन्नार्थत्यागश्च। तस्यापि कारणत्वे कथमुभयोरुपयोगः। तत्त्वञ्च ज्ञेयं किम्? कथञ्च ज्ञेयमित्यत्राह—

**४. धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥४॥**

धर्मविशेषः उक्तयोः प्रवृत्तिनिवृत्तिलक्षणयोर्धर्मयोर्मध्ये निवृत्तिलक्षणः तदुत्पादितात् तत्त्वसाक्षात्कारादपवर्ग इति। पदार्थानां साधर्म्यवैधर्म्यरूपं यत्तत्त्वं तज्ज्ञानादित्यन्वयार्थः। समानो धर्मो येषां ते सधर्माणः। तेषां भावः साधर्म्यम्। विरुद्धधर्मवत्त्वं वैधर्म्यम्, विशिष्टधर्मवत्त्वं वा। ताभ्यां साधारणधर्मविशेषधर्माभ्याम्। तस्य भावस्तत्त्वम् अनारोपितं रूपम्। तत्त्वपदस्य धर्मिपर्यन्ततयाऽपि प्रयोगोऽस्ति। तदा पदार्थविशेष्यकं साधर्म्यवैधर्म्यप्रकारकम् अत एव तत्त्वविषयकं यद् ज्ञानम् तस्मादित्यर्थः। वस्तुतोऽभेदेऽपि वृक्षसामान्यवृत्तिजातिरित्यत्र वृक्षाणां सामान्यमिति यथा, तथा पदार्थानां यत् तत्त्वम्, तज्ज्ञानादित्यन्वयोऽपि घटते।

एतदुक्तं भवति—मोक्षे तत्त्वज्ञानमेव मुख्योपायः। तत्त्वज्ञानं चात्मानात्मविवेकरूपमिति, द्रव्यादिषट्पदार्थज्ञानरूपं तद्भवति। तत्र षट्पदार्थावान्तरविभागरूपाणां पृथिव्यादीनां सर्वेषां मध्ये येषां यावन्तः समाना धर्मा भवन्ति, यावन्तश्च विरुद्धाः विशेषरूपाः प्रतिनियताः, तेषां तावद्विशिष्टत्वेन विवेचने आत्मनोऽप्यनात्मभूतपृथिव्यादिभिः कियदंशे साम्यम्, कियदंशे च वैषम्यम्, कथं च ऐक्यभ्रमरूपमिथ्याज्ञानम्, किमंशज्ञानाच्च तन्निवृत्तिः, अन्तत आत्मासाधारणधर्माः के, तत्रानात्मसबन्धायत्ताः के, के च स्वाभाविकाः, कथञ्चौपाधिकांशनिवृत्तिरित्यादिकं सर्वं क्रमेण सुज्ञानम्। ततश्च प्रथमतो विरक्तः सदाचारसम्पन्नो गुरुमुखात् यथावदिमां षट्पदार्थीमित्थं

शृणुयात्; अथ मन्वीत। ततः स्वाभाविकौपाधिकसर्वाकारविशिष्टं स्वात्मानं साक्षात्कृत्य औपाधिकाकारं निविवर्तयिषुः तादृशात्मध्यानं विहितमनुतिष्ठेत्। तदा तस्य यथावन्निष्पत्तये साफल्यसंपत्तये च सर्वानपि धर्मान् फलाभिसन्धिरहितान्, ईश्वरप्रणिधानं च तदर्पण-बुध्या समाचरेत्। एवमाराधितश्च परमात्मा प्रसन्नः स्वात्मध्यानपर-स्यास्य तदितरवैमुख्यमवेक्ष्य तदौन्मुख्यमभिवर्ध्य मुमुक्षुमेनं योगजधर्म-समृद्धं विदधाति। तद्धर्मबलेन चैष स्वात्मानं स्वाभाविकविभुत्वैकत्व-नित्यत्वनिरवयवत्वादिविशिष्टं देहसम्बन्धाधीनज्ञानाद्यागन्तुकानेकगुणम् अनादिकालसमापतितानेकदेहसम्बन्धाऽऽपादितानन्तधर्माधर्मसमालीढं—च साक्षात्करोति। एवं निवृत्तिलक्षणधर्मप्रसूततत्त्वसाक्षात्कारबलादेव गुणादिसमवायान्तसर्वपदार्थसमाश्रयभूतपृथिव्यादिद्रव्यमयेऽस्मिन् प्रपञ्चे एषु देशेषु, एषु कालेषु एषां धर्माणामधर्माणां च इत्थं फलानि मयाऽनुभोक्तव्यानीति निश्चित्य, "नाभुक्तं क्षीयते कर्म" इति च निर्धार्य, स्वगतधर्माधर्मफलभूतानि सुरनरखरतुरगभुजगविहगादीनि सर्वाणि शरीराणि युगपदेव स्वयं निर्मायाऽऽविश्यानुभूय संचितं नाशयन् समृद्धतत्त्वसाक्षात्कारतया स्वल्पस्यापि मिथ्याज्ञानस्यानवकाशेनापूर्वं किञ्चित् पुण्यं पापं वाऽनाचरन् सर्वमौपाधिकाकारं निवर्तयति। ततश्च निःश्रेयसमश्नुते। अतो निःश्रेयसार्थिना धर्मोऽपि न त्याज्यः। तत्त्वमपि यथोक्तं साक्षात्कर्तव्यमिति॥ तत्त्वसाक्षात्कारोऽपि निःश्रेयसे परम्परया दृष्टविधयैवोपयुज्यते। ईदृशनिःश्रेयसस्वरूपञ्च षष्ठे वक्ष्यते॥

अनेन च सूत्रेण शास्त्रविषयः, प्रयोजनञ्च कण्ठोक्तम्। अप-वर्गकामो मुख्याधिकारीत्यर्थसिद्धम्; प्रतिपाद्यप्रतिपादकभावरूपसंब-

न्धश्च अनुपयुक्तं किञ्चिदुच्यत इति भ्रमानुन्मेषाय, उपयोगित्वा धर्मोपि व्याख्यायत इति वचनात, प्रागेव सूचितः । अत्र ज्ञायतेऽ-नेति ज्ञानम् ; तत्त्वज्ञानं नाम तर्कशास्त्रमित्यर्थवर्णनं क्लिष्टमित्युपस्का-ऽपि दर्शितमेव। इयमेव क्लिष्टा सरणिः समानतन्त्र प्रथमसूत्रे तत्त्वज्ञा-पदे टीकाकृद्भिर्दर्शितेति तदेवात्र एवमुल्लेखमूलम् । तत्रापि सा नादर्त-व्येति निरूपितमस्माभिर्न्यायभाष्यप्रदीपे ॥

अत्र षट्सु द्रव्यगुणादीन् प्रति धर्मित्वात, स्वरसतो विशेष्यतय भासमानत्वाच्च प्राधान्यात् द्रव्यस्य प्रथममुद्देशः । अथ सर्वद्रव्यधर्मत्वात गुणस्य। ततः कतिपयद्रव्यवर्तित्वात् कर्मणः । तत्त्रितयगतत्वात् तद्गत ऐन्द्रियकत्वाच्च तदनन्तरं सामान्यस्य । कतिपयद्रव्यमात्रगतत्वादतीन्द्रि-यत्वाच्च ततः पश्चाद्विशेषस्य। उक्तप्रकारिप्रकारविषयकविशिष्टबुद्धिनिया-मकत्वादतीन्द्रियत्वाच्चान्ते समवायस्येति क्रमः । नन्वभावः किमिति नोद्दिष्टः । न चासौ नेष्टः, नवमे विशिष्य वक्ष्यमाणत्वात् । न च तुच्छत्वादुपेक्षा ; अभावरूपस्य निःश्रेयसस्यतन्मतेऽत्यन्तोपादेयत्वादिना तुच्छत्वायोगादिति चेत्—सत्यम् । सोऽप्युद्देष्टव्य एव । अथाप्यु-क्तरीत्या प्रकारिणः, प्रकाराणाम्, संबन्धस्य च क्रमेण योजनादभावस्य मध्येऽन्ते वा निवेशायोगमालोच्योपेक्षा । न हि समवायात् प्राक् तन्निवेशः ; तथासति तस्यापि समवायः संसर्ग इत्युत्प्रेक्षापत्तेः । नापि अन्ते ; गुणादिवत् प्रकारस्याभावस्य संसर्गानन्तरमनवकाशात् । समवायवत् अतीन्द्रियत्वादिसंभावनापाताच्च । सर्वशून्यवादिनाप्यनु-पेक्षितश्चायमभावो नावश्यमपूर्वतया ज्ञापनीयः । अभावस्य प्रतियोगि-

वशिष्टतयैव भानानुभवाच्च प्रतियोगिषु भावेषु ज्ञापितेषु ज्ञापितप्राय
त्वासावित्यादि मनसिकृत्य भावमात्रोद्देशः । शक्तिसादृश्यादयस्तु भावाः
अत्रैव शक्यान्तर्भावाः न पृथग्गणनीया इति ॥ ४ ॥

द्विविधा तावत् शास्त्रस्य प्रवृत्तिरिति कन्दली उद्देशो धर्मवच-
श्चेति । परीक्षा तु केषाञ्चिदेव मध्येमध्ये यथायथं क्रियते । न खलु
यायदर्शनेऽपि यथोद्देशं सर्वं परीक्षितम् । परीक्षा हि विप्रतिपत्त्यादौ
ाति घटत इति । तत्रोद्देशः सामान्यतो विशेषतश्चेति द्विविधः । तत्र
प्रवृत्तः सामान्योद्देशः । यथार्हं विभज्योद्देश आरभ्यते—

**पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ।५।**

अत्र भोगस्थानभोगोपकरणत्वादिना पृथिव्येव बहुलमुपयुज्यते
इति तस्याः प्रथममुद्देशः । तद्वत नदीसमुद्रादिरूपेण विपुलाकारवत्त्वा-
दिना पश्चादपाम् । अथ तद्वदिन्द्रियकत्वादिसाम्यात् तेजसः । ततो नित्या-
नित्यविभागतौल्यादिना अतीन्द्रियस्य वायोः । अथ केवलनित्यानाम् । तत्र
पूर्ववत् भूतत्वात् शरीरेन्द्रियोपयोगित्वादाकाशस्य । अथ सर्वाधारत्वात्
क्षणलवकाष्ठामुहूर्ताद्यनन्तविभागवत्त्वाच्च कालस्य । तद्वदेव परत्वापरत्वा-
दिसर्वकारणबाह्यप्रमेयत्वात् ततः परं दिशः । एवं बाह्यप्रमेयद्रव्येषूक्तेषु
प्रमातुरात्मनः । ततः प्रमेयपरिच्छित्तये प्रमातुः करणतयैव सिद्ध्यतः
तदुपसर्जनस्यान्ताह्यस्य मनस इति क्रमः । इतिशब्दोऽवधारणार्थः । तेन
नवैवेति सिद्ध्यति । सुवर्णादिकं तेजस्येवान्तर्भावयिष्यति ॥ द्रव्यगुणा-
द्यो नित्यमिलिता इति पूर्वं समासकरणम् । पृथिव्यबादीनां तु स्वात-
न्त्र्यमित्यसमासाऽऽदरः ॥ ५ ॥

६. रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥

पूर्वोत्तरसूत्रयोरितिशब्दनिर्देशिनाऽत्र चकारप्रयोगादवधारणं परित्यक्तम्, अनुक्तसमुच्चयो विवक्षित इति ज्ञायते। तत्र प्रमेयगतगुणाः पूर्वम्, प्रमातृगुणाः पश्चादिति क्रमः। प्रथमद्रव्यस्य पृथिव्याः गुणाः क्रमेण गणिताः। तत्र यथार्हं जलादिषु कतिपयत्यागो गुणविनिवेशावसरे व्यक्तीभविष्यति। तत्र स्पर्शान्ताः विशेषगुणाः; अपरत्वान्ताश्च सामान्यगुणाः। रूपादीनां चतुर्णां बहिरिन्द्रियव्यवस्थाहेतुतया विभिन्नेन्द्रियग्राह्यत्वरूपं मिथोवैलक्षण्यं दर्शयितुं द्वन्द्वः। एवमुपरितनद्वन्द्वानामपि मिथोविरोधप्रदर्शनार्थत्वं मन्तव्यम्। रूपाणि च रसाश्च गन्धाश्च स्पर्शाश्चेति विग्रहः। यत्रयत्र गुणेऽवान्तरजातिबहुत्वम्, तत्र बहुवचननिर्देशस्यैतत्सूत्रे दर्शनात्। द्रव्यप्रत्यक्षे गुणान्तरादिप्रत्यक्षे चापेक्षितत्वात् रूपं प्रधानम्। तत् सप्तविधम्। तदपेक्षया न्यूनविधो रसः। गन्धस्ततोऽपि; सुरभ्यसुरभ्युदासीनभेदेन त्रिविधत्वात्। स्पर्शस्य त्रिविधत्वेपि, रूपरसवत् सर्वोपि गन्धः पृथिवीवृत्तिः; न तु स्पर्शः सर्व इति वैलक्षण्यात् गन्धस्य पूर्वं निर्देशः। परिमाणापेक्षया संख्यानामवान्तराधिकजातिकत्वात प्रागुक्तिः। संख्यानुविधायितया संख्यानन्तरमुपस्थितस्यापि पृथक्त्वस्य वैविध्याभावात्, परिमाणमुक्त्वा पश्चात्पूर्वोपस्थिततदुक्तिः। यद्यपीदमेकपृथक्त्वद्विपृथक्त्वत्रिपृथक्त्वाद्यनेकावान्तरविधाशालि, अथापि अत्र द्वित्वादिसंख्यासमावेशप्रयुक्त एव भेदग्रहः, न त्ववान्तरजातिभेदः स्वारसिक इत्याशयः। अत एवैकवचनम्। संयोगविभागौ सर्वद्रव्यसाधारणौ संख्यादिवत्; न तथा परत्वापरत्वे। अपरत्वकथनानन्तरं

गुरुत्वद्रवत्वे पृथिवीनिष्ठे वक्तव्ये—अथाप्यत्रेन्द्रियग्राह्यगुणमात्रकथनात्, गुरुत्वस्यातीन्द्रियत्वात् त्यागः। द्रवत्वमपि सामान्यविशेषगुणात्मकत्वात् नैकरूपमित्युपेक्षा। स्नेहशब्दयोर्विशेषगुणत्वेऽपि जलाकाशनिष्ठतया पृथिवीगुणमध्ये निवेशनेऽनौचित्यात् स्पर्शानन्तरमनुक्तिः। अपरत्वान्त-सामान्यगुणकथनानन्तरञ्च न बाह्यविशेषगुणकथनमुचितमिति पश्चादपि त्यागः। बुद्धिः प्रत्यक्षानुमित्यादिभेदभिन्ना आत्मगुणेषु मुख्या। सुखदुःखे परमफलत्वाकारेण प्रधाने। सुखदुःखस्वरूपविवेचनमिच्छा-द्वेषायत्तमिति तत्र क्रमः। प्रयत्नः प्रवृत्तिनिवृत्तिजीवनयोनिभेदेन त्रिविध इति बहुवचनम्। धर्माधर्मावतीन्द्रियत्वात् त्यक्तौ। संस्कारोऽप्येवम्; द्रवत्ववच्च नैकरूप इति। एते च स्नेहशब्दगुरुत्वद्रवत्वधर्माधर्मसंस्काराः सप्त चकारसूचिता इह शास्त्रे तत्रतत्र कीर्तयिष्यन्त एव ॥ ६ ॥

७. **उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥**

इतिरत्राप्यवधारणार्थः। तेन पञ्चैव विधा इति सिध्यति। उत्क्षेपणमूर्ध्वदिक्संयोगानुकूलक्रिया। अवक्षेपणमधोदिक्संयोगानुकूल-क्रिया। आकुञ्चनमग्रावयवस्य मूलावयवसंयोगानुकूलक्रिया। प्रसारणं मूलावयवविभागपूर्वकस्वदेशसंयोगानुकूलक्रिया। एवञ्चेमानि चत्वारि कर्माणि नियतदिग्देशविशिष्टकार्यारम्भकाणि। अनियतयत्किञ्चिद्दिग्विशि-ष्टकार्यारम्भकं कर्म गमनम्। तादृशकर्मण्येव गमनत्वजातिः। उत्क्षेपणा-दिस्थलेऽपि 'हस्त उद्गच्छती' त्येवं गमनव्यवहारस्तु गमनस्येवास्यापि संयोगविभागजनकत्वसाम्याद्गौणः। तथाच पञ्चजातिस्थितिः।

अथ विवेकार्थं मुखान्तरेणापि विभागः प्रदर्श्यते। कर्म द्विविधं प्रयत्नपूर्वकमप्रयत्नपूर्वकञ्च। तत्राऽऽद्यमुक्तरूपेण पञ्चविधम्। अन्त्यं तु सर्वं गमनमेव। एवं वा—कर्म त्रिविधं सत्प्रत्ययम्, असत्प्रत्ययम्, अप्रत्ययञ्चेति। तत्र प्रयत्नजन्यं कर्म सत्प्रत्ययम्। यथा—प्रयत्नवदात्मसंयोगात् हस्ते कर्म; तादृशहस्तसंयोगात् मुसलादौ कर्म च। असत्प्रत्ययं नाम, यत् किल, 'हस्तमुसलादावुत्क्षेपणादिकमुत्पादनीय'मिति बुद्धिपूर्वमेव प्रागारम्भेऽपि तत्क्षणे तादृशबुद्ध्यभावेऽपि तां बुद्धिमनपेक्ष्यैवोलूखलमुसलाभिघातवशादवशादेव मुसले, तत्संयुक्ते हस्ते चोत्पतनकर्म। एवमन्यदपि तद्भवति। अप्रत्ययं तु प्रयत्नापेक्षाप्रसक्तिरहितं शरीरतदवयवतत्सम्बद्धव्यतिरिक्ते वाय्वादौ कर्म। अत्रान्त्यद्वयं गमनमेव। आद्यं तूत्क्षेपणाद्यात्मना पञ्चविधमिति॥

ननूत्क्षेपणादिकं कथं कर्म। न ह्युत्क्षेपणपदस्योर्ध्वदिक्संयोगानुकूलक्रियेत्यर्थः। तथासति, 'उद्गच्छति' 'उत्पतति' इत्यादेरिवोत्क्षिपतेरप्यकर्मकत्वापत्तेः। सकर्मकत्वेऽपि हस्तः उत्क्षिपतीत्यादिप्रयोगापत्तेश्च। अत ऊर्ध्वदिक्संयोगानुकूलक्रियानुकूलव्यापार उत्क्षेपणम्। हस्तमुत्क्षिपतीत्यादौ तादृशधात्वर्थतावच्छेदकक्रियारूपफलशालितया हस्तादेः कर्मत्वम्। हस्तादिगततादृशक्रियानुकूलव्यापारश्च—हस्तस्य कर्मकारकत्वे प्रयत्नवदात्मसंयोगः; मुसलस्य कर्मकारकत्वे हस्तमुसलसंयोगः; उलूखलं मुसलमुत्क्षिपति, स्रोतस्संघट्टो जलमुत्क्षिपति, दावाग्निर्वेणुखण्डमुत्क्षिपति, वायुस्तूलमुत्क्षिपतीत्यादौ च उलूखलमुसलाद्यभिघातरूपः संयोगः। एवञ्च कथमुत्क्षेपणादेः संयोगादिरूपस्य कर्मण्यन्तर्भावः ?

कथन्तरां च प्रयत्नपूर्वकमेव सर्वमुत्क्षेपणादिकमिति चेत्-श्रूयताम्। लोके हस्तमुत्क्षिपतीत्यादिः चेतनव्यापारपरतया प्रयोगो मुख्यः। अन्यस्तु न स्वरस इति गौण एव। एवञ्चोर्ध्वदिक्संयोगानुकूलप्रयत्नजन्यक्रियानुकूल-व्यापार एव मुख्य उत्क्षिपत्यर्थः। एवमवक्षिपत्यादावपि प्रयत्नजन्यत्वम-न्तर्भाव्यम्। एवं धातोः व्यापारपर्यन्तार्थकत्वेऽपि सूत्रे उत्क्षेपणादिपदं तादृशप्रयत्नजन्यक्रियारूपफलमात्रविवक्षया प्रयुक्तम्; तत्रतत्र फलमात्र-तात्पर्येणापि व्युत्पाद्यन्तप्रयोगदर्शनात्। अत इहोत्क्षेपणादेः कर्मान्तर्भावो नानुपपन्नः। उत्पतनादिशब्दप्रयोगेणोत्क्षेपणादिशब्दप्रयोगश्च, 'प्रयत्न-जन्यक्रियायामेवेयमवान्तरजातिः; अन्यत् पुनः उत्पतनादिकं गमनमे-वेति सूचनार्थ इति।

अथ निष्क्रमणप्रवेशनभ्रमणरेचनादिनानाविभाजकधर्मसद्भावात् कथं पञ्चैवेति चेन्न- तस्य भाष्य एव समाहितत्वात्, 'सर्वस्य गमन एवान्तर्भावः' इति। न च निष्क्रमणत्वप्रवेशनत्वादेः विभाजकधर्मत्व-मपि संभवति; एकत्र समावेशार्हत्वेनाविरुद्धत्वात्। यथा—अपवरकात् अपवरकान्तरं गच्छति पुरुषे प्रथमापवरकस्थः तम् 'अयं निष्क्रामती'ति मन्यते। द्वितीयापवरकस्थश्च अयं प्रविशतीतीत्यादि तत्रैव द्रष्टव्यम्॥ निबिडानिबिडावयवनिखिलद्रव्यसाधारणमुत्क्षेपणादि प्रथममुक्तम्। निबिड-नमनाद्यर्हद्रव्यगताकुञ्चनादि पश्चात्। भूमिष्ठः प्रायः किमप्युत्क्षिप्यैवावक्षिपेत्। ऋजुं हस्तादिकमाकुञ्च्यैव प्रसारये-दिति तत्रापि पौर्वापर्यम्। तद्भिन्नं सर्वं गमनमिति सूचयितुं तदन्ते निर्दिष्टमिति॥ ७॥

एवं द्रव्यगुणकर्माणि सामान्यत इव विशेषतोऽप्युद्दिष्टानि अथ 'परमपरमिति सामान्य'मिति सामान्यविभागः कार्यः। अथापि लोके द्रव्यगुणकर्माणीव सामान्यादि प्रधानतया नानुभूयते। उक्तञ्च शास्त्रदीपिकायाम्, 'इयं गौरिति हि सर्वदा सर्वेषां प्रतीतिः, न, इह गोत्वमिती'ति। विशेषसमवायौ च सर्वथाऽतीन्द्रियौ। किञ्च, द्रव्यादित्रिकमेव भाष्यादिषु धर्माधर्महेतुत्वेन निरूपितम्। अत एव प्राधान्यादर्थशब्दोऽपि सूत्रकारेण द्रव्यादित्रिक एव परिभाषितः। अतो धर्मितया प्रतीयमानेषु आपामरप्रसिद्धेषु द्रव्यादिषु त्रिषूद्दिष्टेषु साधर्म्यवैधर्म्यरूपधर्मवचनं तद्गोचरमेव समनन्तरं वक्तुमुचितम्। सामान्यादिकं तु निरूपणात्प्रागज्ञातम्, निरूपणात्पश्चाच्च विविक्तमेव ज्ञातमिति न तत्राविवेकः साधर्म्यवैधर्म्यवचनेन परिहर्तव्योऽस्ति। न च सामान्य एव स्फुटमज्ञाते सति परमपरमित्यत्यन्ताप्रसिद्धतदवान्तरोद्देशः कथमपि बुद्धिमारोहेत्। अतः सामान्यं लक्षणतः पूर्वं ज्ञाप्यम्। लक्षणञ्च विशेषधर्मवचनम्। द्रव्यादीनां लक्षणवचनात्पूर्वमेव सामान्यादेस्तद्वचनं च न प्राप्तकालम्। द्रव्यादीनां विशेषधर्मवचनं च साधर्म्यवैधर्म्यकथनरूप-धर्मवचनात्मकद्वितीयशास्त्रप्रवृत्तिमध्यनिवेशि। अतो द्रव्यादीनां साधर्म्य-वैधर्म्ये प्रागभिधाय ततः सामान्यादि लक्षणतो ज्ञापयितुमुचितमिति। तदेवम भिसंधाय द्रव्यादीनां साधर्म्यादि वक्तुमारभते—

**८. सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः॥**

अविशेष इति। विशेषधर्मः उपरि वक्ष्यते। ततः प्राक् साधर्म्यं समानधर्म उच्यत इत्याशयः। अत्र यावतां यत् साधर्म्यं वैध-

र्थं वा उच्यते, तावत्तु तत् प्रतिव्यक्ति विवक्षितमिति न मन्तव्यम्। किन्तु द्रव्यगुणकर्मणां साधर्म्यमुच्यमानं द्रव्ये गुणे कर्मणि च यथायथं वर्तते; न तु द्रव्यमात्रे, अन्यमात्रे वा, न वा त्रिकादन्यत्रेति। तथाच किञ्चित् कतिपयद्रव्यगुणकर्मणामपि भवेत्। किञ्चित्तु सर्वेषामपि। अतो न सर्वस्यापि साधर्म्यस्य सर्ववृत्तित्वसम्पादनायाऽऽयासः कार्य इति ध्येयम्। सूत्रे इतिशब्दः सदादिपदेन प्रत्येकं सम्बध्यते। सदित्युच्यमानं सत्ताजातिमत्त्वमेकः समानो धर्मः। अयं सर्ववृत्तिः। अनित्यत्वं ध्वंसप्रतियोगित्वम्। कार्यत्वं प्रागभावप्रतियोगित्वम्। तदुभयं न सर्ववृत्ति। तथा च भाष्यम्—'कार्यत्वानित्यत्वे कारणवतामेवे'ति। न च ध्वंसप्रागभावयोरतिव्याप्तिः शंक्या। सूत्रनिर्दिष्टभावमध्य एव विचारात्। द्रव्यं समवायिकारणतयाऽस्यास्तीति द्रव्यवत्। द्रव्यसमवायिकारणकत्वं साधर्म्यम्। न च द्रव्यं समवायितयाऽस्यास्तीत्येतावदेवास्त्विति वाच्यम्; तथासति समवायेन द्रव्याश्रितत्वं साधर्म्यं स्यात्; तत् सामान्यादावतिप्रसक्तमिति। यद्वा समवायेया द्रव्यविशिष्टत्वमेव साधर्म्यमस्तु, नित्यगुणेष्वपि तत्समन्वयलाभात्। सामान्यादावतिव्याप्तिवारणाय सामान्यवत्त्वे सतीति विशेषणं देयम्। अत एव भाष्यम्—'द्रव्याश्रितत्वञ्चान्यत्र नित्यद्रव्येभ्य'इति। अथवा, द्रव्यं व्यावर्तकतयाऽस्यास्तीति द्रव्यवत्, तत्त्वं साधर्म्यम्। कारणत्वमपि, द्रव्यस्य समवायिकारणत्वात्, गुणकर्मणोश्चासमवायिकारणत्वात्। सामान्यस्य सामान्यप्रत्यक्षे निमित्तकारणत्वेऽपि नोक्तविधकारणतावत्त्वम्। अणुपरिमाणादौ क्वचिदेतदभावेऽपि न दोषः। तथाच भाष्यम्—'कारणं चान्यत्र पारिमाण्डल्यादिभ्य.' इति। सत्तासामान्यस्य प्रागुक्तत्वाद्विशेषरूपसामान्यवत्त्वं सामा-

न्यविशेषवदित्यनेन विवक्षितम् । द्रव्यत्वगुणत्वादिमत्त्वात् समन्वय इति ॥ ८ ॥

अथ लक्षणसूत्रं यावत् द्वयोर्द्वयोः साधर्म्यं वक्तुमारभते—

**९. द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम् ॥**

साजात्यं पदार्थविभाजकद्रव्यत्वादिरूपेण । यथा तन्तोः पटं प्रति, तन्तुरूपादेश्च पटरूपादिं प्रति आरम्भकत्वम् ॥ ९ ॥

ननु तन्तव एव व्यतिषङ्गविशेषभाजः पट इत्युच्यन्ते । अतः पटस्य तन्त्वभिन्नत्वात् कथं तदारभ्यत्वम् । पटस्यातिरिक्तत्वे च तत्र रूपाद्यनुत्पत्त्या निर्गुणत्वापत्तिः । न च अवयवगुणस्तत्र कारणम्, वैयधिकरण्यादिति अतिरिक्तावयव्यनङ्गीकारिमतं परिहर्तुमाह —

**१०. द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥**

एकद्रव्याद् द्रव्यान्तरानुत्पत्तावपि द्रव्यद्वयादपि द्रव्योत्पत्त्या द्रव्याणीत्यत्र द्रव्ये च द्रव्याणि च द्रव्याणीत्येकशेषः कार्यः । एवं गुणा इत्यत्र गुणश्च गुणौ च गुणाश्चेति ; एकेनाप्यवयवगुणेन हस्तपुस्तकसंयोगेन कायपुस्तकसंयोगस्य, कपालरूपाभ्यां घटरूपस्य, तन्तुरूपैः पटरूपस्य चाऽऽरम्भात् । अत्र 'गुणाश्च गुणान्तरमारभन्त' इति कन्दल्यादावनूदितम् । तन्नूनं पूर्वस्थितम् 'आरभन्त' इति पदमनुषज्य । यद्यपि पृथक्सूत्रं कृत्वा, 'कर्म कर्मसाध्यं न विद्यत' इति सूत्रात् प्राक् पठितुं शक्यते । मध्यगतसूत्रद्वयस्य कदाचिल्लोपात् क्रमेण सूत्रद्वयमेकमापतितमिति कल्पनासम्भवात्—अथापि शाङ्करभाष्येऽप्येवमेव पाठादस्तु यथादृष्टमेव । तद्व्याख्यायां रत्नप्रभायां तु सूत्रद्वयमित्युक्तमिति विमृश्यमेतत् ॥१०॥

द्रव्यारम्भकत्वे हेतुं सूत्रद्वयेनाह—

* ११. भविष्यति पट इत्युपक्रियमाणेभ्यस्तन्तुभ्यः ॥

यदा तन्तवः तुरीवेमाद्युपकरणाधीनोपकारभाजः, तदा तन्तवः सन्ति ; पटस्तु भविष्यतीति प्रत्ययो जायते । तन्तुपटैक्ये च तन्तवो भविष्यन्तीत्यपि स्यात् , पटोऽस्तीति वा । सूत्रे इतीत्यनन्तरं प्रत्यय इति शेषः । एवं हि सूत्रकृतः शैली, यथा—'सदिति यतः', 'इहेदमिति यत' इत्येवम् ॥ ११ ॥

* १२. तथा भवतीति सापेक्षेभ्यो निरपेक्षेभ्यश्च ॥

यदा कतिपये तन्तवः असंयुक्ततया पटं प्रति सापेक्षाः अन्ये च कृतसंयोगतया निरपेक्षाः, तदा संयुक्तासंयुक्तद्विविधतन्तुदर्शनात् पटो भवतीति प्रत्ययो भवति । यथा छेदनव्यापारे उपक्रान्तेऽपरिसमाप्ते च मध्ये छिनत्तीति, तद्वद् भवनस्य परिनिष्पत्तेः प्राक् वर्तमाननिर्देश एवोपपन्न इति । इदमुपलक्षणम्—सर्वतन्तुसंयोगानन्तरं पटोऽभूदित्यपि प्रत्ययो जायते । अतः तन्तुसद्भावकालमध्ये प्राक्कालासत्त्व-पश्चात्कालोत्पत्त्युभयप्रतीत्या तन्तुतः पटोऽन्य इत्यास्थेयमिति सिद्ध आरम्भकवादः । नन्वेवं प्रत्यग्रस्य पटस्य निर्गुणत्वप्रसङ्ग इति प्रागुक्तमिति चेत्—अत एवोच्यते कारणैकार्थप्रत्यासत्त्या गुणाश्च गुणान्तरमारभन्त इति ॥१२॥

ननूत्क्षिप्य पादं भूमौ निक्षिप्य प्राणिनः सञ्चरन्ति । तत्र पादकर्मणः पूर्णशरीरकर्मारम्भकत्वं दृष्टमिति कर्मापि कर्मारम्भकमेवेत्यत्राह—

---

11, 12. इदं सूत्रद्वयं नोपस्कारे ।

१३. कर्म कर्मसाध्यं न विद्यते ॥

विद्यत इति भवतीत्यर्थे ; ज्ञायत इत्यर्थे वा । अयं भावः—कपालरूपादिभिः घटरूपाद्यारम्भो घटोत्पत्तिद्वितीयक्षणे इष्टः । न तथा प्रत्यवयवि अवयवकर्मणा कर्मारम्भसम्भवः ; रूपादिवत् सर्वावयवेषु घटोत्पत्तेः प्राक् कर्माभावात् । एकावयवस्थितमपि नारम्भकम् । तथासति तस्य कर्मणोऽवयविनि व्याप्यवृत्तित्वायोगात् । नापि हस्तपुस्तकसंयोगजन्यकायपुस्तकसंयोगवत् अव्याप्यवृत्ति । कर्मणः तथात्वे प्रमाणाभावात् । तादृशस्थलेऽवयवकर्मातिरिक्तावयविकर्मस्वीकारस्यानावश्यकत्वात् । किञ्च, तदेकमप्यवयवकर्म अवयवान्तरसंयोगमुत्पाद्य अनन्तरक्षणे तादृशसंयोगाधीनावयव्युत्पत्तिकाल एव नष्टम् , कर्मणः संयोगनाश्यत्वादिति नावयविनि द्वितीयक्षणे कर्मसम्भवः । न चावयविनि पश्चात् यदाकदाचिज्जायमानं कर्मैवावयवकर्मजन्यमस्तु, यथा नुद्यमानचक्रकर्मतः शकटकर्मेति वाच्यम्—तत्र हस्तादिसंयोगस्य नोदनाख्यस्य चक्र इव शकटेऽपि तुल्यतया तत एव शकटकर्मसम्भवात चक्रकर्मणोऽकारणत्वात् । यस्तु प्राणिसञ्चारदृष्टान्तः, तत्राप्युच्यते । न तावत् प्रथमपादकर्मणा तत्र पूर्णशरीरकर्म ; एकपदन्यासकाले सर्वशरीरचलनादर्शनात् । नापि द्वितीयपादकर्मणा ; न्यस्तप्रथमपादावच्छेदेन शरीरे कर्मादर्शनात् । अतः तादृशपादसंयोगबलादुपरितनेषु शरीरावयवेषु परं कर्माणि जायन्ते । यद्वा पादवत् पूर्णशरीरेऽपि प्रयत्नवदात्मसंयोगरूपस्य कर्मकारणस्याविशिष्टत्वान्न पादकर्मणः शरीरकर्मारम्भकत्वम् । एवं तावदिह आरम्भवाद-

उप सू. १३. एकस्मिन् द्रव्ये पूर्वमुत्पन्नेन कर्मणा द्वितीयं तत्र कर्म नोत्पद्यते ।

प्रकरणानुसारात् अवयवकर्मणोऽवयविकर्मारम्भकत्वं नास्तीत्युपपादितम् । एवमेवावयविकर्मणा प्रथमेन द्वितीयमवयविकर्म जन्यत इत्यपि दुर्वचम् । तच्च वक्ष्यते । सर्वथा कर्मणः कर्मारम्भकत्वं न भवतीति । सूत्रमिदं कर्मणः सजातीयारम्भकत्वरूपसाधर्म्याभावप्रदर्शनाय ; न तु सजातीयानारम्भकत्वरूपवैधर्म्यप्रदर्शनाय । अतो घटगगनादिषु अतिप्रसक्तत्वेऽपि न दोष इत्यलम् ॥ १३ ॥

अथ द्रव्यकर्मणोर्गुणकर्मणोश्च साधर्म्यविवक्षया द्रव्यादिषु कमपि विवेकं त्रिसूत्र्या व्युत्पादयति—उत्पत्तिघटितसाधर्म्यं प्रागुक्तम् । अथ च नाशघटितसाधर्म्यमुच्यते—

**१४. न द्रव्यं कार्यं कारणं च वधति ॥**

कार्यविरोधि कर्मेति सूत्रे कार्यविरोधित्वं न कार्यनाशकत्वम् ; कर्मणि तदभावात् । किन्तु कार्यनाश्यत्वमेव । तद्वैधर्म्यस्य चात्र सूत्रे विवक्षितत्वात् द्रव्यमिति कर्म । कार्यं कारणमिति च कर्तृ । हन्तीति स्थाने वधतीत्यार्षम् । कार्येण कारणेन च द्रव्यं न हन्यते । द्रव्यं हि घटादिकं समवायिकारणनाशाद्वा असमवायिकारणनाशाद्वा नश्यति । न तु कार्येण कारणेन वेति भावः । अत्रेदं भाति—दुष्टापत्येन तन्मात्रादेः, शिलाभिघातादिरूपेण स्वकार्येण संयोगेन घटादेः, अग्निसंयोगरूपस्वकार्येण काष्ठादेः, स्वकृतोद्बन्धनादिव्यापारेण पुरुषस्य च नाशदर्शनात् कथं द्रव्यस्य न कार्यवध्यत्वम् ; कथञ्च घटादेरदृष्टेश्वरादिना दण्डकुलालादिना च नाशादकारणवध्यत्वमपीति । अत्रायं समाधिः—साधर्म्योपक्रमसूत्रे कारणमिति समवाय्यसमवायिकारणयोरेव प्रस्तावात् द्रव्यं

तरभेदसाधकं विशेषधर्ममाह गुणवदिति । प्रतिद्रव्यं यत्किञ्चिद्गुणसद्भावात् समन्वयः । समवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिरिति सूचनाय लक्षणान्तरमाह समवायीति । गुणे कर्मणि च कस्यापि कार्यस्य समवेतत्त्वाभावान्न तयोः समवायिकारणत्वमिति ॥१७॥

यथास्थानं गुणविशेषधर्ममाह—

**१८. द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ॥**

द्रव्यमाश्रयितुं शीलमस्येति द्रव्याश्रयी । ताच्छील्ये णिनिप्रयोगेण वातानीतगन्धादेर्द्रव्यसमवेतत्वं नास्तीति अव्याप्तिशङ्का वार्यते । तत्र गन्धाश्रयद्रव्यांशोऽपि वातेनाऽऽनीयत इत्याशयः । द्रव्येति सर्वद्रव्याभिप्रायम् । कर्मणः सर्वद्रव्यवृत्तित्वाभावान्नातिव्याप्तिः । तच्च द्रव्यत्वव्यापकत्वम् । द्रव्यत्वादिजातेः सर्वद्रव्यवृत्तित्वेऽपि द्रव्यत्वव्यापकतावच्छेदकजातिमत्त्वमिति विवक्षणान्न दोषः । लक्षणान्तरमाह अगुणवानिति । न गुणवान् अगुणवान् । गुणवद्भिन्नत्वं कर्मण्यप्यस्तीति तद्वारणाय दळान्तरनिवेशाभिप्रायेणाऽऽह संयोगेत्यादि । संयोगविभागयोर्न कारणमनपेक्ष इत्यपि पाठः । अनपेक्ष इति पुल्लिङ्गनिर्देशो गुणान्वयविवक्षया । तथाच, योऽनपेक्षस्सन् संयोगविभागोभयकारणभिन्नः, स गुणः संयोगविभागोभयं प्रति अनपेक्षं सत् यत् कारणं तद्भिन्नो गुण इत्येवोक्तं भवति । तदुभयनिरूपितानपेक्षकारणताकं कर्मेति वक्ष्यते । अतः तद्भिन्नत्वनिवेशात् कर्मण्यतिव्याप्तिर्वारिता भवति । द्रव्यस्य संयोगविभागकारणत्वेऽपि न निरपेक्षकारणत्वम्, कर्मापेक्षत्वात् । कर्मणि जाते हि

---

उप सू. १८. द्रव्याश्रयित्वं द्रव्येप्यस्तीति अगुणवानिति । एवमपि कर्मण्यतिव्याप्तिरिति संयोगेत्यादि ।

द्रव्यं पूर्वदेशाद्विभज्योत्तरदेशेन संयुज्यते । अतः सापेक्षकारणत्वान्निरपेक्ष-कारणभिन्नत्वमस्तीत्यतिव्याप्तिः स्यादिति अगुणवानिति पूर्वदळनिवेशः ।

ननु अनपेक्षपदत्यागेन संयोगविभागोभयकारणभिन्नत्वमात्रमुच्यताम्; तथासति कर्मण इव द्रव्यस्यापि वारणादगुणवानित्यपि न निवेश्यमिति लाघवम् । संयोगस्य संयोगं प्रति, विभागस्य च विभागं प्रति कारणत्वेऽपि कस्याप्युभयकारणत्वाभावात् नाव्याप्तिः । अदृष्टादिकं तु नासाधारणकारणमिति चेत्—सत्यम् । तावदेव लक्षणं विवक्षितम् । अन्यथा गुणलक्षणमध्ये गुणवद्भिन्नत्वनिवेशे आत्माश्रयदोषापत्तेः । एवं सति ईदृशभङ्ग्यादरणं संयोगविभागकारणत्वं कर्मणि द्रव्ये चोभयत्रास्तीति उभयं वार्यत इति ज्ञापनाय; गुणत्वजातिसिद्धिप्रदर्शनाय च । तच्चेत्थम्—यथा संयोगविभागरूपपरस्परविरुद्धकार्यद्वयनिरपेक्षकारणतावच्छेदकं कर्मत्वम्, तादृशतदुभयसापेक्षकारणतावच्छेदकं च द्रव्यत्वम्, तद्वत् स्वकार्याविरुद्धकार्यमात्रजननप्रयोजकं गुणत्वम् । न हि •रूपत्वं तत्प्रयोजकम् । रसेऽप्यविरुद्धकार्यजनकत्वदर्शनात् ।• एवं रसत्वादिकमपीति•। एतेन चतुर्विंशतिगुणातिरिक्तत्वेऽपि कर्मणः गुणात् पार्थक्यं कुतः, पञ्चविंशगुणत्वेन गणनसम्भवादिति शङ्कापि निरस्ता । अविरुद्धकार्यमात्रजननप्रयोजकगुणत्वजातेस्तत्रायोगादिति । यद्यपि सामान्यादावपि संयोगविभागोभयकारणभिन्नत्वमस्ति—अथापि कारणत्वे सतीति विशेषणान्नातिव्याप्तिः । यद्वा तदुभयकारणावृत्तिजातिमत्त्वमिति लक्षणमिति न दोषः ॥१८॥

कर्मणो विशेषधर्ममाह—

**१९. एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ॥**

एकमेव द्रव्यं यस्य, तत् एकद्रव्यम्। एकमात्रद्रव्यवृत्ति। घटादिरूपद्रव्यस्य कपालद्वयादिरूपानेकवृत्तित्वात्, द्वित्वसंयोगादेरनेकद्रव्यवृत्तित्वात् द्रव्यगुणवारणम्। यद्यपि रूपादिकमेकमात्रद्रव्यवृत्त्येव, अव्यासज्यवृत्तित्वात्—अथाप्यनेकद्रव्यकावृत्तिपदार्थविभाजकोपाधिमत्त्वमिति विवक्षणाददोषः। उपाधिमत्त्वं च समवायेन। तेन विशेषत्वमादाय न विशेषेऽतिव्याप्तिः। अगुणमिति कथनं च पूर्वोक्तगुणवत्त्वरूपद्रव्यलक्षणस्य कर्मणि नातिव्याप्तिरिति सूचनाय। द्वितीयं लक्षणमाह संयोगेति। संयोगजसंयोगादेरंगीकरात् तत्र संयोगनिरपेक्षकारणत्वादतिव्याप्तिः स्यादिति संयोगविभागद्वयोक्तिः। उभयं प्रति द्रव्यस्य समवायिकारणतया अतिव्याप्तिरिति अनपेक्षेत्युक्तम्। तर्हि द्रव्यसापेक्षत्वात् कर्मणो निरपेक्षकारणत्वं कथम्? एवं क्रियाविभागपूर्वसंयोगनाशोत्तरदेशसंयोगानां क्रमेणोत्पत्त्या तत्राव्यवहितोत्तरजायमानं विभागं प्रति कर्मणो निरपेक्षत्वेऽपि चतुर्थक्षणजनिष्यमाणं संयोगं प्रति निरपेक्षत्वं न सम्भवतीति चेत्—उच्यते। द्रव्यापेक्षत्वेऽपि क्रियापश्चात्कालोत्पन्नकिञ्चिदपेक्षत्वं न लक्ष्यते। गच्छतः पुरुषस्योत्तरदेशप्राप्तिरेव परमलक्ष्येति संयोगं प्रति क्रियायाः कारणत्वमावश्यकम्। न तथा विभागस्य तज्जन्यस्य संयोगकारणत्वम्; संयोगनाशार्थमेव तदुत्पादनात्। अतो न विभागमादाय सापेक्षत्वम्। यद्यपि पूर्वसंयोगसत्त्वे उत्तरसंयोगस्योत्पत्त्ययोगात् संयोगनाशस्य संयोगहेतुत्वमस्ति—तथापि न तस्य कणादपरिगणितषट्पदार्थनिविष्टत्वम्। स्वोक्तपदार्थमध्ये किञ्चिदनपेक्षत्वस्यैवात्राभिसंहितत्वात्। तथाचात्रानपेक्षत्वं स्वोत्तरोत्पन्नभावपदार्थानपेक्षत्वरूपम्। संयोगविभागोभयनिरूपित-

तादृशकारणताकत्वरूपलक्षणकथनात् कर्मत्वजातिसिद्धिरपि दर्शिता। यदि तु विभागजविभागं प्रति विभागस्य निरपेक्षकारणत्वं नेष्यते, तर्हि विभागनिरपेक्षकारणत्वमेव लक्षणं पर्याप्तम्। एतत्तत्त्वं तदवसरे विवेचयिष्यामः। अथापि परस्परविरुद्धद्वयनिरूपितकारणताप्रयुक्तवैलक्षण्यान्न कर्मणो गुणत्वसम्भव इति ज्ञापनाय संयोगविभागोभयोक्तिः। सूत्रे संयोगविभागयोरिति द्विवचनपाठो बहुसम्मतः। विभागेष्विति बहुवचनसत्त्वेऽपि एकैकेनापि कर्मणा युगपदेव द्रव्ये तत्संयुक्तभूतलाकाशादिनानाद्रव्यसंयोगविभागजननान्नानुपपत्तिः॥ १९॥

ननु कार्यवैजात्ये कारणवैजात्यस्याऽऽवश्यकतया कथं विजातीयसंयोगविभागोभयकारणत्वमेकस्य कर्मण इति सौगतानुसारिशङ्कापरिहारमभिसंधाय कारणसामान्याधिकारं प्रवर्तयति—

**२०. द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम्॥**

समानमेव सामान्यम्। साधारणमित्यर्थः। द्रव्यगुणकर्मत्रितयनिरूपितसाधारणकारणत्वं द्रव्यस्येत्यर्थः। यथा तन्तूनां स्वसमवेतानि पटं रूपादिकं कर्म च प्रति कारणत्वम्। पूर्वं समवाय्यसमवायिकारणयोरेव प्रस्तुतत्वात् द्रव्ये समवायिकारणत्वमेवात्रापि प्रतिपाद्यत इति युक्तम् २०

गुणस्य साधारणकारणत्वमाह—

**२१. तथा गुणः॥**

तथेति। द्रव्यगुणकर्मणां सामान्यकारणमित्यर्थः। अवयवद्वयसंयोगोऽवयविनं प्रति, भेरीसंयोगात्मसंयोगाग्निसंयोगावयवगुणाः शब्दज्ञानपाकजगुणावयविगुणान् प्रति, वेगद्रवत्वगुरुत्वादयो धावनस्यन्दन-

पतनादिकर्माणि प्रति च कारणानीति। अत्र गुण इत्येकवचनादेकस्यापि गुणस्य त्रयं प्रति कारणत्वमभिमतम्। यथा वेगवत्तूलपिण्डसंयोगः तूलपिण्डान्तरे कर्मणः, द्वितूलकावयविनः, तत्परिमाणस्य च कारणम्। एवं तुरीतन्तुसंयोगः पटं तुरीपटसंयोगं तन्तुक्रियाञ्च प्रति कारणमित्येवम् ॥ २१ ॥

कर्मणस्तदाह—

**२२. संयोगविभागवेगानां कर्म समानम् ॥**

कारणमित्यनुषज्यते। इष्वादिषु हि जनितं कर्म संयोगादित्रयं जनयति। भावनाख्यसंस्कारस्य ज्ञानजन्यतया, स्थितस्थापकसंस्कारस्य च कर्महेतुतया, अवयवस्थितस्थापकजन्यतत्वस्यैव भाष्योक्ततया च कर्मजन्यत्वाभावात सामान्यतस्संस्कारेत्यनुक्त्वा वेगेत्युक्तम् ॥ २२ ॥

ननु दण्डादीनां भ्रमणादिद्वारा घटादिकं प्रति, कृष्यादीनां सस्यादिकं प्रति, दानहोमादीनां पुत्रनश्वादिकं प्रति च कारणत्वदर्शनान्निमित्तकारणत्वं कर्मणो दुर्निवारम्। तद्वत् अवयवेषु जातं कर्म अवयविद्रव्यं प्रत्यसमवायिकारणमपि भवत्विति शङ्कायामाह—

**२३. न द्रव्याणां कर्म व्यतिरेकात् ॥**

कारणमित्यनुवर्तते। निषेधे हेतुमाह व्यतिरेकादिति। असवायिकारणस्य कार्यसहभावेन कारणत्वाद्द्रव्यस्यासमवायिकारणनाशनाश्यत्वाच्च

---

उप. सू. २२. वेगपदं स्थितस्थापकस्याप्युपलक्षकम्।

उप. सू. २३. अवयवकर्मणः अवयव्युत्पत्ति काले नाशात् तत्र कारणम्। [illegible] खण्डपटोत्पत्तिस्थले व्यभिचारात् कर्मणो न निमित्तकारणत्वमपि।

नावयवकर्म द्रव्यं प्रत्यसमवायिकारणम्; अवयवसंयोगाधीनद्रव्योत्पत्ति-कालेकर्मनाशात्; अनन्तरक्षणे द्रव्यनाशापत्तेश्च। एवं महापटनाशाधीन-खण्डपटाद्युत्पत्तिस्थलेऽपि तदभावात् कार्यं न स्यात्। तत्र हि तुरीवेमा-दिनिमित्तकारणाभावेऽपि समवाय्यसमवायिकारणसद्भाव इष्टः। अवयव-कर्मणस्तुरीवेमादिवत् निमित्तकारणत्वमस्तुवा; मा वा, अन्यथासिद्धत्वात्। अत्र व्यतिरेकात् इति पृथक् सूत्रं वा ॥ २३ ॥

ननु गुणानां कर्मकारणत्वमुक्तं युक्तमेव। गुरुत्वात् पतनम्, द्रवत्वात् स्यन्दनम्, प्रयत्नाच्चेष्टा, नोदनादितश्च शरादिकर्मेति। अन्यथा तत्रतत्राऽऽद्यं कर्म कथमुत्पद्येत? 'यद्यपि, 'कर्म कर्मसाध्यं न विद्यत' इति अवयवकर्माजन्यत्वमवयविकर्मणः प्रगुक्तम्। एवमपि द्वितीयादिकर्मविषये कर्मण एव कारणत्वं युक्तम्। समवायेनोत्तरं कर्म प्रति समवायेन पूर्वं कर्म कारणमित्यौचित्यात्। अगत्या प्रथमचेष्टायां प्रयत्नस्य परम्परासंबन्धेन कारणत्वकल्पनेऽपि द्वितीयादौ कर्मण एव कारणत्वे लाघवात्। तथा कर्मजन्यवेगस्य द्वितीयादिकर्मकारणत्वकल्पनापेक्षया कर्मण एव तथात्वे लाघवम्। अतः कर्मणो द्रव्यकारणत्वाभावेऽपि गुणकारणत्ववत् कर्म-कारणत्वमप्यस्त्विति शङ्कायामाह—

**२४. गुणवैधर्म्यान्न कर्मणां कर्म ॥**

कारणमित्यनुवर्तते। प्रयत्नादिगुणविलक्षणत्वात् कर्मणः कर्म कारणं न भवतीत्यर्थः। यदि प्रयत्नं वेगं वा विहाय आद्यादिकर्म द्वितीयादि-कर्मकारणमित्यङ्गीक्रियते, तदा गच्छतो गतिविरामो न स्यात्; कारण-

---

२४. उप. सूत्रमिदमुत्तरसूत्रानन्तरम्। कर्मणां कर्म कार्यं न भवतीति।

सत्त्वे कार्यानुत्पत्त्ययोगात् । प्रयत्नादेः कारणत्वे च यावद्गमनविषयकः प्रयत्नः, यावच्च शरे वेगः, तावत्पर्यन्तमेव कर्मसंतान इत्युपपद्यते । तदर्थं प्रयत्नादेः कारणत्वे सिद्धे च कर्मणः कारणत्वं व्यर्थम् ; आद्यकर्मवत् कर्म विनाऽपि कर्मोपपत्तेः । किञ्च क्रिया, विभागः, पूर्वसंयोगनाशः, उत्तरसंयोगः, कर्मनाश इति क्रमः । तत्र न चतुःक्षणमध्ये क्रियान्तरोत्पत्तिसंभवः, युगपदनेककर्मसत्त्वानुभवापत्तेः । कर्मवति कर्मानुत्पत्तेश्च । न हि रूपवति रूपमुत्पद्यते । तथा विभागस्य संयोगपूर्वकत्वात् प्रथमक्रिययैव स्थितसर्वसंयोगनाशके विभागे द्वितीयक्षणजाते सति द्वितीयक्षणकल्पितं कर्म तृतीयक्षणे कीदृशं विभागं जनयिष्यति । मा भूदिति चेन्न— विभागं प्रति निरपेक्षकारणत्वरूपकर्मलक्षणहानिप्रसङ्गात् । अन्यथा तस्य कर्मत्वे मानाभावाच्च । तर्हि क्षणान्तरे कर्मोत्पत्तिरस्त्विति च न वाच्यम् —कर्मणः कर्मकारणत्वस्येष्टत्वे कारणे सत्यपि कार्योत्पत्तिविलम्बायोगादिति । एवमेकं द्रव्यमेकं कर्म च प्रति कर्मणोऽकारणत्वे तदनेकं प्रत्यकारणत्वमर्थसिद्धम् । गुणवैधर्म्यादित्यस्य गुणवत् सजातीयारम्भकत्वरूपसाधर्म्याभावादित्येव वाऽर्थः । तत् सिद्धं कर्मणो द्रव्यगुणकर्मत्रयनिरूपितकारणत्वाभावेऽपि संयोगविभागवेगकारणत्वादेवानेकजातीयकारणत्वमुपपाद्यमिति ॥

सूत्रमिदमुत्तरसूत्रानन्तरं पठन्ति । तदयुक्तम्—तथासति कार्यमित्यनुषज्य, कर्म कार्यं न भवतीत्यर्थो वाच्यः । तथासति द्वित्वप्रभृतय इति सूत्रे तदनन्तरसूत्रे च द्रव्याणामिति पदानुवृत्तिर्न स्यात् । एतत्सूत्रे तदनुवृत्त्यभावेन विच्छेदात् । अध्याहारे च गौरवात् । कारणसामान्य इति वक्ष्यमाणसूत्रविरोधाच्च । तत्र हि कारणसामान्याधिकारे द्रव्यं

प्रति कर्म प्रति च कर्मणोऽकारणत्वमुक्तमित्युक्तम् । एतत्सूत्रस्य द्रव्याणां द्रव्यमित्येतत्सूत्रात् पूर्वं निवेशे सत्येव अनेन सूत्रेण कर्माकारणत्वस्य कर्मणि कथनात् कारणसामान्याधिकारे तस्योक्तत्वं सिध्यति ; न त्वन्यथा । अतो लेखकप्रमादकृतः सूत्रयोः पौर्वापर्यविपर्यास इति उपस्कारादौ यथालब्धस्वीकारेण व्याख्यानं न हृद्यमिति ॥ २४ ॥

एवं तावत् विजातीयानेककारणत्वमप्येकस्याऽऽनुभविकमिति प्रपञ्चितम् । तत्र कथं कारणवैलक्षण्यं विना कार्यवैलक्षण्यमिति शङ्कायाः समुचितं परिहारं मनसिकृत्य, एकैकस्यापि कार्यस्यानेककारणजन्यत्वं वक्तुं कार्यसामान्याधिकारं प्रवर्तयति—

**२५. द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥**

द्रव्ये च द्रव्याणि च द्रव्याणि । तेषां कपालद्विक बहुतन्त्वादिकानां घटपटादिकं साधारणकार्यम् । अवयविद्रव्यं ह्यनेकावयवव्यासज्यवृत्ति सदेवोत्पद्यते ॥ २५ ॥

गुणानपि कांश्चिदनेकद्रव्यसमवेतानेवोत्पद्यमानान् दर्शयति—

**२६. द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च ॥**

द्रव्याणां कार्यं सामान्यमित्यनुवर्तते । पृथक्त्वेति द्विपृथक्त्वत्रिपृथक्त्वादिपरम् । एकपृथक्त्वस्यैकत्ववत् अव्यासज्यवृत्तित्वादेकमात्रकार्यत्वात् । 'द्वित्वादयो न प्रतियोगिसापेक्षाः ; पृथक्त्वादयस्तु तथा ; एवं द्विपृथक्त्वादेः प्रत्यक्षं द्वित्वादिज्ञानसापेक्षम् ; न तु द्वित्वादेरेतदपेक्षम्' इति ज्ञापनाय त्रयाणां समासः, द्वित्वादिपृथक्कारश्च ॥ २६ ॥

एवं कर्मणोऽप्यनेकद्रव्यकार्यत्वमिति न मन्तव्यमिति व्युत्पादयति—

२७. **असमवायात् सामान्यकार्यं कर्म न विद्यते ॥**

द्रव्याणामित्यनुवृत्तम् । असमवायात् अनेकद्रव्यसमवेतत्वाभावात् एकं कर्म नानेकद्रव्यनिरूपितकार्यताशालीति । उक्तं हि लक्षण एव, 'एकद्रव्यम्' इति । असति बाधे प्रयत्नवदात्मसंयोगानां प्रत्येकावयवगतानां प्रत्येकसमवेतकर्मारम्भकत्वमेव ह्युचितमिति भावः २७

एवं द्रव्यगुणकर्मसु द्रव्यगुणयोरेवानेकद्रव्यकार्यत्वमित्युक्त्वा त्रयाणामप्यनेकगुणकार्यत्वमस्तीति सूत्रत्रयेणाऽऽह—

२८. **संयोगानां द्रव्यम् ॥**

अनेकतन्तुसंयोगादीनामेकं पटादि सामान्यकार्यमित्यर्थः ॥२८॥

अनेकगुणसाध्यं द्रव्यरूपकार्यमुक्त्वा अनेकगुणकार्यं गुणमाह

२९. **रूपाणां रूपम् ॥**

तन्तुगतरूपाणामनेकेषां पटगतरूपं कार्यमिति ॥ २९ ॥

अनेकगुणसाध्यत्वं कर्मण्यपि दर्शयति—

३०. **गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥**

उत्क्षिप्यमाणे वस्तुनि यत् गुरुत्वम् तत्, प्रयत्नः, आत्मादिसंयोग इति त्रयमुत्क्षेपणकारणम् । तत्र हस्तोत्क्षेपणे आत्मसंयोगः कारणम् । मुसलोत्क्षेपणे तु हस्तमुसलसंयोगः । एवं प्रयत्नपूर्वकेषु क्रियान्तरेषु त्रितयजन्यत्वं बोध्यम् ॥ ३० ॥

अथानेककर्मकार्यत्वं कुत्रेति विशदयति—

**३१. संयोगविभागाश्च कर्मणाम् ॥**

संयोगविभागौ च संयोगविभागौ च संयोगविभागाः, कर्मणी च कर्मणी च कर्माणीति द्विवचनान्तशब्दैकशेषः। उभयकर्मजन्यौ हि संयोगविभागावनेककर्मजन्यौ। बहुवचनमीदृशस्थलानेकत्वाभिप्रायेण। 'अन्यतरकर्मज उभयकर्मजः' इत्येव संयोगादेः कथनात् तदधिकजन्यत्वं तस्य नास्ति। वेगस्य कर्मजन्यत्वेप्यनेककर्मजन्यत्वाभावादिहानुक्तिः। चकारेण पूर्वोक्तद्रव्यगुणकार्यसमुच्चयपरेणात्रैव सूत्रे कार्यसामान्यनिरूपणसमाप्तिः सूच्यते ॥ ३१ ॥

ननु किमित्यनेककर्मकार्यत्वं द्रव्यकर्मणोरनुक्त्वैवोपसंहार इष्यते इत्याशङ्कायां कारणसामान्याधिकारे, 'न द्रव्याणां कर्म', 'न कर्मणां कर्म' इति द्रव्यकर्मकारणत्वं कर्मणो नास्तीत्युक्तं हि। तेन अनेककर्मसाध्यत्वमपि द्रव्यस्य कर्मणश्च नास्तीति सिद्धमेवेत्याह—

**३२. कारणसामान्ये द्रव्यकर्मणां कर्माकारणमुक्तम् ॥**

कारणसामान्यप्रकरणे कर्म द्रव्यकर्मणी प्रति अकारणत्वेनोक्तमित्यर्थः ॥ ३२ ॥

एवञ्च एकैककार्यस्यापि अनेककारणसाध्यत्वात् तदन्तर्गतस्यैकस्य कारणस्यानेककार्यसाधारणत्वेऽपि कारणकलापरूपसामग्रीवैलक्षण्यात् कार्यवैलक्षण्यमुपपद्यते। अतो विजातीयानेककारणत्वमे-

---

उ. ३१. अत्र वेगोऽपि उपलक्ष्यः।

कस्याक्षतमिति, भवति कर्मापि पूर्वदेशोत्तरदेशादिरूपविचित्रकारणसमावेशबलात् विभागसंयोगरूपविजातीयकार्यद्वयकारणमिति कर्मलक्षणानन्तरप्रघट्टकार्थः। अर्थादेष विचारो द्रव्यगुणकर्मसु अन्यादृशसाधर्म्यवैधर्म्यविवेकोपयोग्यपि सम्पन्नः। न पुनः साधर्म्यवचनार्थमेव कारणसामान्यप्रकरणारम्भः; तथासति विशेषधर्मवचनात् प्रागेव तदौचित्यात्। यद्यप्युत्तराह्निकोपक्रमगतसूत्रद्वयमप्यत्रैव निवेशयितुं शक्यम्—अथाप्यतीन्द्रियद्रव्यगुणाद्यावश्यकाशेषार्थस्थापनोपयोगिनः सर्वश्रेयोमूलस्य कार्यकारणभावस्य परमतपरासनेन प्रतिष्ठापकं सूत्रं पृथगधिकारपदमर्हतीति परिशील्य आह्निकान्तरारम्भे स्थापितमिति स्थितस्य गतिरिति। एकस्मिन् अहनि यावदुक्तम्, तावत् आह्निकमिति च भाव्यम्॥

उपोद्घातस्तथोद्देशः ततस्त्रिषु सधर्मता।
वैधर्म्यं हेतुसामान्यं कार्यसामान्यमादिमे॥

इति वैशेषिकरसायनसहितवैशेषिकदर्शने प्रथमेऽध्याये प्रथममाह्निकम्

---

ननु कारणान्तरसमावेशबलात् एकस्यापि कारणस्य विचित्रकार्यकारणत्वं संभवतीत्ययुक्तम्। स्वयं कारणेन कारणान्तरापेक्षणायोगात्। यत् क्रियते, तत् कार्यम्; येन क्रियते, तत् कारणम्। न च कुसूलस्थं बीजमङ्कुरं करोति। अतः तन्न कारणम्। करोति तु क्षेत्रस्थबीजमिति तदेव कारणम्। न च क्षेत्रकुसूलस्थयोः बीजयोरैक्यम्, कुर्वतोऽकुर्वतश्चैक्यायोगात्। अङ्कुरकारित्वतदभावयोर्भावाभावरूपतया विरोधात्, विरुद्धयोरेकत्र समावेशायोगात्। न च

तयोर्भेदेऽप्येकजातीयतया कुसूलस्थबीजं कुतो न करोतीति शंक्यम्; वैजात्यस्याप्यङ्गीकारात्। क्षेत्रस्थबीजे हि कुर्वद्रूपत्वमिति वैजात्यमस्ति, नान्यत्रेति। तादृशं बीजं कुतस्त्यमिति चेत्—पूर्वक्षणबीजादेव। कुसूलस्थबीजं कुतस्तद्बीजं नाजीजनदिति चेत्—तादृशबीजजननोपयोगिवैजात्याभावादेव। एवञ्च विजातीयविचित्रोत्पत्तेः प्रतिक्षणं स्वीकारात् पदार्थानां क्षणिकत्वमिति विभागारम्भप्राक्कालिकं यत् कर्म, यच्च संयोगप्राक्कालिकम्, तदुभयमप्येकं न भवति। अतः कुर्वद्रूपं यदेकम्, तदभावे कार्याभावः, तथा कार्याभावे च तदभाव एवेति बौद्धप्रत्यवस्थाने प्रसक्ते—

तत्तद्वादिभिरन्यथाऽन्यथा तद् वारितम्। यथा चार्वाकैः,—'कारणाभावात् कार्याभाव इत्येतदेव न। तस्य तस्य वस्तुनः कदाचित् सत्त्वस्य कदाचिदसत्त्वस्य च स्वभावादेवोपपत्त्या कार्यकारणभावस्याकल्पनात्' इति। सांख्यैः—'सत्कार्यवादस्यैव प्रामाणिकतया सर्वमपि कार्यत्वाभिमतं सर्वदाऽस्त्येव। तथाच तिलतैलन्यायेन कूर्मपादप्रसरणन्यायेन च स्थितस्यैव कार्यस्य घटपटादेः कदाचिदभिव्यक्तिर्भवति; कदाचिच्च तिरोभावः। अतः सर्वस्य सर्वदैव सत्त्वात् कारणाभावः कार्याभावश्च दुर्वचः। एवमत्यन्तनित्यत्वात् पदार्थानां क्षणिकत्वं सुदूरापास्तम्' इति। वेदान्तिभिश्च, 'तन्तव एव ओतप्रोतभावापन्नाः पट इत्युच्यन्ते। मृत्पिण्ड एवावस्थान्तरमापन्नः घट इत्युच्यते। अतोऽवस्थायाः प्राक् अस्थितत्वेऽपि कारणद्रव्यस्यैव कार्यद्रव्यत्वात् कारणद्रव्याभावात् कार्यद्रव्याभाव इत्यनुपपन्नमेव' इति। एवं स्थिते स्वयमसौ वैशेषिको महर्षिः स्वभाववादं सांख्यवेदान्तिसम्मतसत्कार्यप्रक्रियां चानभ्युपगच्छन् बौद्धोक्तेऽर्धांशमङ्गीकरोति—

१. कारणाभावात् कार्याभावः ॥ (३३)

न तावच्चार्वाकमतः स्वभाववादः सम्यक् ; अन्नाद्यभिलाषेण पाकादिप्रवृत्त्ययोगप्रसङ्गात् । 'स्वभावत एव तृप्तिर्भविष्यति ; अन्नमुदरं प्राप्स्यति' इति तूष्णीं स्थितिसम्भवात् । यदि पाकादिप्रवृत्तिरपि यादृच्छिकी, तर्हि नियमेन तत्प्रवृत्तिरनुपपन्ना । पाकादिभङ्गप्रवृत्तिः परकीया च न वार्येत । अतो ज्ञायते अन्नेन नियतापेक्षितः पाक इति । तथाच तत् तत्र कारणमिति कारणाभावादेव क्वचित् कार्याभावः, न तु स्वभावादिति । न च सत्कार्यवाद उपपन्नः । केवलतन्त्वादिसत्त्वदशायाम्, 'पटो नास्ति' इत्यादिव्यवहारायोगप्रसङ्गात्, तुरीवेमादिव्यापारवैयर्थ्यप्रसङ्गाच्च ; तन्तुपटयोरभेदात् । अत एव प्रागेव सूत्रितं सजातीयारम्भकत्वप्रकरणे 'भविष्यति पट' इत्यादि । अतस्तदा कार्यभाव एष्टव्यः । एवञ्च कदाचित् कार्योपलम्भः कारणबलेन कार्यस्योत्पन्नत्वादुपपद्यत इति वक्तव्यमिति सिद्धः कारणाभावात् कार्याभाव इति । कारणाभावो द्विविधः—कारणसामान्याभावः कारणविशेषाभावश्च । क्वचित् सर्वस्यापि घटकारणस्याभावात् घटाभावः ; क्वचिद्दण्डचक्रादिषु कस्यचिदभावादिति । कारणाभावादिति पञ्चमी कारकहेतौ ज्ञापकहेतौ च । कारणाभावे सति कार्याभावस्यापि सत्त्वात्, द्वयोः प्रयोज्यप्रयोजकभावात् ; कारणाभावे ज्ञाते सति तेन कार्याभावानुमानाच्च । ननु व्रीहिभिर्यागः क्रियते, यवैरपि । तत्र व्रीहिरूपकारणाभावे यागाभाव इति कथमिति चेत्—उच्यते । यत्र वैकल्पिकाः नानोपायाः लोकवेदसिद्धाः, तत्र यद्येकजातीयकार्यं प्रत्येव तेषां विकल्पेन कारणता, तदा कार्यकारणभाव इत्थमुच्यते—

यवानुत्तरयागं प्रति व्रीहयः कारणम् ; व्रीह्यनुत्तरयागं प्रति च यवा इति । अतोऽन्यानुत्तरत्वविशिष्टस्यैव प्रकृतकार्यतया कारणाभावात् तादृश-कार्याभावो न क्षत इति ॥ १ ॥

नन्वेवं बौद्धमतस्वीकारे कुर्वद्रूपस्य बीजस्यैकस्यैवाङ्कुरकारणतया सर्वेषां क्षणिकत्वापत्त्या एकस्य क्रमेणानेककार्यकारणत्वरूपपूर्वोक्त-सिद्धान्तभङ्ग इत्यत्राह—

**२. न तु कार्याभावात् कारणाभावः ॥ (३४)**

अङ्कुराभावात् कुसूलेऽङ्कुरकारणबीजाभाव इति यद् बौद्धो-क्तम्, तत्तु नेष्यते । यथा कार्याभावस्य कारणाभावं प्रति कार-कहेतुत्वं न भवति, तथा ज्ञापकहेतुत्वमपि न भवति । घटाभावेऽपि मृत्पिण्डकुलालादिषु कतिपयकारणसत्त्वात् सामान्यतः कारणाभावस्य साधयितुमशक्यत्वात् । न हि पदार्थानां प्रतिक्षणभिन्नत्वे वैजात्ये च प्रमाणमस्ति । तदेव बीजं कुसूलस्थतादशायां सलिलकर्दमादिसहकार्य-भावादङ्कुरं न करोति ; क्षेत्रस्थितिकाले च सहकारिसमवधानात् करोती-त्यनुभवानुसारेणैव सर्वोपपत्तेः । अवश्यं च कार्यस्य बहूनि मिथस्सह-कारीणि कारणान्यङ्गीकार्याणि । अन्यथा किंल कर्षकाः कुसूल एव कालक्रमेण कुर्वद्रूपबीजसंभावनया जोषंभूताः जलजम्बालादिसम्भरणार्थं बहिर्न व्याप्रियेरन् । करोति, न करोतीति च कालभेदेनैकस्मिन्नेव घटते । न च तदानीमकरणमात्रेण बीजस्य कारणत्वाभावः, स्वरूपयोग्यतारूप-कारणत्वस्य सर्वदैव सत्त्वात् । स्वरूपयोग्यता च घटादिकं प्रति, प्रत्य-क्षसिद्धदण्डत्वकपालत्वादिरेव । अतः कतिपयकारणसत्त्वेऽपि सहकार्य-

भावेन कार्याभावदर्शनात् कार्याभावेन कारणसामान्याभावोऽनुमातुं न शक्यते। क्लृप्तसामग्र्यन्तर्गतकिञ्चित्कारणं न स्यादिति सामान्यतः काममनुमीयताम्। न तन्निवार्यते। तथा च कारणत्वं नाम स्वव्यतिरेकप्रयुक्तकार्याभावकत्वम्; कार्यनियतपूर्ववर्ति त्वं वा। कारणाभावे कार्यं न भवति; यत्र यत्र कार्यं तत्र तत्र कारणमिति चानुभवात्। अतः क्षणिकत्वाद्यभावादेकस्यापि पदार्थस्य क्रमेणानेकविचित्रकार्यकारणत्वं निराबाधमिति ॥ २ ॥

एवं प्रसक्ताशङ्कापरिहारव्याजेन कार्यकारणभावतत्त्वं व्युत्पाद्य द्रव्यगुणकर्मणामुद्देशसाधर्म्यवैधर्म्यवचनयोरवसितत्वात् सामान्यादित्रयं निरूपयति—

**३. सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ (३५)**

इतिशब्दः प्रकारवचनः। यथा निष्क्रमण—(२-२-२०) सूत्रे। तेन समवायोऽपि गृह्यते। अन्यथा तच्छब्दवैयर्थ्यात्। सामान्यविशेषसमवायत्रयं बुद्ध्यपेक्षमित्यर्थः। बुद्धिः अपेक्षा अपेक्षिका यस्य तद् बुध्द्यपेक्षम्। बुद्धेरपेक्षा यत्र तदिति वा। बुद्धिरनुवृत्तबुद्धिः, व्यावृत्तबुद्धिः, इहेदमिति बुद्धिश्च। तया बुद्ध्या यत् स्वोत्पत्तयेऽपेक्ष्यते तदित्यर्थः। तथाचानुवृत्तबुद्धिनियामकत्वं सामान्यस्य, व्यावृत्तबुद्धिनियामकत्वं विशेषस्य, इहेदमिति विशिष्टबुद्धिविशेषनियामकत्वं च समवायस्येत्युक्तं भवति। इत्थं बुद्धिहेतुत्वं च सूत्र एव स्पष्टम्, 'अनुवृत्तेरेव हेतुत्वात्' इति, 'इहेदमिति यतः'इति च। समानानां भावः सामान्यमिति विग्रहात् नित्यत्वे सति अनेकसमवेतं सामान्यम्, निस्सामान्यस्सन्

---

उप. सू. ३. सामान्यमात्रलक्षणपरं सूत्रम्।

नित्यद्रव्यवृत्तिर्विशेषः, नित्यः संबन्धः समवाय इति लक्षणाकथनेन एवं बुद्ध्यपेक्षत्वकथनमीदृशबुद्धिरूपप्रमाणबलात् सामान्यादिकं स्वीकर्तव्यमिति तत्र प्रमाणसूचनाय। इदमप्युक्तं भाष्ये, 'सामान्यादीनां त्रयाणां बुद्धिलक्षणत्वम्'इति। अनुवृत्तबुद्धिर्नाम—प्रथममेकं गां दृष्टवतो द्वितीयव्यक्तिग्रहणवशात् पूर्वव्यक्तिस्मरणे जाते अयमपि गौरिति पूर्वगृहीतव्यक्तिवृत्तिगोत्ववत्तया प्रकृतव्यक्तिग्रहणम्। तथाचानेकवृत्तित्वप्रकारकबुद्धिविषयत्वं सामान्यस्येत्युक्तं भवति। एवं महिषादिकं ज्ञातवतो गोदर्शनकाले, अयं तु 'गौरित्यन्यावृत्तिगोत्ववत्तया व्यक्तिग्रहणं भवति। एवञ्च किञ्चिदवृत्तित्वप्रकारकबुद्धिविषयत्वमपि गोत्वस्य। तदिदं नित्यद्रव्यगतेषु विशेषेष्वप्यस्ति। तथाहि—यथाऽस्मदादीनां गवादिष्वश्वादितो व्यावृत्तिबुद्धिः तत्तद्गतासाधारणधर्मप्रयुक्ता, तद्वदेव योगिनामेकजातीयेषु पृथिव्यादिपरमाणुषु मुक्तात्मतन्मनस्सु च मिथो व्यावृत्तिबुद्धिः तत्तत्प्रतिनियतकिञ्चिद्विशेषप्रयुक्तेति स्वीकर्तव्यम्। अत एव स एव परमाण्वादिः विभिन्नदेशकालावच्छेदेन दृश्यमानः, 'स एवायम्, नान्यः' इति योगिभिः प्रत्यभिज्ञायते। एवञ्च तत्तत्प्रतिनियतस्य विशेषपदार्थस्येतरावृत्तित्वप्रकारकज्ञानविषयत्वं सुस्थम्। न च-योगिनः एकपरमाणुगतविशेषस्यापरपरमाणुगतविशेषस्य च मिथो भेदं कीदृशधर्मबलात् साक्षात्कुर्वन्ति; तयोर्विशेषयोर्भेदग्रहणाभावे चान्यावृत्तित्वेन स विशेषः कथं ज्ञायेतेति शङ्क्यम्—व्यावृत्तिबुद्धिजननार्थमेव कल्पितानां विशेषाणाम् अनवस्थाभिया स्वत एव व्यावृत्तत्वस्वीकारादिति। अत्र संक्षेपेण लक्षितस्य समवायस्य स्वरूपं संबन्धि च सूत्रकृदेवावसरान्तरेऽभिधास्यति ॥ ३ ॥

ननु गोत्वादेः सामान्यस्य व्यावृत्तिहेतुतया विशेषत्वस्यापि संभवात् यदेव सामान्यम्, स एव विशेष इत्युभयोरैक्यादुद्देशसूत्रे सामान्यविशेषयोः पृथङ्निर्देशो न युक्त इत्यत्राह—

**४. भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ॥ (३६)**

भू सत्तायामिति भावः सत्ता। सत्ताभावयोरैक्यं च, 'सदिति लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैको भाव' इति सूत्रमेव दर्शयति। तस्य च सर्वत्र वर्तमानतया किञ्चिद्व्यावृत्तत्वाभावेन व्यावृत्तधीहेतुत्वं नास्ति। केवलम्, इदमपि सत्, इदमपि सदित्यनुवृत्तधीहेतुत्वमेव। न च सत्ताया अपि संयोगादिसम्बन्धेन द्रव्याद्यवृत्तितया तदवृत्तित्वधीविषयत्वमस्तीति वाच्यम्; किञ्चिन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्यैवेह व्यावृत्तिपदार्थत्वात्। अत एवाप्रसिद्ध्या सामान्यादिव्यावृत्तिरपि सत्तायां दुर्वचेति। तथाचास्य सामान्यमात्रत्वादुद्देशसूत्रे सामान्येत्यवश्यं वक्तव्यमिति ॥४॥

तर्हि सत्ताव्यतिरिक्तानां सर्वेषामुद्देशसूत्रे विशेषपदेन ग्रहणमिति सिद्ध्यति। एवञ्चानुवृत्तिनियामकत्वरूपं लक्षणं तेष्वतिव्याप्तमित्यत्राह—

**५. द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च ॥ (३७)**

द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि; तेषां यथायथं द्रव्यादिष्वनुवृत्तिहेतुत्वात्। चकारोऽनुक्तसर्वजातिसमुच्चयार्थः। विशेषाश्चेति चकारोऽन्वाचये। तेनाप्राधान्यं ध्वन्यते। एवं सामान्यभूतानामेषां व्यावृत्तिहेतुतया विशेषत्वाकारोऽप्यस्ति। तावता न ते मुख्यविशेषा इति। तदुक्तं भाष्ये, 'प्राधान्येन सामान्यानि, स्वाश्रयविशेषकत्वात् भक्त्या विशेषाख्यानी'ति। अतः सामान्यपदेन सर्वसंग्रहान्न लक्षणमव्याप्त्यतिव्याप्तीति भावः ॥ ५ ॥

नन्वेवं सति घटत्वादिपर्यन्तानां सर्वेषां सामान्यतया विशेषपदग्राह्यमेव, किमस्तीति व्यर्थमुद्देशसूत्रे विशेषपदमिति नित्यद्रव्यवृत्तिविशेषपदार्थमविदुषश्चोद्यं रुणद्धि—

६. **अन्यत्रान्त्येभ्यो विशेषेभ्यः ॥ (३८)**

अन्यत्रेति विनार्थेऽव्ययम् । अन्त्यान् विशेषान् वर्जयित्वा अन्ये विशेषाः सामान्यानि भवन्तीत्यर्थः । 'अन्ते अवसाने वर्तन्त इति अन्त्याः' इति किरणावळी । अवसानं व्यावर्तकसीमा । तत्र वर्तन्ते । तदुपरि व्यावर्तकान्तरं नास्तीत्यर्थः । 'अन्तेषु भवाः अन्त्याः' इति तु भाष्यम् । अन्तशब्देनोत्पादविनाशावसानगतानि नित्यद्रव्याण्युच्यन्ते । तदपि तत्रैव दर्शितम्, 'विनाशारम्भरहितेषु नित्यद्रव्येषु' इति । तथा च तत्रत्यानां तेषां प्रतिव्यक्तिभिन्नतयाऽनुवृत्तिहेतुत्वप्रसक्तिरेव नास्तीति तत्परम् उद्देशसूत्रे विशेषपदम् । एवञ्च व्यावृत्तिधीनियामकत्वमित्यस्य व्यावृत्तिधीमात्रनियामकत्वमित्यत्र तात्पर्यान्न विशेषलक्षणस्य सामान्यविशेषेष्वतिव्याप्तिः । न च विशेषपदेनैव सर्वं गृह्यताम् । सामान्यपदमेव सत्तामात्रे सङ्कोच्यतामिति वाच्यम्—प्रथमप्रयुक्तसामान्यपदासंगृहीतस्यैवोत्तरप्रयुक्तविशेषपदेन ग्रहणौचित्यात् । अनुवृत्तबुद्ध्या सामान्यस्य सिद्ध्यनन्तरमेव तस्य व्यावृत्तिहेतुताया अपि ग्रहणाच्च । अस्मदाद्यत्यन्ताप्रत्यक्षविशेषगोष्ठ्यामतिप्रसिद्धगोत्वघटत्वादेर्निवेशस्यानुचितत्वाच्च । ननु रूपादीनामपि प्रतिव्यक्ति भिन्नतया व्यावृत्तिहेतुत्वादतिव्याप्तिरिति चेन्न—नीलं नीलमित्यनुगतप्रतीतिसत्त्वेनानुवृत्तिहेतुत्वस्याप्यावश्यकत्वात् । तर्हि नीलरूपं सर्वत्र स्थितं किमेकमेवेति चेत्—नैतत्—तत्रतत्र तदुत्पादविनाशप्रत्यक्षसत्त्वेनैकत्वायोगात् । तर्हि कथमनुवृत्तिरिति चेत्—नील-

त्वजातिपुरस्कारेण । तथाच स्वरूपतो धर्मतो वाऽनुवृत्तिबुद्ध्यनियामकत्वे सति व्यावृत्तिबुद्धिनियामकत्वं विशेषलक्षणम् । तच्च निर्दुष्टमिति ॥

अथ योगिनां विशेषेषु, अयं विशेषः, अयमपि विशेष इत्यनुगतबुद्ध्युदयात् कथं विशेषस्यानुवृत्तबुद्ध्यविषयत्वमिति चेत्—न, विभागव्युत्पादनसौकर्याय परमाणुगतविशेषाणां सर्वेषां विशेषपदेन सूत्रकृता परिभाषितत्वेऽपि योगिभिः तत्तत्प्रत्यक्षकाले तत्तद्विशेषस्यात्यन्तविलक्षणत्वेनैव प्रत्यक्ष्यमाणतया, अयमपि विशेष इत्यनुवृत्तबुद्धेरभावात् । न च विशेषत्वं नाम काचिज्जातिरस्ति । तथासति तस्य धर्मस्य द्रव्याद्यवृत्तितया व्यावृत्तिधीविषयत्वापत्तेः । न चेष्टापत्तिः, विशेषाणां द्रव्याद्यपेक्षया व्यावृत्तिर्विशेषत्वाधीनेत्यापत्तेः । न खलु सरूपविशेषान्तरतोऽपि स्वत एव व्यावृत्तत्वस्वभावशालिनो विशेषस्य विरूपद्रव्यादिव्यावृत्तत्वसिद्धये धर्मान्तरापेक्षेति समुचितमुत्प्रेक्षितुम् । अतः स्वतोव्यावृत्तत्वस्वरूपहानिर्मा भूदिति तत्र न जातिस्वीकारः । इदमेव दर्शयितुं प्राचीनैः, 'यदि द्रव्यवृत्तयो विशेषाः जातिमन्तः स्युः, तर्हि गुणाः कर्माणि वा स्युः' इत्युच्यते ; नवीनैश्च 'जातिमतां जात्यैव व्यावृत्तेः' इति । इमे च विशेषाः न परमाणुमात्रे । किंतु विभुद्रव्येष्वपि । बद्धात्मनां तत्तन्नियतसुखदुःखधर्माधर्मादितः व्यावृत्तिसम्भवेऽपि मुक्तात्मसु मिथोभेदनियामकस्यान्यस्याभावात् । गगनादावपि सृष्टिकाले शब्दाद्यधीनवैलक्षण्येऽपि प्रळये मुक्तात्माद्यपेक्षया वैलक्षण्यस्यान्यथा दुर्ग्रहत्वादिति ॥ ६ ॥

एवमुक्तेषु सामान्यादिषु त्रिषु विशेषा न परीक्षणीयाः । योगिभिः कणादादिभिर्निस्संशयमेव तदुपलम्भात् । अयोगिनामतीन्द्रियेषु तेषु

स्वरसतो भ्रमसन्देहयोरयोगात् ; ज्ञाप्यांशस्य ज्ञापितत्वाच्च । एवं समवायोऽप्यतीन्द्रियः एकश्चेति न तत्रापि परीक्ष्यमधिकमस्ति । केवलं कीदृशविशिष्टबुद्धिनियामकत्वमित्येव विज्ञातव्यम् । तच्च विशिष्टघटकविशेष्यविशेषणविवेकानन्तरं व्युत्पादयितुमुचितमिति विभाव्य सामान्यमात्रमत्रैव लघुत्वाय परीक्षते एतदाह्निकशेषेण । तत्र सत्तायाः केवलानुवृत्तधीहेतुत्वकथनात् सामान्यविशेषसमवायेष्वपि सा सत्ता अस्तीति मन्येत । गवादिषु अयं गौः, अयमपि गौरित्यनुगतबुद्धिवत् द्रव्यादिष्वनुगतबुद्धिर्न दृश्यते । द्रव्यं हि द्रव्यमित्येव प्रतीयते । गुणश्च गुण इत्येवेत्यपि शङ्कयेत । तत् सर्वमपनोदितुमाह—

७. सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥ (३९)

द्रव्यगुणकर्मसु सदिति प्रत्ययो यस्मात् सामान्याद्भवति, सा सत्तेति । द्रव्यं द्रव्यमित्यादिप्रतीतेरनुगतत्वाभावेऽपि सदिति प्रतीतिरनुगताऽस्तीति भावः । अन्येषां गोत्वादीनां सामान्यानां यथायथम् आकृत्या कार्यकारणादिना वाऽभिव्यक्तिः ; अस्यास्तु सत्तायाः व्यक्तिमात्रव्यङ्ग्यत्वमिति द्रव्यादिसर्वानुगताकृत्यभावेऽपि न क्षतिः । द्रव्यादित्रयमात्रनिर्देशात् सामान्यादौ इयं नेति सूचितम् । न च सामान्यं सत्, विशेषः सन्नित्यादिप्रतीत्या तत्रापि तत्सिद्धिरिति वाच्यम्—विशेषसमवाययोरतीन्द्रियतया तत्र तादृशानुभवाभावात् । नापि सामान्ये, सामान्यस्य सर्वदा व्यक्तिप्रकारतयैव भासमानतया विशेष्यतया भानस्य जगत्यदर्शनेन तत्र 'इदं सत्' इति प्रत्ययोपदर्शनायोगात् । गौः सन्नित्येव हि लोकानुभवः ; न तु गोत्वं सदिति । अत एव, सामान्ये सत्ता सामानाधिकरण्यसम्बन्धेनास्ति ; न तु साक्षादित्युच्यते ।

किञ्च यदि सामान्ये सत्ता स्यात्, स्वात्मन्यपि स्यात्; सत्ता सतीत्यपि प्रतीतिसम्भवात्। एवञ्चात्माश्रयः; स्वस्य स्वनिष्ठत्वायोगात्। तत्रान्यथा निर्वाहे च स निर्वाहः सामान्यान्तरेऽपि तुल्य इति, यत्र बाधकं नास्ति, तत्रैव द्रव्यादौ सत्तासिद्धिः। अन्यथा सामान्ये सत्ताजातेः द्रव्यादिसाधारण्याः स्वीकारे सर्वसामान्यमात्रवृत्तिसामान्यत्वरूपजात्यन्तरस्यापि स्वीकारापत्तिः। अतो जातिबाधकसद्भावान्न सामान्यादिषु सत्तेति ॥ ७ ॥

ननु सत्ताया द्रव्याद्यतिरिक्तत्वे किं मानम्? जातिव्यक्त्योरभेदस्यैव युक्तत्वात्। अन्यथा घटपटादीनां पृथक्पृथग्भानवत् व्यक्तिं विनापि जातिग्रहणं स्यात्। अतः सहैवोपलम्भात् तयोरभेदः। यद्येवमपि, इह गवि गोत्वम्, गोत्ववान् गौरित्याधाराधेयभावप्रतीतिः स्यात्, भेदः शङ्क्येतापि। न त्वेवम्। अयं गौरित्यभेदस्यैवानुभवात्। एवमिदं सदित्यपि। किञ्च द्रव्यं सदित्यस्य द्रव्यं गुणादिविशिष्टमित्यर्थः; गुणः सन्, कर्म सदिति च गुणादिकं द्रव्यवृत्तित्वविशिष्टमित्यर्थकम्। अतो न द्रव्याद्यतिरिक्ता सत्तेत्यत्राह—.

८. द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता ॥ (४०)

द्रव्यगुणकर्मापेक्षयाऽन्यः पदार्थः सत्तेत्यर्थः। जातिव्यक्त्योरेकत्वं तावन्न भवति; जातेरेकत्वादनुगतत्वात्; व्यक्तीनामनेकत्वादननुगतत्वाच्च। न ह्येकानेकयोरनुगताननुगतयोर्वा ऐक्यं सम्भवति। किञ्च यदि द्रव्याभिन्ना सत्ता गुणाभिन्ना च, तर्हि तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात्-गुणो द्रव्याभिन्नोऽपि स्यात्। अतो जातिव्यक्त्यो-

राधारधेयभावाद्भेद एव । तर्हि, 'इह गवि गोत्व 'मिति कुतो न व्यवहार इति चेत्, गोत्वादेर्द्रव्यप्रकारतयैवानुभूयमानत्वात् । धर्म-धर्मिणोर्मध्ये हि धर्मस्य प्रकारतया, धर्मिणो विशेष्यतया च भान-मेवाऽऽनुभविकम् । तर्हि गोत्ववान् गौरिति व्यवहारः स्यादिति चेत्—सत्यम् गोत्वप्रकारको गोविशेष्यकश्चैव प्रत्ययो जायते । परन्तु गोत्ववानिति शब्दो न प्रयुज्यते । गोशब्देनैव विवक्षित-जातिविशिष्टस्योक्ततयाऽधिकशब्दप्रयोगस्यानपेक्षितत्वात् । न हि अयं गौरित्यस्य, इयं काचिज्जातिरिति वा, इदं व्यक्तिमात्रमिति वा, इयं व्यक्तिः काचिज्जातिरिति वाऽर्थः । किन्तु, 'अयं किञ्चिज्जातिमान्' इति । तस्मादभेदस्याप्रतीयमानतया भेदस्यैव प्रतीयमानतया च न जातिव्यक्त्योरैक्यम् । यत्तु—'द्रव्यं सत्' 'गुणः सन्' इत्या-देरन्यथाऽन्यथाऽर्थवर्णनम्, तत् एकाकारानुभवविरुद्धम् । न च लक्षणां विना सच्छब्दस्यैतावदनेकार्थकत्वमपीति ॥ ८ ॥

ननु मा भूदनेकार्थकत्वम् । कर्मवत्त्वं वा गुणवत्त्वं वा कश्चिदर्थोऽस्तु । गुणकर्मणोः तद्व्यवहारश्च सामानाधिकरण्यसम्बन्धेन कर्मादिमत्त्वात् भवत्वित्यत्राह—

**९. गुणकर्मसु च भावान्न कर्म न गुणः ॥ (४१)**

न तावत् कर्म सत्ता ; कर्मणः सर्वद्रव्यवृत्तित्वस्याप्यभावात् । नापि गुणः ; सर्वद्रव्यवृत्तित्वेऽपि कर्मवदेव गुणकर्मावृत्तित्वात् । अत्र न कर्म न गुण इति क्रमनिर्देशः, 'कर्मपक्षः फल्गुतरत्वात् पूर्वं' इत्या-शयेन । कर्मगुणेष्वित्यनुक्त्वा गुणकर्मस्वित्युक्तिः, 'नात्र यथा-

संख्यविवक्षा ; गुणवृत्तित्वं कर्मवृत्तित्वं वा किञ्चिदादायापि पक्षद्वय-निषेधः सुकरः' इति ज्ञापनाय । तथाचानुगतप्रतीतेः एकेनानुगतेन सम्बन्धेनानुगतैकार्थविषयकत्वौचित्यात् अतिरिक्तैव सत्तेत्युक्तं भवति । केचिदाहुः—प्रमाणसंबन्धित्वं सत्त्वम्, कार्यकारित्वं वेति । तन्न । न हि प्रमाणासंबन्धदशायां कार्यकारणदशायां च वस्तु असद्भवति । अतो विशेष्यतयाऽननुभूयमानसामान्याद्यपेक्षया विशेष्यतया भासमानेषु द्रव्यादिषु त्रिषु किमप्यनुगतं वैजात्यमावश्यकमिति सत्ता स्वीक्रियते ९

सत्ताया द्रव्यादितोऽर्थान्तरत्वे हेत्वन्तरमाह—

**१०. सामान्यविशेषाभावेन च ॥ (४२)**

द्रव्यत्वादीनां सामान्यविशेषाणां पूर्वोक्तानां सत्तायामभावाच्च सा ततोऽर्थान्तरम् ; अस्याः द्रव्यादिरूपत्वे च गुणकर्मघटादिषु इदं सदिति प्रत्ययव्यवहारवत् इदं गुणवत् कर्मवत् द्रव्यवदिति प्रत्ययव्यवहारौ स्यातामिति । तत् सिद्धं सत्ता अर्थान्तरमिति ॥ १० ॥

अथ पूर्वोक्तद्रव्यत्वादिकमपि स्थाप्यते । तत्र सत्तायाः गुण-कर्मसु भावात् गुणकर्मरूपत्वं न भवतीत्युक्तम् । तर्हि द्रव्यत्वस्य गुण-कर्मसु अभावाद् गुणादिरूपत्वमेव किं न स्यात् । अतः किमिति सामान्यविशेषरूपं द्रव्यत्वं प्रागुक्तमित्याशङ्कामपनुदन् सत्ताया इव द्रव्यत्व-स्याप्याश्रयाद्यन्यत्वमाह—

**११. अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥ (४४)**

अनेकं द्रव्यमाश्रयतयाऽस्यास्तीत्यनेकद्रव्यवत् । द्रव्यं द्रव्यमिति प्रत्ययविषयधर्मस्य सर्वद्रव्यसमवेतत्वात् कस्यापि कर्मणो गुणस्य वा सर्व-

वृत्तित्वाभावात् द्रव्यत्वमपि न कर्मादिरूपम्; किन्तु सामान्यमेव प्रागुक्तमित्यर्थः । अत्र द्रव्यवत्त्वेनेति प्रयोगेणाधाराधेयभावादपि भेदो दर्शितः ११

**१२. सामान्यविशेषाभावेन च ॥ (४४)**

न केवलमुक्तयुक्त्या द्रव्याद्यपेक्षया द्रव्यत्वस्यान्यत्वम्; सामान्यविशेषाणां पृथिवीत्वादीनां द्रव्यत्वेऽभावादपि । न खलु द्रव्यत्वं पृथिवी भवति, जलम्, अन्यद्वा । न च रूपत्वादिकं द्रव्यत्वेऽस्तीति । अतो न द्रव्यरूपम्, नापि गुणादिरूपमिति ॥ १२ ॥

ननु गुणत्वरूपं सामान्यं कथमुक्तम् । उपसर्जनत्वरूपगुणत्वस्य कर्मादावपि सत्त्वात् । द्रव्यस्यापि द्रव्यान्तरोपसर्जनत्वात् । चतुर्विंशतिमात्रे तद्व्यवहारस्य च केवलं तार्किकपरिभाषामात्रतया लोकानुभवमूलत्वाभावेन जातिनिबन्धनत्वे मानाभावात् । तत्राह—

**१३. तथा गुणेषु भावाद् गुणत्वमुक्तम् ॥ (४५)**

न तावद् गुणा एव गुणत्वम् । तेषु सत्त्वात् । आधाराधेययोर्भेदात् । न चातिप्रसक्तम्—चतुर्विंशतिमात्रे भावात् । द्रव्यकर्मणोः संयोगविभागरूपभिरुद्धद्रव्यकारणत्वात् तद्विलक्षणेषु रूपादिष्वनुगतं किञ्चिद्वैजात्यमावश्यकमिति विभाव्यैव गुणमात्रवृत्तित्वात् गुणत्वं प्राक् उक्तमित्यर्थः ॥ १३ ॥

**१४. सामान्यविशेषाभावेन च ॥ (४६)**

गुणत्वे रूपत्वपृथिवीत्वादीनां सामान्यविशेषाणामप्रतीत्या अभावेन गुणत्वमप्यन्यदेव द्रव्यगुणादिभ्य इति ॥ १४ ॥

ननु कर्म क्रिया। क्रियात्वञ्च अस्ति, गच्छति, जानाति, यतत इति सर्वधात्वर्थसाधारणम्। अतो गुणत्वादिना सांकर्यान्न कर्मत्वं जातिः। अत आश्रयातिरिक्तं कर्मत्वं नेत्यत्राह—

१५. **कर्मसु भावात् कर्मत्वमुक्तम्॥** (४७)

धात्वर्थमात्रं क्रियेति व्यवहारस्य केवलं वैयाकरणसंकेतमूलकत्वात्, चलतीत्यनुगतप्रतीतिबलेनोत्क्षेपणादिषु पञ्चस्वनुगतजातेः सिद्धतया तस्या एव कर्मत्वरूपत्वात् तस्याः तेष्वेव वर्तमानतया सांकर्याभावादाधाराधेयभेदस्यावश्यकत्वाच्च कर्मत्वमपि प्राक् उक्तमित्यर्थः १४

१६. **सामान्यविशेषाभावेन च॥** (४८)

न हि कर्मत्वे उत्क्षेपणत्वादिकं गुणत्वादिकं वाऽस्तीति। अत्र पुनःपुनः सामान्यविशेषाभावेन चेति सूत्रणेन द्रव्यत्वगुणत्वकर्मत्वव्याप्या अपि सामान्यविशेषाः सन्तीति दर्शितं भवति॥ १६॥

नन्वस्तु तावद्धर्म्यतिरिक्तैव सत्ता। अथापि यथा नीलं नीलमित्यनुगतप्रतीतिसत्त्वेऽपि नीलद्रव्येषु न नीलत्वमेकम्, तथा सदितिबुद्धिविषयेषु सत्ताऽप्यनेका स्यात्। एवञ्च द्रव्यगुणकर्माणि अनुगतधर्मवन्ति सदित्यनुगतप्रतीतिविषयत्वात् नीलं नीलमित्यनुगतप्रतीतिविषयद्रव्यवदित्यनुमानं दुष्टम्; दृष्टान्ते साध्यवैकल्याद्व्यभिचारात्। अतः सत्ता द्रव्यादिगतद्रव्यत्वादिरूपा वा स्यात्, अन्यादृशी वा; न त्वेकैवेत्यत्राह—

१७. **सदिति लिङ्गाविशेषात् विशेषलिङ्गाभावाच्चैको भावः॥** (४९)

सत् इति बुद्धिरूपं लिङ्गं साधकप्रमाणं द्रव्यगुणकर्मसु अविशिष्टम्। तेनानुगतधर्मसिद्धिः। न च दृष्टान्ते साध्यवैकल्यम्-नीलरूपात्म-

कस्य नीलत्वस्याप्यनुगतत्वेनानुगतधर्मवत्त्वरूपसाध्यवत्त्वात्। परन्तु तस्य धर्मस्य किं स्वरूपतोऽनुगतत्वम्, नीलरूपत्वात्मकजातिपुरस्कारेण वेत्यन्यदेतत्। तत्र नीलद्रव्येषु नीलरूपस्यैकत्वे उत्पादविनाशानुभवविरोधापत्तेः, नीलत्वस्य द्रव्यगतस्य जातिरूपत्वाभ्युपगमे घटत्वादीनां सांकर्यापत्तेश्च, 'नीलरूपं नाना। तद्वृत्तिजातिपुरस्कारेण चानुगतत्वम्' इतीष्यते। अतस्तत्र विशेषलिङ्गं भेदसाधकलिङ्गमस्ति। एवं नीलद्रव्यरञ्जितेषु वस्त्रकम्बलादिषु नीलं नीलमिति प्रत्ययेऽपि बोध्यम्। अत्र तु तथा भेदसाधकलिङ्गाभावात् सदिति लिङ्गमनुगतधर्मसाधकं लाघवादेकधर्मात्मकमेव साध्यं साधयतीति भावः। अत्र सदिति बुद्धौ लिङ्गपदप्रयोगात् तस्या बुद्धेः प्रत्यक्षज्ञानरूपतया स्वकारणभूतस्वविषयभूतवस्तुसाधकत्ववत् उक्तानुमानविधयाऽपि वस्तुसाधकत्वमुपपन्नमिति ज्ञापितम्। भाव इत्युपलक्षणम्। सर्वस्यापि सामान्यस्य प्रत्येकमेकत्वमुक्तदिशैव मन्तव्यम्॥

इदञ्च गोत्वादिकं नित्यं सामान्यं स्वयं विभु गोमहिषादिषु सर्वत्र स्वरूपसंबन्धेन संबद्धमपि गवादिमात्रे समवायेन संबद्धत्वात् तत्रैव गौरित्यादिप्रतीतिं जनयतीत्येकः पक्षः। विशिष्टबुद्धिसत्त्व एव घटाभाववद् भूतलमित्यादौ अभावस्वरूपस्येव तत्र तत्र स्वरूपस्य संबन्धत्वस्वीकारात् गोत्वादेः महिषादौ स्वरूपसंबन्धेन संबद्धत्वे प्रमाणाभावादन्यत्रासंबद्धमेव केवलं गवादिमात्रे संबद्धमिदम्; तत्रैवानुभवात्; यथानुभवमेव वस्तुकल्पनात्। न च पूर्वोत्तरदेशस्थयोर्गवोः गोत्वं मध्यदेशासंबद्धं कथं संबध्यत इति मन्तव्यम्—विन्ध्यहिमवतोर्द्वित्वमिव मध्यदेशासंबद्धमित्येवमनेकोदाहरणसंभवात्। इयांस्तु विशेषः—सावयवद्रव्यत्वाभावात् सामान्यमेव द्वित्वादिकम् आधारे स्वयमंशतोऽवर्तमानमपि न, एकत्र द्वावित्यादि-

बुद्धिं जनयति । न च जातिर्विभ्वी, सर्वमूर्तसंयोगित्वरूपविभुलक्षणाभावात् । कथञ्चिद् विभुत्वेऽपि सर्वत्र संबन्ध इत्यपि नास्ति ; विभूनामेव मिथस्संबन्धानङ्गीकारात् । नापि व्यक्तिभेदेन जातिभेदः, एकत्वेनैव सिद्धेः : । अतो गवादिमात्रसंबद्धैव गोत्वादिजातिरित्यन्यः पक्षः । द्वितीयपक्ष एव भाष्यसंमत इति स्पष्टं तद्व्याख्यास्वित्यलम् १७

तत्त्वं कारणभावस्य सामान्यादित्रयस्य तु ।
लक्षणं तत्परीक्षेति प्रथमान्त्ये त्वयं स्थितम् ॥

इति वैशेषिकरसायनसहित वैशेषिकदर्शने
प्रथमेऽध्याये द्वितीयमाह्निकम् प्रथमाध्यायश्च ॥

श्रीरस्तु

---

श्रीः

द्वितीयेऽध्याये प्रथममाह्निकम् ।

एवं षडपि पदार्था उद्दिष्टाः, सामान्यतो लक्षिताश्च । अथ पृथिव्यादीनां विशेषाणां पृथङ्निरूपणमारभ्यते । तत्रायं गुणविनिवेशाधिकार इति भाषितम् । [1]अत्र ह्याह्निके तत्तद्विशेषगुणविशिष्टभूतपञ्चकनिरूपणमिति । तत्रादौ पृथिव्या विशेषगुणानाह—

**१. रूपरसगन्धस्पर्शवती पृथिवी ॥ (५०)**

शुक्ल नील पीत रक्त हरित कपिश चित्रभेदेन सप्तविधमपि रूपम् , मधुराम्ल लवण तिक्तकटुकषायभेदेन षड्विधोऽपि रसः, सुरभ्य-

सुरभिभेदेन द्विविधः सुरभ्यसुरभ्युदासीनभेदेन त्रिविधो वा ,सर्वो गन्धः, स्पर्शेषु पाकजानुष्णाशीतमात्रञ्च पृथिव्यां सन्ति। इमेऽस्याः विशेषगुणाः। अन्ये तु संख्यादयः सामान्यगुणाः। विशेषगुणत्वं नाम पृथिव्यादिद्रव्यविशेषभेदेन वैजात्यवद्गुणत्वम्। रूपरसादेः पृथिव्याद्यनेकवृत्तित्वेऽपि पृथिवीवृत्तिरूपे जलवृत्तिरूपापेक्षया वैजात्यमस्ति; तथा जलरूपेऽपीत्येवम्। तथा च किरणावली, "सहस्रशोऽग्निसंयोगेनाप्यपरावर्तमानम् अभास्वरशुक्लमेव रूपमप्सु" इति, "सहस्रशः पच्यमानमपि माधुर्यमेवैषत्स्वभावं—तथैव" इति च। क्षाररसोऽपि लवणभेद इति जगदीशसूक्तिः। क्वचिद्रूपाद्यनुलम्भः स्थितस्यापि तस्यानुद्भूतत्वात्, अभिभूतत्वाद्वा। एवमग्रेऽपि ॥ १ ॥

* २. रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाश्च ॥ (५१)

अभास्वरशुक्लविशेषः, मधुररसविशेषः, शीतस्पर्शः, सांसिद्धिकद्रवत्वम्, स्नेहः सर्वश्चापां विशेषगुणाः। रूपान्तराद्युपलम्भस्तूपाधिवशात्। क्षीरतैलादिषु पार्थिवेषु स्नेहः तत्संयुक्तोदकभागगत एव ॥२॥

३. तेजो रूपस्पर्शवत् ॥ (५२)

भास्वरशुक्लरूपमुष्णस्पर्शश्च तेजसो विशेषगुणौ ॥ ३ ॥

* ४. वायुः स्पर्शवान् ॥ (५३)

अपाकजोऽनुष्णाशीतस्पर्श एव वायोर्विशेषगुणः ॥ ४ ॥

उपक्रान्ताः रूपादयश्चत्वार एकैकह्रासेन क्रमेण वाय्वन्तेषु भूतेषु दर्शिताः। अथ पञ्चमे प्रकृताध्यायप्रतिपाद्यभूतपञ्चकान्तर्गते

---

१. उपस्कारे नवद्रव्यलक्षणं प्रथमाह्निकार्थ इत्युक्तम्।

आकाशे वक्तव्यो गुणो नावशिष्यत इति जिज्ञासायामुक्तचतुष्टयरहितमेव तदित्याह—

५. त आकाशे न विद्यन्ते। (५४)

भूतनिरूपकत्वादस्याह्निकस्यात्राऽऽकाशमात्रोक्तिः। कालादिष्वपि ते न विद्यन्त एव। न चैतद्गुणाभावमात्रेणाकाशस्याप्यभावः, स्थापयिष्यमाणत्वादिति। ननु नीलं नभ इत्यबाधितप्रत्यक्षबलात् नीलरूपमाकाशस्य संमन्तव्यमिति चेन्न—वस्तुतो नीलरूपसद्भावे सन्निकृष्टाकाशभागेऽपि तदुपलम्भप्रसङ्गात्। तर्हि दूरे वा कथं तत्प्रत्यक्षमिति चेत्—प्रभानुपलम्भात्। सुदूरं गच्छत् चक्षुः अशक्तया परावर्तमानं स्वकनीनिकारूपम् अध्यस्यतीति तु कन्दलीकृतः। एवं तर्हि पिङ्गलनयनानामपि कथं नीलप्रत्यक्षमित्याक्षिपन्ति। पतञ्जलिप्रामाण्यात् मेरुदक्षिणकूटस्थनीलरूपप्रभाततिरियं दूरे दृश्यत इति किरणावलीकृतः। तथा च पातञ्जले (३-२५), "यस्याः सुमेरुर्मध्ये पर्वतराजः काञ्चनः। तस्य रजतवैदूर्यस्फटिकहेममणिमयानि शृङ्गाणि। तत्र वैडूर्यप्रभानुरागान्नीलोत्पलपत्रश्यामो नभसो दक्षिणभागः"इति ॥ ५ ॥

ननु द्रवत्वं कथमपां विशेषगुणः, पृथिवीतेजसोरपि दर्शनादित्याशङ्कायां ततोऽत्र विशेषं दर्शयति—

* ६. सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम्॥ (५५)

सर्पिः—आज्यम्। जतु—लाक्षा। मधूच्छिष्टं मधुन उच्छिष्टं

उप. सू. ५- आकाशकालदिगात्मानां रूपादिमत्त्वं न लक्षणमित्यर्थः।

सिक्थम्। सामान्यम् समानम् । यद्वा सामान्यम् सादृश्यम् । सर्पि-रादीनां पार्थिवानामद्भिः समानं सर्पिरादीनामप्सादृश्यात्मकं वा द्रवत्वं यत्, तत् अग्निसंयोगाद्भवति ; न तु सांसिद्धिकमित्यर्थः ॥ ६ ॥

*** ७. त्रपुसीसलोहरजतसुवर्णानां तैजसानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् ॥ (५६)**

लोहेति ताम्रपारदादीनामप्युपलक्षकम् । अद्भिः सामान्यं तैजसत्रपुसीसादिद्रवत्वमप्यग्निसंयोगजम् ; न तु सांसिद्धिकमिति । नन्वग्निसंयोगजन्यद्रवत्ववत्त्वाविशेषात् कालान्तरे कठिनत्वाद् गुरुत्वाद-भास्वररूपवत्त्वाच्च त्रपु..मृतिकमपि पार्थिवमेव स्यादिति चेन्न—गुरुत्वाद्या-धारभागः तेजोभाग इति द्वयमत्रास्ति । तत्र प्रथमभागे पार्थिवत्व-साधने सिद्धसाधनम् ; द्वितीये साध्यत्वबाध इति । द्वितीयभागे किं प्रमाणमिति चेत्-प्रकृतगुरुत्वाद्याश्रयः स्वगतद्रवत्वनाशप्रतिबन्धकद्रवद्रव्य-संयुक्तः अग्निसंयोगे सत्यप्यनुच्छिद्यमानद्रवत्वविशिष्टत्वात् जलमध्यस्थ-घृतवदित्यनुमानम् । ननु द्रव्याणां पाञ्चभौतिकत्वाद्ययोगात् पृथिवीतेज-उभयकार्यं सुवर्णादिकमिति कथम् । अतो दशममेवेदं द्रव्यमिति चेन्न--अत एव तैजसभागमात्रस्य सुवर्णत्वस्वीकारात् । द्रवत्वनाशप्रति-बन्धकस्य तस्य भूयस्त्वात् । पार्थिवभागे च केवलमुपष्टम्भके सुवर्णव्य-वहारस्यामुख्यत्वादिति ॥ ७ ॥

ननु वायोः स्पर्शमात्रं विशेषगुणः । आकाशे सोऽपि नेत्युक्त-मधस्तात् । अप्रत्यक्षयोर्वाय्वाकाशयोरेव न किञ्चित् प्रमाणमिति शङ्कायां तदुभयपरीक्षां वर्तयिष्यन् तत्र प्रथमं वायुं साधयितुं प्रवृत्तः अप्रत्यक्षस्या-

नुमानेनैव साधनीयतया, अनुमानाप्रामाण्ये तन्न सेत्स्यतीति अनुमान-प्रामाण्यमखिललौकिकप्रसिद्धं दर्शयति—

**८. विषाणी ककुद्मान् प्रान्तेवालधिः सास्नावानिति गोत्वे दृष्टं लिङ्गम् ॥**

विषाणी मृगमहिषादिव्यावृत्तविलक्षणविषाणशाली । ककुत्—पृष्ठगलसंधौ उपर्युच्छ्रितो मांसखण्डः । वालाः केशाः धीयन्तेऽस्मिन्निति वालधिर्गौः । किमवच्छेदेन गोर्वालधित्वम् ? तदाह प्रान्त इति । पुच्छप्रान्तावच्छिन्नवालवत्त्वं गोत्वे लिङ्गम् । अथवा वालधिः पुच्छम् । प्रान्ते वालधिर्यस्य स इत्यलुक्समासः । प्रान्तेवालधिः पुच्छविशेषः तद्विशिष्टपरत्वे मतुब्लोपादित्यप्याहुः । यद्वा अन्ते वालः धीयन्ते अस्मिन्नित्यन्तेवालधिः पुच्छविशेषः । प्रलम्बमानोऽन्तेवालधिर्यस्य स इति बहुव्रीहिः । केषाञ्चित् पुच्छे वाला एव न सन्ति । अन्येषामामूलाद्वालाः । नत्वेवं गोः । प्रलम्बमानत्वविशेषणात् सिंहव्यावृत्तिरिति । एवञ्च अयं गौर्विषाणित्वादित्यादीनि अनुमानानि लोकदृष्टानीत्यनुमान-प्रामाण्यं निराबाधम् । ईदृशानुमानानां क्वचिदपि विसंवादादर्शनात् ; सुदृढनिश्चयस्य परोक्षस्य जायमानत्वादिति । विशिष्यानुमानतत्त्वशोधनं मुख्यत्वादात्माधिकार एव करिष्यते । इह तु प्रस्तावमात्रम् । दृष्टं लिङ्गमित्यनेन दृष्टादृष्टरूपद्विविधलिङ्गमध्ये इदं दृष्टं लिङ्गमित्यपि दर्शितम् । वक्ष्यमाणवायुलिङ्गं पुनरदृष्टलिङ्गमिति सूत्रकृदेव वक्ष्यति । दृष्टविशेषव्याप्तिकं लिङ्गं दृष्टम् । विशेषव्याप्त्यदर्शने चादृष्टलिङ्गम् ॥८॥

---

उप. सू ८. प्रान्ते वालाः धीयन्ते अस्मिन्निति अलुक्समासः । प्रान्ते-वालधिः पुच्छविशेषः । तद्वान् गोपिण्डः मतुब्लोपात् । महिषादिपुच्छे प्रलम्बता नास्ति ।

## ९. स्पर्शश्च वायोः ॥ (५८)

यथा विलक्षणविषाणत्वादिकं गोर्लिङ्गम् , तथा स्पर्शोऽपि वायोर्लिङ्गमित्यर्थः। आधारस्याप्युपलम्भे सति अनुमानानवकाशात् अनुपलभ्यमानाश्रयक उपलभ्यमानोऽयं स्पर्श इति पक्षस्वरूपं सिद्ध्यति। स्पर्शत्वमेव लिङ्गम्। अनुमितिजनकपरामर्शे स्पर्शत्वविशिष्टस्पर्शरूपपक्षपर्यन्तस्य विषयत्वावश्यम्भावात् स्पर्शो लिङ्गमित्युच्यते। स किञ्चिदाश्रितः स्पर्शत्वात् पार्थिवादिस्पर्शवदित्यनुमानम्। न तु वाय्वाश्रित इति साध्यम् ; प्रत्यक्षेण पूर्वं यत्र क्वापि गोरिव वायोरनुपलब्धत्वात्। एवं तर्हि कथं वायुसिद्धिरिति चेत्—तत् उत्तरसूत्रे वक्ष्यते। सूत्रे चकारेण शब्दधृतिकम्परूपहेतुत्रयसमुच्चयः। तथाहि—कदाचित् पर्णादौ शब्दः पतगादिरूपिद्रव्याभिघातमन्तरापि जायते। संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिः। अयं रूपवद्द्रव्याभिघाताजन्यः शब्दः स्पर्शवद्वेगवद्द्रव्याभिघातजन्यः तदितरकारणानधीनशब्दत्वात् भेर्यादिशब्दवदिति शब्दलिङ्गकानुमानम्। एवं धृतिरपि—गुरुद्रव्यं हि असति प्रतिबन्धे अवश्यमेव पतेत्। सति तु प्रतिबन्धे न पतेत्। दृष्टश्च पक्षी डयमानः प्रयत्नेन धारयत्यात्मानम् आत्मीयचञ्चुचरणादिसंलग्नञ्च द्रव्यमिति। तथा च तृणतूलविमानादीनां नभसि धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगजन्या तदितरकारणानधीनद्रव्यधृतित्वात् प्रवाहसंयोगजन्यपलालभारादिधृतिवदिति। तथा कम्पोऽपि—रूपवद्द्रव्यसंयोगानधीनं तृणादिचलनं स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यं संयोगेतरकारणानधीनचलनत्वात् पूराऽऽहतकाशादिकर्मवदिति। अत्र सर्वत्रोपपादनभङ्गीभेदेऽपि हेतुसाध्ययोः गरीतिरेकैवेति ध्येयम् ॥ ९ ॥

ननु स्पर्शः किञ्चिदाश्रित इत्यनुमानेन यत्किञ्चिदाश्रयसिद्धावपि न वायुसिद्धिः । पृथिव्यादेरेव तदाश्रयत्वसंभवादित्यत्राह—

**१०. न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायुः ॥ (५९)**

अन्यत्र पृथिव्यादौ अदृष्टं प्रकृतस्पर्शरूपलिङ्गं यस्यासौ अदृष्टलिङ्गः। यद्वा लिङ्गं द्विविधं दृष्टमदृष्टञ्च। यत् अभिमतसाध्यविशेषसंबन्धित्वेन दृष्टान्ते दृष्टम्, तत् आद्यम्। यत् तथा न दृष्टम्, तत् अदृष्टम्। इदमेव द्वयं क्रमेण विशेषतोदृष्टं सामान्यतोदृष्टमिति विभज्यते। प्रकृते च क्लृप्तद्रव्यातिरिक्तः आश्रयः साध्यत्वेनाभिमतः। तत्संबन्धित्वेन अयं स्पर्शो न दृष्ट इति सोऽदृष्टलिङ्गः। दृष्टानां पृथिव्यप्तेजसां नायं स्पर्शः; तथासति स्पर्शोपलम्भकाले तदाश्रयस्यापि दृष्टिप्रसङ्गात्। घटपटादिकं हि सर्वं स्वकीयस्पर्शोपलम्भकाले त्वचा उपलभ्यत एव। एवं चक्षुषाऽप्युपलभ्यते सति चक्षुस्सन्निकर्षे। न चात्र विष्फारितनेत्रेण विशिष्टावधानशालिनाऽपि प्रकृतस्पर्शाश्रय उपलभ्यते। अतो नायं पृथिव्यादिः। न च जलतेजसोः शीतशिलातलभर्जनकपालगतयोः स्पर्शानुभवेऽपि द्रव्यचाक्षुषप्रत्यक्षं नास्तीति वाच्यम्—तथापि पृथिव्यां तन्नियमस्य भङ्गाभावात्। न चायं स्पर्शो जलतेजोगतः! अनुष्णाशीतत्वात्। अतो नायं दृष्टानां स्पर्श इति परिशेषबलाददृष्टलिङ्गानुमेयः पदार्थो वायुरेवेति। न चाकाशादावेव तत्स्पर्शप्रसक्तिः। तेषां संप्रत्यसिद्धेः। तेषामप्रतिघातिद्रव्यतया स्पर्शायोगाच्च। यद्धि स्पर्शवत्, तदेव परप्रतिघातकमिति। तथाच पूर्वोक्तं स्पर्शानुमानं सामान्यतः किञ्चिदाश्रयसाध्यकत्वात् सामान्यतोदृष्टानुमानमपि परिशेषबलाद्विशेषसाधकं भवितुमर्हतीति भावः। एवमन्येष्वप्युक्तानुमानेषु विशेषसिद्धिर्द्रष्टव्या ॥१०॥

ननु सामान्यतः किञ्चिदाश्रयानुमानेऽपि तस्य द्रव्यत्वे किं मानम् । यथा ह्युपलभ्यमानस्य स्पर्शत्वाभिमतस्य न द्रव्यत्वम्, तद्वत् तदाश्रयत्वेन कल्पितस्याप्यद्रव्यत्वमेवास्तु । न च स्पर्शः क्लृप्तद्रव्यातिरिक्तद्रव्याश्रित इत्यनुमीयत इति वाच्यम्—तथासति अतिरिक्तद्रव्यस्य प्रागसिद्ध्या साध्याप्रसिद्ध्यापत्तेः । केवलव्यतिरेक्यनुमानं नैयायिकवत् स्वीकर्तव्यमित्यत्र साधकाभावात् । अतः क्लृप्तद्रव्यानाश्रितत्वे सति आश्रितत्वात् क्लृप्तद्रव्यातिरिक्तकिञ्चिदाश्रित इत्येवानुमातव्यम् । द्रव्यातिरिक्तश्च गुणादि प्रसिद्धमिति नाप्रसिद्धिः । अतः कथञ्चिद्गुणाद्याश्रितत्वमेव लभ्येतेति कथं तस्याश्रयस्य द्रव्यत्वसिद्धिरित्यत्राह---

११. अद्रव्यवत्त्वेन द्रव्यम् । (६०)

यद्यपि स्पर्शत्वादेवायं द्रव्याश्रित इति सुवचम्---तथापि स्पर्शत्वेऽप्यद्रव्याश्रितोऽस्तु इति विप्रतिपन्नं प्रति युक्त्यन्तरतो विप्रतिपत्तिनिराकरणं वैशद्याय भवतीति, उपर्याकाशादिषु इतो यथायथमतिदेष्टुमर्हाणि हेत्वन्तराण्युक्तानि भवन्तीति च विमृश्यैवमुच्यते । इयमेव रीतिः प्रकरणानुगुणा भाष्याद्यभिमता च लक्ष्यते । न चेदं सूत्रं वायुपरमाणुमात्रस्य द्रव्यत्वसाधनार्थमिति वाच्यम्—वायोरवयवित्वे तत्कारणस्य च परमाणुपरिमाणत्वे निश्चिते द्रव्यत्वसंदेहस्य सुतरामनवसरात् । असंकोचेन निर्वाहे संकोचायोगाच्च । इतरपरमाण्वविशेषेण वायुपरमाणुसिद्धिश्चतुर्थ एव भविष्यति । सूत्रार्थस्तु---

---

उप. सू. ११. अवयविनं वायुं साधयित्वा परमाणुभूतं वायुं साधयति । वायुपरमाणुः द्रव्यं द्रव्यानाश्रितत्वात् ।

द्रव्यमाश्रयतयाऽस्यास्तीति द्रव्यवत। न द्रव्यवत् अद्रव्यवत्। तत्त्वेन---द्रव्यानाश्रितत्वेन वायुर्द्रव्यमित्येव। भावस्तु---यत् साक्षात परम्परया वा स्वभिन्नद्रव्यानाश्रितम्, तद् द्रव्यम्। यत् पुनरद्रव्यम्, तत् साक्षात् प्रणाळ्या वा स्वभिन्नाश्रितम्। उपलभ्यमानस्पर्शाश्रयत्वेनानुमितं च यदि अद्रव्यम्, तर्ह्यन्याश्रितं स्यात्। न चान्याश्रितत्वे प्रत्यक्षमनुमानं वा किञ्चिन्मानमस्ति। अतोऽनुपलम्भात् अन्यानाश्रितत्वे निश्चिते सति अनुमीयते, स्पर्शाश्रयत्वेनानुमितंद्रव्यम् अन्यानाश्रितत्वादिति। न चावयविवायोः अवयववाय्वाश्रिततयाऽन्यानाश्रितत्वं कथमिति शङ्क्यम्---सर्वस्य वायुत्वाभिमतस्याद्रव्यत्ववादिनं प्रति तस्य सर्वस्य तत्सर्वान्यकिञ्चिदनाश्रितत्वमेवात्रोच्यते। तच्च नासिद्धमिति। अथ यदिदं व्यजनवीजनकाले उपलभ्यमानम्, तद् द्रव्यमेवेति कुतो न शङ्क्यत इति चेन्न---इन्द्रियाणां गुणपुरस्करणमन्तरा द्रव्यग्राहित्वं कुत्रापि नास्तीति सिद्धान्तात्। द्रव्यग्रहणमन्तरा गुणग्रहणञ्च घ्राणादौ दृष्टम्। अतोऽयं स्पर्श एव, न तु द्रव्यमिति निश्चीयते। किञ्च तस्य द्रव्यत्वे त्वगिन्द्रयग्राह्यतद्द्रव्यगतसंख्यापरिमाणसंयोगादीनामपि त्वाचप्रत्यक्षप्रसङ्गः। तच्च नानुभविकम्। अत उपलभ्यमानमद्रव्यमित्येव स्वीकर्तव्यमिति ॥११॥

न केवलं स्पर्शवत्त्वादन्यानाश्रितत्वाच्च वायुर्द्रव्यम्, किन्तु इतोऽपि हेतुद्वयादित्याह—

१२. **क्रियावत्त्वाद् गुणवत्त्वाच्च ॥ (६१)**

इदं सूत्रं सर्ववयुविषयकतयैव योजितं भाष्यादाविति स्पष्टम्। क्रियावत्त्वादिति विषमव्याप्तहेतुः। गुणवत्त्वादिति समव्याप्तः।

न च वायौ क्रियादेरसिद्धिः ; उपलब्धस्य स्पर्शस्योत्तरकालमुपलब्ध्य-नुवृत्त्यभावेन वायोरन्यत्र गतत्वानुमानात् । शब्दधृतिकम्पानां वेगवद्द्रव्याभिघातजन्यतया वेगेन तद्धेतुक्रियासाधनाच्च । स्पर्शस्य प्रागेवोक्ततया गुणशब्देन क्रियाजन्यसंयोगविभागवेगादिग्रहणम् । गुणत्वेन रूपेण हेतुत्वे स्पर्शोऽपि क्रोडीक्रियत एव ॥ १२ ॥

ननु यथा अन्याश्रितत्वग्राहकप्रमाणाभावादाश्रयान्तरकल्पनागौर-वाच्च वायुर्द्रव्यमित्युच्यते, तथा तस्य ध्वंसप्रागभावकारणादीनामनुपलब्ध-त्वात् कल्पनागौरवाच्च तदकल्पनया नित्यत्वमेवेष्यतामित्यत्राह—

**१३. अद्रव्यत्वेन नित्यत्वमुक्तम् ॥ (६२)**

न विद्यते समवायिकारणतया द्रव्यं यस्य, तत् अद्रव्यम् । तत्त्वेन द्रव्यसमवायिकारणकत्वाभावेन नित्यत्वमुक्तमित्यर्थः । अयं भावः :- 'सदनित्यम्', 'द्रव्याणि द्रव्यान्तरमारभन्ते' इत्यादिभिः सूत्रैर्द्रव्या-रभ्यं द्रव्यमनित्यमिति दर्शितम् । तेन द्रव्यानारभ्यद्रव्यं नित्य मित्युक्तं भवतीति । इदमत्र निगूढम्---द्रव्यनारभ्यद्रव्यं नित्यमित्य-सदाशयः । प्रकृतवायोर्यद्यनारभ्यत्वं प्रमाणिकम्---तर्हि नित्यत्व-मस्तु । का हानिः । आरभ्यत्वे तु यत् अन्ततः किञ्चिद्वायुद्रव्य-मन्यानारभ्यं निश्चीयते, तन्मात्रं नित्यं भवतु । तच्च पार्थिवादिपरमाणु-साधारण्येन चतुर्थ एव वक्ष्यते । यदि चायं नित्यस्स्यात्, तदा तद्गतोऽयं स्पर्शोऽनुपलभ्यमानः स्यात् परमाण्वन्तरस्पर्शवत् । अथ स्थूलत्वादस्य अयमुपलभ्यत इत्युच्यते, तर्हि सावयवत्वादनित्यत्वमवर्ज-

उप. सू. १३. वायुपरमाणोरनित्यत्वशङ्कां निरस्यति ।

नीयम् । न च तावता सर्वो वायुरनित्य इत्यप्युच्यते, द्रव्याना-रभ्यत्वे नित्यत्वमित्येवाभिधानादिति ॥ १३ ॥

इदमेव निगूढं व्यञ्जयन् वायुद्रव्यस्य नानाप्रकारं नानात्वं दर्शयति—

**१४. वायोर्वायुसंमूर्छनं नानात्वलिङ्गम् ॥ (६३)**

"संमूर्छनं समानजवयोर्वाय्वोर्विरुद्धदिक्क्रिययोः संनिपातः" इति भाष्यम् । सोऽयं वायुद्रयसंयोगविशेषो वायुनानात्वे लिङ्गमित्यर्थः । ननु वायुप्रत्यक्षाभावे वायुद्रव्यसंयोगोऽप्यप्रत्यक्ष इति स कथं हेतुः । तस्य प्रत्यक्षत्वे च तद्वदेव नानात्वमपि प्रत्यक्षमिति किमर्थमनुमानम् । उच्यते—संयोगोऽप्यप्रत्यक्ष एव । अथापि पूर्वं संमूर्छनमनुमाय पश्चात् नानात्वानुमानमभिमतम् । इत्थमनुमानम्—विरुद्धदिगागततृणतूलादीनामूर्ध्वगमन-दर्शने सति तत् तथानोदकवायुसंयोगाधीनमिति निश्चीयते । तिर्यग्गतिस्व-भावस्य वायोस्तथोर्ध्वगमनञ्च दिगन्तरागतवायुप्रतिघातायत्तमित्यनुमीयते । पयःपूरयोः प्रतिघाते सति ऊर्ध्वगमनदर्शनात् । एवमनुमितेन प्रतिघातेन संमूर्छनाख्येन वायुनानात्वानुमानमिति । अत्र विभिन्नदिगवच्छिन्नवायुद्र-यलाभात् अवयवावयविभावानापन्नवायुनानात्वं सिद्ध्यति । प्रतिघाते सति पयःपूरयोः परश्शतखण्डात्मना भङ्गदर्शनात्, अत्राप्यव्यवस्थया-तृणादीनामितस्ततो विप्रकीर्णतानुभवाच्च वायुद्रव्ये मिथःखण्डिते इति सिद्ध्या अवयवावयविभावापन्नानित्यवायुनानात्वमपि सिद्ध्यति । एवं प्रतिहतयोः पूरयोर्मिथो मिश्रणेनोर्ध्वमभिवृद्धिः एकमहावयव्युत्पत्तिरूपा

---

उप. सू. १४. परमाणुतत्कार्यरूपेण वायुनानात्वं प्रागेव सिद्धम् । प्रकारान्तरेणाप्यस्य नानात्वमुच्यते ।

दृष्टा वायावप्यत्र सिद्ध्यति। तदिदमपि संमूर्छनमित्यत्राभिसंहितम्। एवमनित्यत्वपर्यन्तस्यैकहेलया प्रतिबोधनयैव सूत्रकारः संमूर्छनमुदाजहार। अन्यथा तत्रतत्र पृथक्तृणादिचलनदर्शनेनैव वायुनानात्वं सुखं ग्राहयेत्। तत् सिद्धं कार्यकारणभावापन्नावयवावयविभेदेनापि नानात्वम्।

एवं तावत् वायुरप्रत्यक्षोऽप्यनुमानेन क्रियागुणनानात्ववत्तया साधयितुं शक्यत इत्युक्तम्। न च स्थितं सर्वमनुमानेन साधयितुं शक्यत इति नियमः। अतो यावन्तोऽनुमानगम्याः विशेषाः, तावन्मात्रवान् वायुरिति न मन्तव्यम्; अचिन्त्यविचित्रविशेषवत्ताया आवश्यकत्वात्। यथा खलु पृथिवी प्रतिदिशं बहुप्रकारमृच्छिलाशैलवृक्षगुल्मविपिनपत्तनादिप्रभेदा, आपश्चानन्तसरोनदीसमुद्रादिरूपाः, तेजश्च वह्निसूर्यसोमनक्षत्रवैश्वानरादिविविधभेदम्, तथा वायुरपि देशकालभेदेन बहुरूपो बहुशक्तिर्बाह्याध्यात्मिकविविधविधाविसंष्ठुलो भवितुमर्हति। परन्तु स कदा कुत्र कीदृगस्तीति तु न सर्वमनुमानपदमधिरोहति। कुत इति चेत्-शृणु---लिङ्गं हि द्विविधं दृष्टमदृष्टञ्च। तत्र दृष्टमुक्तार्थसाधनसमर्थं न विद्यते, वायुसन्निकर्षे प्रत्यक्षाभावात्। दृष्टं हि नाम विशेषतोदृष्टमुच्यते। न हि वायुः त्वचा सन्निकृष्टः प्रत्यक्षमीक्ष्यते। केवलं स्पर्शमात्रसंवेदनात्। अत एव द्रव्यस्याप्रत्यक्षतया तद्वृत्तिसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्काराणां प्रत्यक्षं दूरापास्तम्। यावच्च संख्यापरिमाणाद्यदर्शनम्, तावत् इयानयमित्थम्भूत इहेदानीमस्तीति दुर्निश्चयमेव। एवञ्च क्वचिदपि वायुतद्गतविशेषादर्शनात् कथमन्यत्र तद्दृष्टान्तेन वाय्ववान्तरविशेषाकाराणामनुमानसंभवः। तदाह—

**•१५. वायुसंनिकर्षे प्रत्यक्षाभावात् दृष्टं लिङ्गं न विद्यते ॥ (६४)**

ये तु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यनुमानेन स्पर्शवत् वायोरपि प्रत्यक्षत्वमाकलयन्ते, तेऽप्येतेन सूत्रेण निरस्ता भवन्ति। वायुप्रत्यक्षे हि वायुगतक्रियासंख्यापरिमाणादीनामपि प्रत्यक्षमावश्यकम् । अतः तत्रानुमाने उद्भूतरूपवत्त्वं प्रत्यक्षयोग्यसर्वसामान्यगुणकत्वं वोपाधिरिति ॥ २४ ॥

सत्यमत्र विशेषतोदृष्टं न लभ्यते । अथापि सामान्यतोदृष्टादेव परिशेषबलपरिष्कृतादभिमतसर्वविशेषसिद्धिरस्तु, यथा स्पर्शादिना क्लृप्तातिरिक्तवायुसिद्धित्यत्राह—

**१६. सामान्यतो दृष्टाच्चाविशेषः ॥ (६५)**

सामान्यतोदृष्टानुमानादपीदृशविशेषसिद्धिर्न भवति । एतादृशविशेषसिद्ध्यौपयिकपरिशेषस्य दुर्लभत्वात् । यथा हि नाकलोके नन्दनं वनमस्तीति वाक्यश्रवणेन विचित्रवृक्षलतागुल्मवीरुत्तृणादिकं नन्दनमित्यनुमिन्वानोऽपि कश्चित्, नन्दने अस्मिन्नस्मिन् कोणे अयमयं वृक्षः, अस्मिन् वृक्षे इयत्संख्यापरिमाणादिकानि पुष्पफलादीन्यस्यामस्यां शाखायां सन्तीत्यादिकं न कथमप्युत्प्रेक्षितुं प्रभवति, तद्वदेव वायोरप्रत्यक्षस्यानुमानगोचरस्यापि न बाह्याध्यात्मिकावस्थाभेदानुगुण—तत्तद्देशकालसंभावितसर्वाकारवत्तया विभावनेऽपि कश्चित् प्रगल्भेतेति ।

---

उप.१५. वायुसंमूर्छनं न दृष्टलिङ्गमितीदमुपपादयति ।

उप.१६. हेतोः सामान्यतोदृष्टत्वेऽपि वायुरूपविशेषसिद्धौ न क्षतिरित्यर्थः ।

तर्हि मानाधीनत्वान्मेयसिद्धेः तथाविधविशेषा अप्रमाणिकाः स्युः । तत्राह—

१७. तस्मादागमिकम् ॥ (६६)

प्रत्यक्षानुमानातीतं सर्वं सूक्ष्मतत्त्वम्, न केवल वायौ, किन्तु सर्वत्र पृथिव्यादावपि श्रुतिस्मृतिलक्षणैरागमैरवसेयम् । विशेषतस्तु वायौ । अतो नाप्रामाणिकत्वम् । वर्ण्यन्ते हि तत्रतत्र सप्त मरुतः, दश प्राणाः, नाडीषु भूतेष्वोषधिषु च तेषां कार्यसंस्थानादीनि ॥ १७ ॥

नन्वागमोऽपि प्रत्यक्षानुमानमूलकः । दृष्टमनुमितं वाऽर्थमभिधातुमेव हि शब्दाः प्रवर्त्यन्ते । तथाच तादृशविशेषाणामुक्तयुक्त्या प्रत्यक्षानुमानागोचरत्वादागमोऽपि कथं स्यादित्यत्राह—

१८. संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥ (६७)

असदिति पृथगपृथग्वा पदम् । संज्ञाकर्म—संज्ञाकरणं वाचकशब्दकल्पनम् । यद्वा सम्यग्ज्ञानौपयिकशब्दरचनम् । अथवा समित्येकीकारे । स च मिथस्संबन्धः । तथाच मिथःपदार्थान्वयज्ञानविधानं संज्ञाकर्म । तत् अस्मत्तो विशिष्टानाम् अस्मान् अतिशयितवतां प्राज्ञपरिबृढानां लिङ्गमनुमापकमिति । विशिष्य चागमविशेषे वक्ष्यते, 'ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्ग'मिति । तत्र संज्ञाकर्मपदं नामकरणमित्यर्थकमिति निर्विवादम् । उत्तरसूत्रे चैवं संज्ञाकर्मपदं समस्तम् । अयमर्थः—श्रुति-

उप. सू. १७. वायुरिति संज्ञा आगमगम्येत्यर्थः ।

उप. सू. १८. संज्ञा – तत्तन्नाम, कर्म—क्रियमाणं क्षित्यादिकं जगच्चेश्वरमहर्षीणां लिङ्गम् ।

स्मृतिलक्षणागमप्रयुक्तेषु वाक्येषु यानि यावन्ति पदानि, तानि तावन्त्यपि न डित्थडपित्थादियदृच्छाशब्दवत् निरभिसंधिकं प्रतर्तितानि। सावधानं पदरत्नमेकैकमपि तत्तद्वस्तुगतविशेषप्रतिबुबोधयिषया व्युत्पत्तिविशेषानुगुणधातुप्रत्ययसमाहारसंपादितम् अन्विष्यान्विष्य विशिष्टार्थप्रतिपत्त्यौपयिकतया निवेशितमिति वक्तव्यं भवति। अत एकैकवस्तुगतसर्वाकारविज्ञानसंपन्नाः तद्योजयितार इति निश्चयादप्रामाण्यस्य नैवावकाश इति॥

ननु प्रत्यक्षं न तादृशांशगोचरम्, नाप्यनुमानं तत्र प्रक्रमते इति भवतैवोक्तम्। कथमेवं सति तेषां तत्तदंशविज्ञानसंपत्तिरित्यत्राह—

१९. प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः॥ (६८)

विलक्षणार्थवाचकशब्दसंदर्भस्य प्रत्यक्षमूलकत्वात् ते अस्मद्विशिष्टा एवेति। अयं भावः—अवश्यमागमोऽपि प्रत्यक्षानुमानान्यमूलको न भवति। नाप्यमूलकः, रचनाविशेषत्वात्। तत्र तदुक्तानामर्थानामस्मदीयप्रत्यक्षागोचरत्वेऽपि न सर्वथा प्रत्यक्षाविषयत्वम्; इन्द्रियसंनिकर्षमात्रजन्यमेव प्रत्यक्षमित्यस्य योगिप्रत्यक्षाव्यापिताया अनुभूयमानत्वात्। दृश्यन्ते च अद्यत्वेऽपि विलक्षणोपकरणसाहाय्येन विप्रकृष्टमपि साक्षात्कुर्वन्तः। यद्यप्यनुमानावगम्येषु अनुमितिबलादपि संज्ञाकर्म सुकरम्। न तादृशेषु महात्मसु प्रत्यक्षेणैव द्रष्टुं प्रभवत्सु अनुमानस्यापेक्षा कथमप्यस्ति। अतः तादृशमहापुरुषसमवेतप्रत्यक्षप्रवृत्तत्वादागमः प्रमाणम्। तत एव चास्माकमल्पदृशामशेषलाभ इति। विशिष्येश्वरसाधनमपि शास्त्रावसाने दर्शयिष्यति। इह तु सोऽप्यन्यैस्सह संगृहीतः॥१९॥

---

उप. सू. १९. संज्ञा च कर्म च तयोः समाहारः संज्ञाकर्म। कर्म क्षित्यादीति प्रागेवोक्तम्।

परीक्षितो वायुः। अथाकाशं परीक्ष्यते। 'नीलं नभ इति प्रत्यक्षं तावदिह न प्रमाणम्; नीलरूपविशिष्टस्यैव कस्यचित् तथा ग्रहणात्। 'अभाव एवाकाशमिति च बौद्धमतम्' इत्याशङ्कायां भावरूपमाकाशं शब्द-लिङ्गेन स्थापयिष्यन् बौद्धमतनिरसनासमर्थं सांख्यमतमाक्षेप्तुमुपक्षिपति—

**२०. निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम्॥ (६९)**

कर्मकारणतयाऽऽकाशसिद्धिरिति सांख्याशयः। निष्क्रमणम् अन्तर्देशविभागजनकं कर्म। प्रवेशनम् अन्तर्देशसंयोगजनकम्। इति-शब्दः प्रकारवाची।' तेन सर्वमन्यत् कर्म संगृह्यते। चलनोन्मुखं हि वस्तु यस्यां दिशि चलितुमारभते, तस्यां दिश्यवकाशाभावे न शक्नोति चलितुम्। अवकाशप्रदश्चाकाश इति स कारणमिति ॥२०॥

उपक्षिप्तं मतमाक्षिपति—

**२१. तद् लिङ्गमेकद्रव्यत्वात् कर्मणः॥ (७०)**

एकं द्रव्यमाश्रयतया यस्य, तत् एकद्रव्यम्; तत्त्वात्; एकमात्र-द्रव्यवृत्तित्वादित्यर्थः। कर्मणः किं समवायिकारणतयाऽऽकाशानुमानम्, उतान्यविधकारणतया? नाद्य इति अनेन सूत्रेणोच्यते। चलद्वस्तुनिष्ठं हि कर्म; न त्वाकाशनिष्ठम्। यत्समवेतं कार्यमुत्पद्यते, तत् समवायि-कारणम्। न चाकाशसमवेतं कर्म। अतो निष्क्रमणादिकमसाधकमा-काशस्य। कर्म ससमवायिकारणकं समवेतकार्यत्वादित्यनुमाने सिद्धसा-धनमभिमतासिद्धिश्चेत्युक्तं भवति॥

समवायिकारणभिन्नकारणतयाऽपि कर्मण्याकाशो नोपयुज्यत इत्याह—

२२. कारणान्तरानुक्लृप्तिवैधर्म्याच्च ॥ (७१)

अनुक्लृप्तिः अनुकल्पनम् मुख्यकारणसहकारितया स्वीकरणम्। कारणान्तराणां समवायिकारणभिन्नकारणानां यत् समवायिकारणोपसर्जनतया कल्पनम् तद्वैधर्म्यादाकाशरूपकारणकल्पनस्य नाकाशं कारणान्तरमपीति तदलिङ्गमाकाशे इत्यर्थः। कारणान्तरपदमविशेषादुभयविधकारणपरम्। अनुक्लृप्तिपदेपि न प्रसिद्धार्थः त्याज्यः। अविभुनि द्रव्ये कर्म जनयितुं गुरुत्वद्रवत्वप्रयत्नसंयोगवेगाः यथायथं कारणत्वेन क्लृप्ताः। तत्रान्वयव्यतिरेकौ नियामकौ। न चाकाशस्य तथाऽन्वयव्यतिरेकौ स्तः, आकाशाभावात्कर्माभाव इत्यस्यासंभवादिति भावः २२

तर्हि यथा गृहान्निष्क्रामन् द्वारदेशान्निष्क्रामति, तथा कुड्यमध्यादपि निष्क्रामेत्। अतस्तत्रावकाशाभावान्निष्क्रमणाद्यभाव इत्येव वक्तव्यमित्याकाशः कारणम्। तत्राह--

२३. संयोगादभावः कर्मणः॥ (७२)

यद्दिगभिमुखं चलति, तद्दिगवच्छेदेन मूर्तद्रव्यविशेषसंयोगः कर्मप्रतिबन्धकः। अतः प्रतिबन्धकीभूतसंयोगबलात् कर्मणोऽभावः अनुत्पत्तिः। अयं भावः—न कर्मण्याकाशः कारणम्। कुड्यमध्येऽपि विभोराकाशस्यानपायात्। अतो मूर्तद्रव्यविशेषानवच्छिन्नाकाशः कारणमिति वक्तव्यम्। तदपेक्षया तादृशद्रव्यासंयोगः कारणमित्यलम्; वृथैव

---

उप. सू. २२. कारणान्तरम्—असमवायिकारणम्। तस्यानुक्लृप्तिः लक्षणम्, तद्वैधर्म्यादित्यर्थः।

उप. सू. २३. मूर्तद्रव्यप्रतिबन्धाच्च कर्म, न त्वाकाशाभावादिति आकाशो न निमित्तकारणम्।

तत्राऽऽकाशघटनेति । एतावता चाभावविशेषोऽपि कारणमिति सिद्ध्येत् । नैतावता अभावातिरिक्ताकाशसिद्धिरिति ॥२३॥

एवं परमतं प्रतिक्षिप्य स्वयं शब्दमाकाशे लिङ्गं वक्ष्यन् तस्य तत्साधकत्वे विविधविप्रतिपत्तिसद्भावात् प्रथमतस्तन्निराकरणमारभते—

२४. कारणगुणपूर्वकः कार्यगुणो दृष्टः ॥ (७३)

कारणस्य गुणः कारणगुणः । कार्यस्य गुणः कार्यगुणः । पृथिव्यप्तेजोवायुरूपकार्यद्रव्यगतो गुणः तत्कार्यसमवायिकारणभूततदवयवसमवेतगुणजन्यो दृष्ट इत्यर्थः । तन्त्वादिगतरूपादितो हि पटादिगतरूपाद्युत्पत्तिरिति । अयं भावः—शब्दो गुण इत्यनन्तराह्निके स्थापयिष्यते । अतस्तत्र न विवादः । किं तर्हि ? किं पृथिव्यादिषु कस्यचिद्गुण इति । तत्रोच्यते—पृथिव्यादिचतुष्टयगतः कार्यगुणः कारणगुणपूर्वकः । शब्दश्च न तथा । वीणा वाद्यते, वेणुः पूर्यत इत्यनुभवाद्वीणावेण्वादिष्वेव शब्दः समवेतोऽस्त्विति किल पूर्वपक्षी । न च तेन, 'वीणाद्यवयवेष्वपि स शब्दोऽस्ती'ति, 'तैरवयवैरवयव्युत्पादने रूपादिविशेषं तत्र शब्दस्तत उत्पन्नोऽस्ती'ति च वक्तुं पार्यते । सर्वदा तत्राननुभवात् । ननु संयोगविभागादिगुणानां कार्यगतानां परत्वादेस्तत्तत्कार्यमात्रवृत्तिगुणस्य च न कारणगुणपूर्वकत्वं दृष्टमिति व्याप्तिभङ्ग इति चेन्न—शब्दे बहिरिन्द्रियव्यवस्थाहेतुत्वाद्गुणत्वमभिमतमिति कार्यगतबहिरिन्द्रियव्यवस्थाहेतुगुणः सर्वः कारणगुणपूर्वको दृष्ट इत्याशयात् । यद्वा कार्यगतविशेषगुणो यः, स कारणगुणपूर्वक इति व्याप्तिरस्तु । ननु विशेषगुणत्वं नाम—इयं पृथिवी, इदं जलमिति द्रव्य-

विशेषनियामकवैजात्यशालिगुणत्वम् । पृथिव्यादिषु चतुर्ष्वपि शब्द इति पक्षे चास्य कथं विशेषगुणत्वमिति चेत्—उच्यते—तत्पक्षेऽपि रूपरसस्पर्शेष्विव शब्देऽपि वैजात्यमावश्यकम् । यस्य हि वीणावेणुभेरीमृदङ्गादिभेदेन पशुपक्षिमनुष्यादिप्रतिव्यक्तिभेदेन च वैजात्यं पृथिव्यामेव प्रस्फुटम्, तस्य शब्दस्य पृथिव्यप्तेजोवायुषु सर्वत्र केवलमेकरूपतायाः का संभावनेति । ततः शब्दो विशेषगुण एव । अनुमिन्वते च शब्दो विशेषगुणः जातिमत्त्वे सति बाह्यैकेन्द्रियमात्रग्राह्यत्वादिति । तत् सिद्धम, य ईदृशकार्यगुणः, स कारणगुणपूर्वक इति ॥२४॥

एवं व्याप्तिरुक्ता। एतद्धेतुकानुमानप्रयोगं हेत्वन्तरञ्च दर्शयति—

**२५. कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥ (७४)**

चकारेण पूर्वसूत्रसिद्धहेतुसमुच्चयः । शब्दो न स्पर्शवद्विशेषगुणः अकारणगुणपूर्वकत्वादित्यनुमानम् । अत्र व्यतिरेकव्याप्तिः पूर्वसूत्रदर्शिता । ननु स्पर्शवद्विशेषगुणत्वं हि साध्याभावः । तच्च परमाणुगुणेऽपि । तत्र हेत्वभावस्य कारणगुणपूर्वकत्वस्याभावात व्याप्तिभङ्ग इति चेन्न-कार्यगुण इति पूर्वोक्तानुसारेण 'न कार्यगत विशेषगुण' इत्येव साध्यमित्यदोषात । एवमेवात्रापि वक्तव्ये, 'स्पर्शवतामगुण' इति वचनं तु उक्तयुक्त्या कार्यगुणत्वेऽस्माभिर्निषेद्धे नित्यानित्यसर्वपृथिव्यादिभूतचतुष्टयगुणत्वनिषेधोऽप्यर्थादेव सेत्स्यतीति । पूर्वपक्षिणैव शब्दः परमाणुगुण इत्याशङ्कितुमशक्यत्वात् । वीणा वाद्यत इत्याद्यनुभवबलाद्धि शब्दं पृथिव्यादिगतं स मन्यते । न च परमाणुगुणत्वे

---

उ॰ सू॰ २५. अवयविशब्दस्यावयव शब्दादप्रादुर्भावात् न शब्दः स्पर्शवद्गुणः ।

अनुभवोऽस्ति । न वा तत्र शब्दप्रत्यक्षं भवितुमर्हति । परमाणोर-प्रत्यक्षत्वात् ॥ भाष्ये तु इत्थमनुमानमत्राभिनीतं सौकर्याय— शब्दो न स्पर्शवत्सामान्यविशेषगुणः प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वादिति ॥ सूत्रे कार्यान्तराप्रादुर्भावादिति हेत्वन्तरम् । कार्ये पृथिव्यादौ द्वितीयक्षणजातरूपादिकार्यापेक्षया कार्यान्तरं = तत्सजातीयविशेषगुणान्तरं पश्चान्न प्रादुर्भवति । अवयविनि पाकानङ्गीकारात् । रूपादिर्हि विशेषगुणो जातो यावद्द्रव्यभावी । शब्दस्तु वीणादौ तारतारतरादिरूपेण विचित्रो विभिन्नकालिकोऽनुभूयते । अतः शब्दो न कार्यगुण इति । इदमेव निष्कृष्य भाषितम्—' अयावद्द्रव्यभावित्वात् ' इति ॥

एवं भूतचतुष्टयव्यावृत्तिः साधिता । अन्यव्यावृत्तिं साधयति—

**२६. परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥**

यथासंख्यं हेतुसाध्यान्वयः । अत एव ' नात्ममनोगुण ' इति नोक्तम् । परत्र समवायादित्यस्य, शब्दस्याकाशे समवायादिति नार्थः ; आकाशस्यासिद्धत्वात् । वीणादौ समवायादित्यपि न । तथा वादिनाऽनङ्गीकारेण स्वरूपासिद्धेः । अतः परत्रैव समवायात्, स्वात्मनि समवेतत्वाभावादित्यर्थः । नन्विदमप्यनुपपन्नम् ; आत्मन्यसमवेतत्वादात्मसमवेतो न भवतीत्युक्तौ हेतोः साध्याविशिष्टत्वात् । सत्यम् । स्वसमवेतत्वेनागृह्यमाणत्वादित्यर्थः । यद्यात्मगुणः स्यात्, अहं सुखी, जानामि, इच्छामीतिवत् अहं वाद्ये, अहं पूर्ये, इति ग्रहणापत्तिरिति भावः । प्रत्यक्षत्वादित्यस्य बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वादित्यर्थस्वीकारे आत्मगुणत्वाभावसाधकत्वमपि स्यात् ।

यथाश्रुते तु मनोगुणत्वाभावसाधकत्वमेव । मनश्शब्दः परमाणु-सामान्योपलक्षक इत्यपि सुवचम् ।

ननु दिक्कालौ कथमुपेक्षितौ ? अत्र वदन्ति—मनश्शब्दो दिक्कालोपलक्षकः, शब्दो न दिगादिगुणः प्रत्यक्षत्वादिति । उक्तञ्च भाष्ये, 'श्रोत्रग्राह्यत्वाद्विशेषगुणत्वाच्च न दिक्कालगुणः' इति । अत्र विमृश्यते—यदि दिक्कालनिषेधः सूत्रकृदभिमतः, तर्हि पूर्वोद्दिष्टकालदिगतिक्रमेण किमिति नात्मगुण इति वदेत् । किमिति च, 'प्रत्यक्षत्वात् परत्र समवायाच्च न कालादिगुणो नात्मगुणः' इति न सूत्रयेत् इति । अयमाशयः स्यात्—यो हि प्रसिद्धपञ्चभूतान्तर्भूतं विहायोऽपि विहाय निर्वहति, तस्य केवलसामान्यगुणाश्रयौ कालदिशौ कियन्मात्रम् । अतो दिक्कालत्यागः । अतःआकाशासिद्धिसमये आकाशकालदिशामसिद्धिरिति युक्तं मन्तुम् । आत्मा तु सर्वभोग्यवर्गेश्वरो नापह्नवमर्हतीति । न च तस्य सार्वभौमस्य मन्त्रिभूतं मनोऽपि न मान्येतेति । अस्तु वा पृथिव्यादि निरस्य तद्वत अनेकविशेषगुणवत्त्वसंभावनार्हत्वादात्मानं निरस्य पश्चादवशिष्टमपि क्षिपतीति । इदमालोच्यैव भाष्ये, 'विशेषगुणत्वादपि न दिगादिगुणः' इत्युक्तम् । एवञ्च सूत्रे चकारो विशेषगुणत्वरूपहेतुपरः इति ॥

ननु—शब्दस्य श्रोत्रग्राह्यत्ववत् अकारणगुणपूर्वकत्वमपि वैलक्षण्यमस्तु । अतः पृथिव्यादिगुणत्वमेव । दृश्यते च पृथिव्यामप्यकारणगुणपूर्वकं पाकजं रूपादि । यद्वा दिक्कालगुण एव स किं न स्यात् । यत्तु प्रत्यक्षत्वान्न तद्गुण इति, तन्न । युक्तं मनसोऽणुत्वात् तद्गतः शब्दो न गृह्येतेति । कालदिशोस्तु महत्तमत्वान्नायं दोषः प्रत्यक्षसामान्य-

कारणस्य महत्त्वस्याबाधात् । यदि गुणिनोऽतीन्द्रियत्वे गुणोप्यतीन्द्रिय-इत्युच्यते, तदा नभस्यपि शब्दो न गृह्येत । न च काले दिशि वेति विनिगमनाविरहात् कलप्तद्रव्यपरित्यागः, उभयत्रैव शब्दाङ्गीकारसंभवात् । किञ्च अस्यां दिशि अयं शब्द इति दिशा सह गृह्यमाणत्वरूपविशेषात् दिग्गतः शब्दः । श्रोत्रेन्द्रियमपि दिग्विकारः स्यात् । अत एव, 'दिशः श्रोत्रे' इत्यागमोऽपि संगच्छते । यदपि विशेषगुणत्वादस्य न दिग्गतत्वमिति ; तदपि न ; अप्रयोजकत्वात् । इतरविशेषगुणा-भावेऽप्येतद्विशेषगुणस्य संभवात् । अन्यथा रूपादिविशेषगुणाभावात् नभोऽपि शब्दवन्न स्यात् —इत्याशङ्कायां तत्परिहारमपि मनसि कुर्वन् उपक्रान्तमुपसंहरति—

२७. **परिशेषाल्लिङ्गमाकाशस्य ॥ (७६)**

शब्दस्य वीणादिगुणत्वे वीचीतरङ्गन्यायेन श्रोत्रदेशपर्यन्ते उत्पत्त्यसंभवेन श्रोत्रेणाग्राह्यत्वप्रसंगात् , स्पर्शवद्विशेषगुणत्वे च श्रोत्रस्यापि स्पर्शवत्कार्यतया स्पर्शस्यापि त्वचेव तेन ग्रहणप्रसंगात् शब्दोऽन्यगुण एव । किञ्च स्पर्शवद्गुणत्वे कारणगुणपूर्वकत्वमवर्जनीयम् । अनुभवसिद्धव्याप्तेः त्यागायोगात् । कार्यभूतपृथिवीगतः पाकजगुणो-प्यवयवगुणपूर्वक एव । परमाणुमात्रे पाकस्वीकारात् ।

नापि दिक्कालगुणः । तत्र किं तत्तत्परत्वापरत्वादिनियामकतया कालं दिशं वा द्रव्यं प्रागनुमाय तस्य शब्दाश्रयत्वमपीष्यते, किं वा शब्दा-श्रयत्वेनैव तदनुमाय पश्चात् तस्यैव परत्वादिनियामकत्वमपि । नाद्यः, प्रागप्रत्यक्षगुणाश्रयतया सामान्यगुणाश्रयतया च सिद्धस्य तद्विपरीतशब्दा-

श्रयत्वायोगात् । अतः प्रत्यक्षत्वाद्विशेषगुणत्वाच्च शब्दो न दिक्कालमनसां गुग इत्यनुमानं सुस्थम् । नान्यः, कालादिनिरूपणावसरे तदसंभवस्य वक्ष्यमाणत्वात् । 'दिशः श्रोत्रे' इत्यागमस्तु भगवतो विश्वरूपकल्पनायां दिक्षु श्रोत्रत्वकल्पनमात्रमिति न तेन सर्वश्रोत्राणां दिग्विकारता । अतः सर्वतो व्यतिरेकसिद्धिः ॥ परिशेषो व्यतिरेकः । शब्दाश्रयस्य पृथिव्यादिव्यतिरेकाच्छब्द आकाशस्य लिङ्गमिति । प्रथमतः शब्दः किञ्चिदाश्रितः गुणत्वादित्यनुमानम् । अथ क आश्रय इति जिज्ञासायाम्, शब्दो न पृथिव्याद्याश्रितः तथात्वे बाधकसद्भावादिति विवेचने, शब्दः पृथिव्यादिव्यतिरिक्तकिञ्चिदाश्रितः तदनाश्रितत्वे सति आश्रितत्वात् । यन्नैवम्, तन्नैवमिति विलक्षणसिद्धिः । तदेवाकाशमिति ॥ २७ ॥

अथ तर्ह्यस्य द्रव्यत्वे किं मानम् । वाय्वधिकारोक्तरीत्या शब्दः क्लृप्तद्रव्यारिक्तद्रव्याश्रित इत्यनुमानस्य साध्याप्रसिध्या व्यतिरेकव्याप्तेर्दुर्वचत्वेनायोगात् ; क्लृप्तद्रव्यातिरिक्तकिञ्चिदाश्रित इत्यनुमाने च द्रव्यत्वालाभादिति शङ्कायां वाय्वधिकारोक्तयुक्तिभिरेव द्रव्यत्वं सुगमम् । न केवलं द्रव्यत्वम्, नित्यत्वमपीत्याह—

**२८. तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ (७७)**

वायुना = वाय्वधिकारेण । द्रव्यानाश्रितत्वात् शब्दजन्मौपयिकसंयोगादिगुणवत्त्वाच्च द्रव्यम् ; द्रव्यानारभ्यत्त्वाच्च नित्यमिति । अत्र नित्यत्वमात्रकथनाद्वायुविशेषानित्यत्वसाधकं तत्रोक्तमत्र न संगतमिति सिद्धम् ॥ २८ ॥

ननु नित्यतया नानाकालेषु शब्दजन्मनिर्वाहेऽपि नानादेशेषु शब्दोत्पत्त्युपपत्तये आकाशानि अनेकानि अभ्युपेयानि । तत्राह—

२९. तत्त्वं भावेन ॥ (७८)

तस्य भावः स्तत्त्वम् । श्रीपद्मोत्पन्नशब्दकारणतया यत् अनुमितमाकाशम् , श्रीरङ्गाच्चुत्पन्नशब्दकारणतयाऽनुमितेऽप्याकाशे तत्त्वम् तदभेदः, एकत्वमिति यावत् , भावेन सत्तया व्याख्यातमित्यर्थः । सत्तायां सदिति प्रत्ययो लिङ्गम् , न त्वत्र तदेव, किन्तु तत्स्थाने शब्दरूपं लिङ्गमुक्तं ग्राह्यम् । तस्याविशिष्टत्वात् , देशभेदेनाकाशभेदसाधकलिङ्गाभावाच्च एकमाकाशमिति भावः । इदमेव स्पष्टीक्रियते—

३०. शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ॥ (७९)

इदं सूत्रं कैश्चिन्न पठ्यते । कालादिप्रकरण इवात्राप्येतदभावेऽपि न क्षतिः । एवमेकत्वोक्त्याऽऽकाशत्वं न जातिरिति सिद्ध्यति । आकाशशब्दस्य तु आकाश इति संज्ञैव प्रवृत्तिनिमित्तम् । गोसदृशो गवय इत्यादौ गोसादृश्यादिकमिव शब्दवत् आकाशमित्यत्र शब्दवत्त्वं तत्परिचायकम् ; न तु प्रवृत्तिनिमित्तम् । आकाशत्वमित्यस्य आकाशासाधरणधर्म इत्यर्थः । तेन रूपेण शब्दादेरेव भानम् । पृथिवीत्वमित्यादौ तु पृथिव्यसाधारणधर्मत्वेन जातिभानमिति विशेषः ॥३०॥

सत्तायामुक्तमेकत्वं न मुख्यम् । द्रव्य एव मुख्यैकत्वाङ्गीकारात् । अतः तत्रैकपृथक्त्वमसम्भवान्नोक्तम् । अत्र तु तदस्तीत्याह—

३१. तदनुविधानादेकपृथक्त्वं चेति ॥ (८०)

एकत्वानुसरणात् एकत्वव्यापकत्वात् एकपृथक्त्वमप्याकाशेऽस्ति । इदमाकाशं पृथिव्यादितः पृथगिति व्यवहारात् । अत्र इतिशब्दः वक्तव्यशेषसद्भावेऽपि एतावतैवाह्निकं समाप्यत इति सूचनार्थः । शब्दस्य गुणत्वे सिद्धे तेनाकाशानुमानमिति तस्य गुणत्वं स्थापनीयम् ,

यत् अनन्तराह्निके करिष्यते । आकाशे परिमाणं च नोक्तम्, परिमाणप्रकरण एव सर्वपरिमाणविचारादिति ॥ ३१ ॥

भूतवैशेषिकप्रोक्तिः द्रवत्वस्य विवेचनम् ।
वायुव्योमपरीक्षे च द्वितीयप्रथमे क्रमात् ॥

इति वैशेषिकरसायने द्वितीयेऽध्याये प्रथममाह्निकम् ॥

---

अथ द्वितीयमाह्निकम् ।

तत्तद्भूतगुणेषूक्तेषु केषुचिदसाधारणत्वाभिमतेषु साधारण्यभ्रमापनोदप्रकारं तत्र तत्र स्थालीपुलाकन्यायेन दर्शयितुं द्वितीयमाह्निकम् । तत्र सर्वात्मना पृथिव्यन्यावृत्तित्वेनाभिमतस्य गन्धस्यासाधारण्यं पूर्वं स्थाप्यते । अत्रेयमाशङ्का—सुरभि सलिलम्, सुगन्धिर्वायुरित्यनुभवे जाग्रति किमित्यबादौ गन्धः प्राङ्नोक्तः । न च पृथिवीसंबन्धादेव तत्र गन्धप्रतीतिरिति न तदीयः स इति वाच्यम् । अन्यसंसर्गायत्तत्वेऽपि तदीयत्वानपायात् । अतो यथा अग्निसंयोगायत्तं घृतसुवर्णादौ द्रवत्वमुपलब्धं तदीयमित्युक्तम्, तथा गन्धादिर्वक्तव्य इति । एवमाशङ्कायां गन्धस्य पृथिव्यां व्यवस्थिततत्त्वं वक्ष्यन् अन्यदीयस्यापि गन्धस्य तदीयत्वेनानुभवसंभवं पृथिव्यामेव किञ्चिद्दृष्टान्तमुखेनोपपादयति—

**१. पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धभावलिङ्गम् ॥ (८१)**

सत्यन्तस्य अप्रादुर्भाव इत्यत्रान्वयः । केतक्यादिपुष्पस्य वस्त्रस्य च सन्निकर्षसद्भावकालिको वस्त्रे वस्तुतो गन्धस्य गुणस्य प्राक्स्थिता-

दन्यस्याप्रादुर्भावः प्रमाणसिद्धो वस्त्रे समवायेन केतक्यादिगन्धाभावे लिङ्गमित्यर्थः.। अयं भावः—केतकीकुसुमसन्निकृष्टे वाससि गन्धस्तावत् विलक्षणोऽनुभूयते। स न वस्त्रे सम्प्रति प्रत्यग्रमुत्पन्नः। कारणगुणपूर्वको हि कार्यगुणो दृष्टः। यदि केतकीसन्निकर्षकाले तद्वस्त्रमापरमाण्वन्तं भग्नं पुनरुत्पन्नमिति स्यात्, तदा तत्र गन्धान्तरप्रादुर्भावः स्यात्। न चैवम्। प्रत्युत वस्त्रोत्पत्तिद्वितीयक्षणजातः तन्तुगन्धाधीनः कश्चिदनुत्कटो गन्धो गन्धान्तरं प्रतिबध्नात्यपि। अतः कार्यगुणस्य कारणगुणपूर्वकत्वात् पुष्पसन्निकर्षकाले वस्त्रे गन्धाप्रादुर्भाव एव, न तु प्रादुर्भावः। एवमप्रादुर्भूतश्च गन्धः कथं तत्र समवायेन स्यादिति तत्र तदभाव एव। एवञ्च प्रतीतिः परम्परासम्बन्धेन पुष्पगन्धविषयिणीत्येव निर्वाह्यम्। अत एव नैमित्तिकद्रवत्वदृष्टान्तोऽत्र विषमः। तत्र ह्यग्निसंयोगकाले घृतादेः पूर्वस्थिताकारविलक्षणाकारदर्शनात् परमाणुपर्यन्तभङ्गेन क्रमेणावयव्यन्तरं द्रवीभूतमुत्पद्यते; अथ तत्पूर्वकः कार्यगुण इति युक्तम्। न त्वत्र पुष्पसन्निकृष्टवस्त्रादौ सा रीतिरिति। वस्त्रे गुणान्तराप्रादुर्भाव इत्यनुक्त्वा वस्त्र इत्यस्य पश्चादुक्त्या गुणान्तराप्रादुर्भावपदेन वस्त्र-तदवयवपरम्परायां सर्वत्र तदनुत्पत्तिविवक्षा गम्यते। तत्र च हेतुः पाकाद्यभावः॥ १॥

एवञ्च, तुल्यन्यायेन जलेऽप्येलादिसंसृष्टे आपरमाणुभङ्गे प्रमाणाभावाज्जलपरमाणौ गन्धोत्पत्तेरयोगान्नावयविजलेऽपि वस्तुतो गन्ध इति।

---

उप० सू० १. पुष्पवस्त्रयोः संनिकर्षे सति पुष्पावयवगुणरूपात् गुणान्तरात् अप्रादुर्भावः वस्त्रे गन्धाभावे लिङ्गम्। न तु केतकीगन्धाभावो लिङ्गम्।

२ **व्यवस्थितः पृथिव्यां गन्धः ॥ (८२)**

नन्ववयव्यन्तरानुत्पत्तिस्थले स्यात् परम्परया प्रतीतिनिर्वाहः। यत्र त्वग्निसंयोगात् घृतादि द्रवीभवत् अवयव्यन्तरमेवाऽऽपरमाणोर्भवति, तत्र द्रवत्ववत् उष्णस्पर्शोऽप्युत्पद्यताम्। एवञ्चौष्ण्यप्रतीतिर्मुख्यैवोपपद्यते इत्यत्राह—

३. **एतेनोष्णता व्याख्याता ॥** (८३)

अग्निघृतयोः सति सन्निकर्षे औष्ण्याप्रादुर्भावो घृते औष्ण्याभावलिङ्गमित्यर्थः। अयं भावः—द्रवत्वं तावत् अग्नौ अवर्तमानं न परम्परया घृतादावुपपादयितुं शक्यमिति तस्य प्रादुर्भाव एव तत्रेष्टः। न चैवं प्रकृते ; अग्निगतोष्णस्पर्श एव प्रतीयत इति निर्वाहसम्भवात्। अवश्यञ्चावयव्यन्तरानुत्पत्तिस्थले शिलाकांस्यादौ परम्परयैवोष्णताया निर्वाहः। तथैव सर्वत्र युक्तं वक्तुमिति। ईदृशाशङ्कयाऽत्रोष्णतायाः प्रसक्तत्वादेव, एतेनोष्णता व्याख्यातेत्युक्तम् ; न तु एतेन शीतता व्याख्यातेति। उष्णता यथा पृथिवीजलवायुषु त्रिषु, तथा शीतताऽपि पृथिव्यां वायौ चन्द्रकिरणादौ तेजसि चेति त्रिषूपलभ्यत एव ॥ ३ ॥

एवमुष्णताया औपाधिकत्वमुक्तम्। सा यत्र व्यवस्थिता तदाह-

४. **तेजस्युष्णता ॥** (८४)

व्यवस्थितेति विपरिणम्यानुषङ्गः ॥४॥

गन्धन्यायेन शीतताया अन्यत्रौपाधिकत्वस्य सिद्धत्वाद्व्यवस्थास्थलमात्रं दर्शयति—

५. अप्सु शीतता ॥ (८५)

वायुस्पर्शस्यात्र क्वचिदप्यनुभवो नास्ति। वायुरेव तु जलतेजःस्पर्शवत्तयाऽनुभूयत इति विमृश्य वायुस्पर्शस्य तत्र व्यवस्था न दर्शिता। इदं गन्धादिव्यवस्थाप्रदर्शनं नीलस्नेहादिव्यवस्थाया अप्युपलक्षणं मन्तव्यम्। रूपरसस्पर्शेषु पृथिव्यादिसाधारणेष्वप्यवान्तरवैजात्यमस्तीति प्रागेवोक्तम्। अथापि तद्वैजात्यं शीतोष्णादिवत् लौकिकानुभवानारूढं परीक्षकैरेव विविच्य सुग्रहम्। तादृशानां तेषामपि तत्र व्यवस्थितत्वमेव, सांसिद्धिकद्रवत्ववदिति ॥ ५ ॥

एवं गन्धादीनामसाधारण्यमुपपादितम्। वायोरसाधारणधर्मो न स्फुट इति तदुपेक्षा। अथ शब्दस्याकाशासाधारण्यं प्रागुक्तमपि पुनर्विचार्य स्थाप्यम्। शब्दस्य गुणत्व एव विवादात्, नित्यत्वाभिमानेन तस्याकाशकार्यत्वेऽपि विवादाच्च। तदेवाऽऽह्निकान्तरे विस्तरेण करिष्यता कालदिशौ मध्ये निरूप्येते। मध्ये निक्षेपश्चाऽऽद्यन्तक्रियमाणासाधारणधर्मविचारस्य मुख्यत्वं कालदिग्विचारस्य च प्रासङ्गिकत्वं दर्शयितुम्। उपरितनस्त्वध्यायः केवलमात्मविषयकः। अयञ्च देहोपयोगिपञ्चभूतविषयकः। अत्राप्राधान्येन कालदिङ्निवेशः। तत्र चाप्राधान्येन मनस इति। कथमत्र कालस्य प्रसंगः। उपस्थितस्योपेक्षानर्हत्वं हि प्रसङ्ग इति चेत्—कालिकसंन्बधेन कालस्य सर्वाधारत्वेऽपि गन्धादीनां यथा कालसंबन्धित्वं न मुख्यम्, तथा जलादिसंबन्धित्वमपि; समवायसंबन्धस्यैव मुख्यसंबन्धत्वादित्युपपादनाय तदुपस्थितिरिति। तत्र वाय्वादिवत् कालादेरप्यप्रत्यक्षत्वमेव। प्रत्यक्षयोग्यत्वे तु तस्य द्रव्यत्वात् गुणवत्त्वात् अप्राधान्ये प्रमाणाभावात् अयं

कालः, इयं दिगिति विशिष्य विशेष्यतयाऽपि ग्रहणप्रसङ्गः। यत्तु इदं वर्तमानम्, इदं प्राच्यमित्यादिग्रहणम्, तत् कालदिगुपाधीनां विशेषणतया ग्रहणेनैवोपपन्नम्। अतः कालादिकमप्यनुमानैकनिरूप्यमिति तत्र कालं निरूपयति—

* ६. अपरस्मिन् परं युगपद्युगपच्चिरं क्षिप्रमिति कालिङ्गानि ॥ (८६)

इतीति इतिप्रत्यया इत्यर्थः। अपरस्मिन् परमित्येतत् परस्मिन्नपरमित्यस्याप्युपलक्षणम्। परमित्यादयः प्रत्ययाः कालानुमापकाः। परमिति प्रत्ययः काललिङ्गमिति वक्तव्ये अपरस्मिन् वस्तुनि परमिति प्रत्यय इत्युक्तयाऽयमर्थः सूच्यते। बालात् यूनि, यूनः स्थविरे च 'अयं पर' इति योऽयं प्रत्ययः, तद्विषयभूतं परत्वं न तावत् युवादौ कारणगुणक्रमेणोत्पन्नम्। यूनि बालात् परत्वस्येव, स्थविराद-परत्वस्याप्यनुभवात्। बालोत्पत्तेः प्राक् बालावधिकपरत्वोत्पत्त्ययोगेन पूर्वं तस्य परभिन्नत्वाच्च। अतः किञ्चिदपेक्षयाऽपरस्मिन् अन्यापेक्षया परत्वप्रत्यये विषयभूतं परत्वं न सांसिद्धिकम्। नापि दिक्कृतम्, दैशिकापरत्वसत्तादशायामपि परत्वसत्त्वात्। तथाहि—दूरस्थितात् यूनः समीपस्थितः स्थविरोऽपरो भवति। तत्र स्थविरे कालकृतं तु परत्वमेव। अतो विलक्षणपरत्वप्रत्ययोऽयं न कालमन्तरा निर्वहतीति ॥

कालस्य तन्निर्वाहकत्वं कथमिति चेत्—उच्यते-अधिकसूर्यपरिस्पन्दवान्, पर इति, न्यूनसूर्यपरिस्पन्दवान्, अपर इति च गृह्यते। तत्राधिकसूर्यपरिस्पन्दवत्त्वादिबुद्धिः परत्वोत्पादिका। परिस्पन्दस्य च

* उप. सू. ६. शुद्धोपस्कारपाठोऽप्येवमेव ग्राह्यः।

सूर्यनिष्ठस्य पुङ्गतत्वं साक्षान्न भवतीति परम्परया निर्वाह्यम् । तत्र च परम्परासंबन्धे काल एव घटकः : एवमिदं परत्वादिकं प्रति काल-पुरुषसंयोग एवासमवायिकारणम् । अतः परत्वाद्यसमवायिकारणसंयो-गाश्रयतयाऽपि कालसिद्धिः । ननु सूर्यपरिस्पन्दस्य पुरुषे उपनयार्थं कालः कुतः ? कालस्वीकारे यः संबन्धो भविष्यति परिस्पन्दस्य-स्वाश्रयसूर्यसंयुक्तकालसंयुक्तत्वं पुंसीति, तत्स्थाने स्वाश्रयसंयुक्तगगन संयुक्तत्वमपि हि वक्तुं शक्यत इति चेन्न—गगनस्योक्तपरम्परासंबन्धेन परिस्पन्दविशिष्टताबुद्धिनिर्वाहकत्वे, तेनैव संबन्धेन दण्डसंयोगवत्ता-बुद्धिरपि दण्डासंबन्धिनि भेर्यादौ स्यात् । यत्किञ्चिद्भेरीगतस्य दण्ड-संयोगस्य स्वाश्रयभेरीसंयुक्ताकाश संयुक्तत्वसंबन्धेन भेर्यन्तरेऽपि सत्त्वात् । परिस्पन्दस्थले तस्य संबन्धस्य विशिष्टबुद्धिनियामकताया: दर्शनात् । तदर्थ-मतिरिक्तकालस्वीकारे तु यन्निर्वाहार्थं कालः कल्पितः, तावन्मात्रनिर्वाह-कत्वमेव तस्य धर्मिग्राहकमानसिद्धमिति न दण्डसंयोगादिविशिष्टबुद्धि-नियामकत्वापत्तिः । एवमधिकसूर्यपरिस्पन्दस्य स्थविरे, न्यूनसूर्यपरिस्-पन्दस्य च यूनि समानकालिकत्वसंबन्धेनैव वैशिष्ट्यं वस्तुतो वाच्यम्, अन्यादृशोक्तसंबन्धे अतिप्रसङ्गस्य सिद्धत्वात् । अतश्च कालाभावे कथं संबन्धप्रसिद्धिरिति ।

एवं युगपज्जात इत्यादावपि कालस्य घटकत्वम् । युगपत्—एक-स्मिन् सूर्यपरिस्पन्दे, अयुगपत्—विभिन्नसूर्यपरिस्पन्दे, चिरम्—बहुसूर्य-परिस्पन्दव्यवहितपरिस्पन्दे, क्षिप्रम्-बहुपरिस्पन्दानन्तरितपरिस्पन्दे इत्यर्थ-वर्णने तत्तत्परिस्पन्दस्य तत्र जातवस्तुनश्च संबन्धः समानकालिकत्वरूप

एव. वाच्य इति। यदा तु युगपदित्यादेः तत्तत्सूर्यपरिस्पन्दावच्छिन्नकाले इत्यर्थः, तदा सुतरां कालस्य प्रत्ययविषयत्वम्। तथाचानुमानम्—इमे प्रत्ययाः क्लृप्तद्रव्यातिरिक्तविषयकाः क्लृप्तद्रव्यानिर्वाह्यप्रत्ययत्वादिति ॥ ६

**७. द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ (८७)**

**८. तत्त्वं भावेन ॥ (८८)**

सूत्रद्वयं पूर्ववद्व्याख्येयम्। एवञ्च क्षणमुहूर्ताहोरात्रमाससंवत्सरादिकालभेदः उपाधिभेदकृतः। मुहूर्तादीनां क्षणसमुदायविशेषरूपतायाः आनुभविकत्वात्। क्षणस्य चोपाधिविशेषमादाय निरूपणसंभवादिति भावः। एकपृथक्त्वे एकत्वानुविधानस्य प्रागेवोक्ततया तदत्रानुक्तिसिद्धमिति न सूत्रितम्॥ ७ + ८ ॥

**९. नित्येष्वभावात् अनित्येषु भावात् कारणे कालाख्येति ॥ (८९)**

नित्येषु गगनादिषु, अस्मिन् वसन्तादिकाले इदं भवतीति कालविशेषस्य व्यावर्तकतयाऽन्वयाभावात्, अनित्येषु घटादिषु, अस्मिन् काले अयम्, न त्वन्यदेति तद्भावात् अन्वयव्यतिरेकाभ्यां कालः सर्वोत्पत्तिस्थितिनाशहेतुः सर्वकार्यकारणम्। न च नित्यपदार्थस्य सर्वकालवृत्तित्वात कालविशेषस्य व्यावर्तकतया आधारत्वं न भवतीति तत्र, वसन्ते गगनम्, वसन्ते गोत्वम् इत्यादिः न व्यवहारः; अनित्यस्य तु किंचित्कालवृत्तित्वात् कालस्याधारतया व्यावर्तकत्वसंभवात व्यवहार उपपन्नः इत्याधारधेयभाव एव प्रतीतिविषयोऽस्तु, न कार्यकारणभाव इति वाच्यम्—अनुभवसिद्धस्य कार्यकारणभावस्य अपलापायोगात्। कालद्रव्यमनङ्गीकुर्वता, वसन्ते पुष्पोत्पत्तिरित्यादौ सूर्यपरिस्पन्दविशेषस्य

पुष्पोत्पत्तेश्च आधाराधेयभावायोगेन कार्यकारणभावस्यैव वक्तव्यतया कालद्रव्यमङ्गीकुर्वद्भिरपि तदनुभवस्य तथैव व्याख्यानौचित्याच्च । किंच क्वचिदाधाराधेयभावमात्रविवक्षायामपि, 'कृष्णसद्भावकाले गावः प्रमुदिताः इत्युच्यते, न तु कृष्णसमकालिकगोपान्तरग्रहणेन, तत्काले गावः प्रमुदिता'इतिः अतः तादृशप्रयोगेषु अवश्यं कार्यकारणभावस्य विवक्षितत्वमस्ति । अत्र, कारणं काल इत्यनुक्त्वा कारणे कालाख्येतीति वचनात् अयमर्थो ज्ञायते—इदानीं तदानीमित्यादिषु प्रतीतानामुपाधीनां कारणत्वमुक्तरीत्या सिद्धम् । एवं कारणभूते तत्र कालाख्या कालप्रसिद्धिरस्ति । तत्तदुपाधिर्हि कालत्वेन गृह्यमाणः कारणमित्युच्यते । यदि कालस्य कारणत्वं बाधितं स्यात्, तत्त्वेन गृहीते उपाधौ कारणत्वं कथं गृह्येत ? न हि शुक्तित्वेन गृहीते रजते अङ्गुलीयकहेतुत्वं गृह्यत इति । अतः उपाधिरूपे कारणे कालाख्येति हेतोः कालः सर्वकार्यकारणमिति शेषपूरणेन व्याख्येयम् ॥ ९ ॥

कालानन्तरं दिशमपि साधकप्रमाणोपन्यासपूर्वं निरूपयति—

**१०. इत इदमिति यतः तद्दिश्यं लिङ्गम् ॥ (९०)**

इत इदं प्राक्, इत इदं दक्षिणम् इत्येवं दशदिक्प्रत्ययबलात् दिक्सिद्धिः । सूत्रार्थस्तु—अस्मादिदं प्राक् इत्यादिप्रत्ययः यतः प्राक्त्वादिधर्माद्भवति, तत् प्राक्त्वादिकं दिक्साधकं लिङ्गमिति । प्राक्त्वादिकम् उदयगिरिसंनिकृष्टत्वादिरूपम् इदम्पदविवक्षितवस्तुनिष्ठम् । सन्निकृष्टत्वादिश्च संयुक्तसंयोगपरम्पराविशेषः संयुक्तसंयोगपरम्परा नाम उदयगिर्यादेः उक्तेदम्पदार्थस्य च मध्ये क्रमेण वर्तमानानि यावन्ति मूर्त-

द्रव्याणि, तावद्गतमिथःसंयोगकूटम् । एवं पदार्थान्तरनिष्ठतावत्संयोगकूट-निष्ठत्वम् इदम्पदार्थस्य साक्षादनुपपन्नमिति इमे संयोगाः परम्परासंबन्धेन इदमर्थसंबन्धिनः, साक्षादसंबन्धित्वे सति संबन्धित्वादित्यनुमेयम् । स च परम्परासंबन्धः तावत्संयोगावच्छिन्नदिक्प्रदेशसंयुक्तत्वरूप इति दिक्सिद्धिरिति । न च उदयगिरिसंयुक्तमेकं मूर्तम् , तत्संयुक्तं मूर्तान्तरमित्येवंरूपा न्यूनसंख्याकसंयोगघटिता या संयुक्तसंयोगपरम्परा, तद्घटकान्तिमसंयोगवत्त्वं संनिकृष्टत्वम् ; एव न्यूनेत्यत्र अधिकेति निवेश्य विप्रकृष्टत्वं वर्णनीयम् । स चान्तिमसंयोगः समवायेनैव इदम्पदार्थेऽस्तीति नात्र दिशोऽपेक्षेति वाच्यम् —उदयगिरिसंनिहित-किञ्चिन्मूर्तद्रव्यसंयुक्तं तद्दक्षिणपार्श्वगतं द्रव्यम् ; तत्संयुक्तं तद्दक्षिणम् ; तत्संयुक्तं तत्प्रत्यक् ; तत्संयुक्तं तदुत्तरम् ; अथ च तदुत्तरमिति रीत्या यथेच्छं संयुक्तवस्तुघटनेन संनिकृष्टेऽपि वस्तुन्यधिकसंयुक्तसंयोग-परम्पराप्रसंगेन तद्वारणार्थं तत्परम्पराघटकसंयोगानां सर्वेषामेकदिग-वच्छिन्नत्वस्य, संनिकृष्टत्वेनाभिमतवस्तुनः तद्दिक्प्रदेशसंबन्धित्वस्य च वक्तव्यत्वात् तत्र च लाघवेन स्वावच्छिन्नदिक्प्रदेशसंबन्धित्वरूपसंबन्धेन सर्वसंयोगवत्त्वमित्युक्तेर्युक्तत्वात् ।

एवं वा सूत्रार्थः—इत इदमिति पञ्चम्यन्तघटितव्यवहारः यतः प्राक्दक्षिणादिप्रत्ययाद् भवति, तत् प्रत्ययरूपं दिशो लिङ्गमिति । तथा च भाष्यम् , 'दिक् पूर्वापरादिप्रत्ययलिङ्गा' इति । यद्यपि कालिकपरत्वापरत्वाभ्यां कालस्येव दैशिकपरत्वापरत्वाभ्यां दिशोऽप्य-नुमानसंभवात्, इह सूत्रे, इत इदं परम् , तथाऽपरमिति प्रत्ययः यस्मात् परत्वादेर्भवति, तत् दिक्साधकमित्यप्यर्थो वर्णयितुं शक्यते,

अथापि भाष्ये तदुपेक्ष्य दशदिक्प्रत्ययमात्रभाषणस्यायं भावः— पूर्वसूत्रे अपरस्मिन्परमिति दैशिकापरत्वाश्रये कालिकपरत्वस्योक्ततया तत एव दैशिकपरत्वापरत्वसद्भावः, ततो दिगुन्नयनं च सूचितमेव । किञ्च कालव्यावृत्तदिक्सिद्धिः यादृशप्रत्ययाद्भवति, स इह विवक्षणीयः । इत इदमिति सूत्रोक्तं च तत्पक्षे कालदिगुभयसाधारणम् । कालिकपरत्वविषयेऽपि इत इदं परमित्येव प्रतीतेः । अतः प्राक्दक्षिणादिविवक्षैवात्र युक्ता । यदि च परत्वापरत्वविवक्षा सूत्रकृता कृता स्यात्, तर्हि कालव्यावृत्तये इत इदमस्येति षष्ठ्यन्तपदमपि निर्दिष्टं स्यात् । अयं किल कालिकपरत्वादितो दैशिकपरत्वादेर्विशेषः, यत् युवबालयोः परत्वापरत्वे नियते ; सर्व प्रत्यविशिष्टे । दैशिकपरत्वापरत्वे त्वनियते । एकं पुरुषं प्रति यत् विप्रकृष्टं परम्, तदेव तत्समीपवर्तिनं प्रति अपरम् । तस्य यदपरम्, तदस्य परम् । एकस्यापि पुंसः कालभेदेन परमेवापरं भवति ; परत्वेनाभिमतवस्तुसमीपेऽस्य गमनाद्वा ; अस्य समीपे तदानयनाद्वा । अत एव वैलक्षण्यात् कालेनात्र निर्वाहो न भवतीति दिशोऽप्येतादृशपरत्वाद्यर्थमावश्यकता । न च गगनादिनैव दैशिकपरत्वापरत्वनिर्वाहः सुकरः । संनिकृष्टे अपरत्वस्य, विप्रकृष्टे परत्वस्य चोत्पादनीयतया संनिकृष्टत्वादेश्च पूर्वोक्तरीत्या संयोगकूटविशेषविशिष्टत्वरूपतया दिश आवश्यकत्वात् । अन्यथा हि तत्तन्मूर्तद्रव्यगतसंयोगकूटवैशिष्ट्यं परत्वाद्यभिमतवस्तुनि स्वाश्रयमूर्तद्रव्यसंयुक्तगगनसंयुक्तत्वसंबन्धेनोपपादनीयम् । अयं च संबन्धः दिगन्तरगतमूर्तद्रव्यग्रहणेऽपि भवितुमर्हतीति एकदिक्संबन्धिसंयोगानामेव ग्रहणमिति न स्यात् । स्वावच्छिन्नदिक्संबद्धत्वरूपसंबन्धकथने तु एकदिग्गतमूर्त-

द्रव्यसंयोगानामेव ग्रहणमिति अनुभवसिद्धमेतत् । अतः इतरव्यावर्तन-सामर्थ्यवत्तयैव दिशः कल्पनान्नानुपपत्तिः । तत्सिद्धं पूर्वसूत्रसूचित-विलक्षणपरत्वादिप्रत्ययः एतत्सूत्राभिमतदशदिक्प्रत्ययश्च अतिरिक्त-दिक्साधका इति । प्रयोगस्तु—इमे प्रत्ययाः क्लृप्तद्रव्यातिरिक्त-निर्वाह्याः क्लृप्तद्रव्यानिर्वाह्यप्रत्ययत्वादिति ॥ १० ॥

**११. द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ (९१)**

**१२. तत्त्वं भावेन ॥ (९२)**

सूत्रद्वयं काल इव व्याख्येयम् ॥ ११-१२ ॥

ननु कथं दिश एकत्वम्, विशेषलिङ्गसद्भावात्, दशदिक्प्रत्य-यानामुक्तत्वात् ततो भेदस्यैव सिद्धेरित्यत्राह—

**१३. कार्यविशेषेण नानात्वम् ॥ (९३)**

कार्याणां दिगुपाधित्वेनाभिमतानां विशेषेण भेदेन—नानात्वेन दिशोऽपि नानात्वम्; न स्वरूपतः । विशेषणगतनानात्वस्य विशिष्टे आरोपात् भेदव्यवहार इत्यर्थः । एवमेव निर्वाहात् नानादिक्स्वीकारो नावश्यक इति भावः ॥ १३ ॥

कार्यनानात्वमेवोपपादयति—

**१४. आदित्यसंयोगात् भूतपूर्वात् भविष्यतो भूताच्च प्राची ॥ (९४)**

भूतपूर्वात् पूर्वदिनपर्यन्तं जातादित्यर्थः । अन्यथा पूर्वपदवै-यर्थ्यात् । भविष्यतः श्वःप्रभृति जनिष्यमाणात् भूतात् अस्मिन् दिने जाताच्च आदित्यसंयोगात् एकदिनान्तर्गतप्रथमादित्यसंयोगरूपादुपाधेः

उप. सू. १४. भूतादिति आदिकर्मणि क्तप्रत्ययः वर्तमानादिति यावत् ।

प्राचीति विशेषवती दिगित्यर्थः ॥ सर्वदा सुमेरुशिखरं प्रदक्षिणं करोत्यादित्यः । तत्र यस्मिन् पार्श्वे स आगच्छति, तत्पार्श्वे प्रथमसंयोगमुपाधिं कृत्वा तदवच्छिन्ना दिक् प्राचीत्युच्यते । अत्र भूतपूर्वात् इत्यादिना कालत्रयनिर्देशेन कदाचित् यदि आदित्यः संप्रति प्रतीचीत्येनाभिमतदिशो निष्क्रम्य पुनरेयात् , तदा कथं व्यवस्थेति शङ्का परिह्रियते । सर्वदा तस्य प्रादक्षिण्येनैव भ्रमणादिति । एवं प्राचीत्वोपपादनाय भूतादिकालत्रये यः कोऽपि कालो यथेच्छं ग्रहीतुं शक्यते इति च भावः । प्रकर्षेण अञ्चति सूर्योऽत्र इति प्राची । सूर्यगतेः प्रकृष्टत्वं च प्रकाशविधानेन स्थिततमोनिवारणेन लोकोपकारकत्वम् ॥ १४ ॥

अन्यासु तिसृषु दिक्षु कार्यभेदं वक्तुमाह—

**१५. तथा दक्षिणाप्रतीची उदीची च ॥ (९५)**

तथेत्ययस्य प्रथमादित्यसंयोगवत् यत्किंचिदुपाधिसद्भावादित्यर्थः । तथा च अधःस्थितां भुवमञ्चति अस्यां दिश्यादित्य इति अवाची । दक्षिणायने भूमिसूर्ययोः विप्रकर्षात उपरिस्थितसूर्यात् भूमिरधिकमधःस्थितेत्युच्यते । इयमेव दिक् दक्षिणा ; सूर्याभिमुखपुरुष संबन्धिदक्षिणपार्श्वावच्छिन्नदिक्त्वात् । पार्श्वस्य दक्षिणत्वमखण्डधर्म इत्याहुः । प्रतिकूलमञ्चति अस्यां दिशीति प्रतीची । गतेः प्रतिकूलत्वं लोकोपकारकप्रकाशविलोपकत्वात् । तथा च चरमादित्यसंयोगावच्छिन्ना दिक् प्रतीची । ऊर्ध्वगतां भूमिमञ्चतीति उदीची । उदगयने भूमिसूर्ययोरधिकसंनिकर्षाद् भूमिरूर्ध्वं गतेत्युच्यते । प्रादक्षिण्यसंपत्तये एवंक्रमेण दिगुक्तिः ॥ १५ ॥

विदिक्षु कार्यभेदं दर्शयितुमाह—

**१६. एतेन दिगन्तरालानि व्याख्यातानि ॥ (९६)**

उक्तरूपप्राचीदक्षिणामध्यदेशावच्छिन्ना दिक् पूर्वदक्षिणा। एवमन्या अपि। भूसंनिकर्षावच्छिन्ना दिक् अधः। भूविप्रकर्षावच्छिना दिक् ऊर्ध्वम् इति तत्र तत्र उपाधिभेद एवेत्यर्थः। तत्तद्दिगवस्थितपर्वतविशेषान्, इन्द्रादीन् लोकपालान् वा गृहीत्वा तत्तत्पर्वतसंनिहिता इन्द्रादितत्तदधिष्ठिता वा दिक् सा सेत्यपि विवेचयन्ति ॥ १६ ॥

एवं कालिकदैशिकसंबन्धाभ्यां सर्वसंबन्धिन्यौ कालदिशौ प्रसंगान्निरूप्य अथ शब्दस्य गुणत्वपरीक्षां वर्तयिष्यन् तस्याः संशयाधीनत्वात् संशयसामान्यमेव सर्वपरीक्षाप्रथमाङ्गं पूर्वं कारणनिरूपणेन शोधयति—तेन निष्कारणशङ्काकरणं न युक्तमिति, विशेषनिर्णायकहेतूपन्यासानन्तरमपि वृथैव संशयानुवृत्तिर्न कार्येति च व्युत्पादितं भवतीत्याशयेन—

**१७. सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः॥ (९७)**

संशयसामान्ये साधारणधर्मवद्धर्मिज्ञानम्, अन्यतरकोटिनिश्चयाद्यभावः, कोटिद्वयस्मरणमितीदं सर्वं मिलितं कारणम्। तदत्रोच्यते। समानमेव सामान्यम् साधारणधर्मवद्धर्मि। अत्र प्रत्यक्षपदं निश्चयमात्रपरम्। प्रत्यक्षातिरिक्तज्ञानादपि संशयस्वीकारात्। विशेषाप्रत्यक्षादिति। विशेषो विपरीतकोटिमत्त्वं तद्व्याप्यवत्त्वं वा। तद्विषयकनिश्चयाभावादित्यर्थः। स्थाणुत्वादिरूपविपरीतकोटिनिश्चये वा स्थाणुत्व-

---

उप. सू. १७. सामान्यप्रत्यक्षात्—सामान्यवतः प्रत्यक्षादित्यर्थः; मतुब्लोपात्।

व्याप्यवक्रकोटरादिमानिति तद्व्याप्यवत्तानिश्चये वा सति संशयो न जायत इति । विशेषस्मृतेः—कोटिद्वयस्मरणात् । न्यायसूत्रोक्तेषु पञ्चसु कारणेषु समानधर्मज्ञानमेकमेव कारणमिह सूत्रकृदभिमतम् । न्यायभाष्ये यथासूत्रं पञ्च कारणानि परिगणितानि । न्यायवार्तिके तु साधारणधर्म - असाधारणधर्म - विप्रतिपत्तिरूपकरणत्रयमात्रपरतया तत् सूत्रं व्याख्यातम् । अन्यकारणवर्णनस्थलेऽपि सर्वत्रेदमेव सूपपाद-मिति तद्भाष्यव्याख्याने प्रदीपाख्याने अस्माभिः स्पष्टीकृतम् । सूत्रमिदं न्यायवार्तिकेऽपि व्याख्यातम् ।

अनध्यवसायज्ञानं संशयातिरिक्तमसाधारणधर्मज्ञानजन्यमिति प्रशस्तपादभाष्यम् । बाहीकस्य पनसवृक्षदर्शने कःस्विदयमिति ज्ञानमु-देति । नायं निश्चयः; जिज्ञासाहेतुत्वात् । नापि संशयः; द्रव्यत्वादि-सामान्यधर्माणामिव पनसत्वरूपविशेषधर्मस्यापि प्रत्यक्षितत्वात् । तस्मा-दिदमतिरिक्तमनध्यवसायात्मकज्ञानमिति । तत्र च सर्वेतरव्यावृत्तपन-सत्वरूपासाधारणधर्मज्ञानमेव कारणमिति । वस्तुत इह पनसत्वपर्य-न्तस्य सर्वस्य धर्मस्य गृहीतत्वात् वृक्षविशेषसंज्ञामात्रस्यैव तेनाज्ञातत्वात् संज्ञाविषयकज्ञानाभाव एवानध्यवसायः । तावता समुपनता संज्ञाजिज्ञा-सैव कःस्विदयमित्याकारिकेति नात्र ज्ञानं विलक्षणमावश्यकमिति रीत्या विमृश्यम् । असाधारणधर्मज्ञानस्यापि कया चित् प्रक्रियया संशय-हेतुत्वमस्तीत्येव भाष्यकृताऽप्युपपादितम् । शब्दविषयकवक्ष्यमाण-संशयवर्णनावसरे तत् दर्शयिष्यते । सर्वथा सर्वत्र साधारणधर्मज्ञानादेव संशय इति । एवं संशयकारणमुक्तम् । संशयस्वरूपं तु एकस्मिन् धार्मिणि विरुद्धनानाकोटिप्रकारकं ज्ञानमिति ॥ १७ ॥

संशये कचित् कचिदीदृशकारणजन्यत्वमुपपादयितुं न शक्य-मित्याशंकापरिहारं मनसिकृत्य समन्वयं स्थलत्रयेण दर्शयति—

* १८. दृष्टञ्च दृष्टवद्दृष्टा ॥ (९८)

यस्मिन् धर्मिणि संशयो भवति, तत्रैव संदिह्यमानयोर्विशेषयोः पूर्वं ग्रहणं संशयकालेऽग्रहणञ्चावश्यकमिति मन्वानं प्रति—'तथा न मन्तव्यम्। विशेषयोः पृथक्पृथक् यत्रतत्रापि दृष्टयोरिदानीं स्मृतयोः अत्र धार्मिणि तत्तत्साधारणस्य धर्मस्य दर्शनात् संशयो भवितुमर्हति। यथा स्थाणुपुरुषव्यक्तिगतस्य ऊर्ध्वत्वस्य प्रकृतसन्निकृष्टव्यक्तौ ग्रहणे सति, स्थाणौ यत्र क्वापि स्थाणुत्वस्य, पुरुषे चान्यत्र पुरुषत्वस्य दृष्टस्य संप्रति स्मरणात् संशयः' इति प्रतिबोधनं क्रियते। सूत्रार्थस्तु— दृष्टाभ्यां तुल्यं दृष्टवत्। कचिदिन्द्रियसन्निकर्षवशात् दृष्टं धर्मिणं दृष्टवद् दृष्ट्वा स्थलान्तरदृष्टस्थाणुपुरुषतुल्योर्ध्वत्वरूपसाधारणधर्मवत्तया दृष्ट्वा संशेते इति। दृष्ट्वेति क्त्वाप्रत्ययोक्तसमानकर्तृकत्वस्य संशयपद-घटकक्रियायामन्वयवर्णने तु पूर्वसूत्रस्थसंशयपदानुवृत्तिर्वा, इतस्तृतीय-सूत्रस्थसंशयपदापकर्षणं वा भवेत्। तथा च विशेषयोर्ग्रहणं 'पूर्वकालिकं व्यक्त्यन्तरे उपपाद्यम्; न तु अत्रैव, स्थाणुत्वपुरुषत्वयोरेकत्र कदाऽप्ययोगादिति भावः। अयञ्च साधारणधर्म ऊर्ध्वत्वादिः न साक्षात्प्राग्दृष्टस्थाणुपुरुषनिष्ठ एव; किंतु तन्निष्ठोर्ध्वत्वसजातीय इति वतिप्रत्ययेन ज्ञाप्यते। कचिदेकोऽपि धर्मस्तथा। यथा-गोत्वं ज्ञातं

---

१ उप. सू १८. दृष्टवत् - दृष्टाभ्यां स्थाणुपुरुषाभ्यां तुल्यं वर्तमानं दृष्टमूर्ध्वत्वं संशयहेतुरित्यर्थः।

शाबलेयोऽन्यो वेति संदेहप्रयोजकम् । अत्र चकारोऽनुमितधर्मि संग्रहार्थः ।· यथा क्वचित् त्रिषाणमात्रं गुल्मान्तरितस्य प्राणिनो दृष्ट्वा तेन प्राणिनमनुमाय, अयं प्राणी गौर्गवयो वेति संशेते पूर्वदृष्टगोगवय-तुल्यविषाणरूपसाधारणधर्मबलादिति । यद्वा इहोपरि च सूत्रे चकारः परस्परार्थसमुच्चयार्थः । तदा दृष्टपदमेव निश्चितेत्यर्थकं सत् दृष्टानु-मितोभयसाधारणम् ॥ १८ ॥

एवं विशेषो व्यक्त्यन्तरे दृष्ट एव संशायक इति मन्वानं प्रति नैषोऽपि नियम इत्यावेदयितुमाह—

* १९. **यथादृष्टमयथादृष्टञ्चोभयथा दृष्टत्वात्** ॥ (९९)

पूर्वसूत्रात् दृष्ट्वेत्यनुषज्यते । यथादृष्टं पूर्वं सकेशत्वादिरूप-किञ्चित्प्रकारवत्तया दृष्टम्, अयथादृष्टं पुनस्तद्रहित तया दृष्टञ्च धर्मिणं कदाचित् प्रावृतमस्तकत्वादिना दृष्ट्वा संशेते । कुतः ? एकस्यैवोभयथा-दृष्टत्वादिति । तथाच तद्धर्मिणि पूर्वजातं विशेषग्रहणमपि संशायकमिति भावः । अत्र चैत्रत्वादिरेव साधारणधर्मः साधारणत्वमुभयकोटिसमानाधि-करणत्वम् । इदम् उभयथादृष्टत्वादिति पदं पूर्वसूत्रेऽप्यपकर्षणीयम् । तदा ऊर्ध्ववस्तुनः स्थाणुत्वपुरुषत्ववत्तया दृष्टत्वादित्यर्थः । “शास्त्रे तत्रतत्रोभयथादर्शनं हेतुतया व्यपदिश्यते” इति भाष्यस्वारस्यात् पूर्व-सूत्रेऽप्यपकर्ष इति ज्ञायते ॥ १९ ॥

ननु ज्यौतिषिकः सोमोपरागादिकं कदाचित् सम्यक्, कदा-चिदसम्यक् च आदिश्य पुनस्संवत्सरान्तरे अस्यां पौर्णमास्यां सोमोप-

---

उप· सू· १९· यथादृष्टं - सकेशत्वेन दृष्टं चैत्रत्वम् अयथादृष्टत्वात्— अकेशत्वेनापि सह दृष्टत्वात् संशयहेतुः ।

रागो भवितेति गणयित्वा तदादेष्टुं प्रवर्तमानः क्षणं विभावयति, सोमोपरोगोऽत्र भविता न वेति। अत्र च विशेषानिश्चयरूपं कारणं दुर्लभम्, सोमोपरागोऽत्र भवितेति गणितत्वादित्यत्राह—

२०. विद्याऽविद्यातश्च संशयः॥ (१००)

चकारः पूर्वसूत्रद्वयदर्शितप्रकारसमुच्चयार्थः। विद्या प्रमा। अविद्या भ्रमः। ताभ्यां संशय इत्यर्थः। ज्यौतिषिकस्य प्राक् सम्यगादेशकालिकं ज्ञानं प्रमा। असम्यगादेशकालिकं तु भ्रमः। एवं स्वज्ञानयोः पूर्वजातयोः प्रामाण्याप्रामाण्ये विदुषस्तस्य सांप्रतिकज्ञाने ज्ञानत्वरूपसामान्यधर्मबलात् प्रामाण्याप्रामाण्यसंशयः। अस्त्वेतत्; विषयसंशयः कथमिति किल पृष्टमिति चेत्—तत्रैवेदमुत्तरम्। गणितविमर्शाधीने पूर्णिमेयं सोमोपरागवतीति ज्ञाने अप्रामाण्यसंशये जाते सति अप्रामाण्यज्ञानास्कन्दितविशेषनिश्चयस्यैव प्रतिबन्धकतया तदास्कन्दितोऽयमप्रतिबन्धक इति तादृशनिश्चयरूपप्रतिबन्धकाभावात्मकं विशेषप्रत्यक्षमत्र संपन्नम्। एवं पूर्वं सोमोपरागवत्यां तद्रहितायाश्च पूर्णिमायां सोमोपरागवत्तया ज्ञानस्य जातत्वात् सोमोपरागतदभावसमानाधिकरणं यत् सोमोपरागवत्ताज्ञानविषयत्वरूपं सामान्यम्, तस्यात्र ज्ञानात् सामान्यज्ञानमपि समस्तीति न काचिदनुपपत्तिरित्याशयात्॥ एवमाशङ्कापरिहारार्थं प्रवृत्तेन सूत्रत्रयेणार्थात् संशयस्य नानारूपत्वमपि दर्शितं भवति। यथा—धर्म्यन्तरदृष्टविशेषस्मरणाधीनः; प्रकृतधर्मिण्येव दृष्टविशेषस्मरणाधीनः, तथा बाह्यार्थधर्मिकः, आन्तरज्ञानादिधर्मिकश्चेत्येवम्। इदमेव सूत्रं न्यायसूत्रे उपलब्ध्यनुपलब्ध्यव्यवस्थात इत्यनूदितमिति न मन्तव्यम्॥ २०॥

एवं सामान्यतस्संशयहेतुरुपन्यस्तः । स प्रकृतेऽपि संघटनीयः । संशये धर्मितावच्छेदकविशिष्टधर्मिज्ञानमपि सर्वत्र कारणम् । तदत्रास्तीत्युपपादनीयम् । तथा शब्दे द्रव्यगुणकर्ममात्रसंशय इत्यत्रापि नियामकं ज्ञापनीयम् । एवं श्रोत्रग्राह्यो ध्वनिरेव; तदतिरिक्तः स्फोट एव शब्द इत्यर्वाञ्चो वैयाकरणाः । तदप्यर्थान्निरसनीयम् । अतः शब्दं लक्षयति—

**२१. श्रोत्रग्रहणो योऽर्थः स शब्दः ॥ (१०१)**

श्रोत्रं ग्रहणं ग्रहकरणं यस्य सः । श्रोत्रग्राह्यः । शब्दत्वध्वनित्ववर्णत्वादावपि श्रोत्रग्राह्यत्वमस्तीति तद्वारणाय अर्थ इति । श्रोत्रजन्यप्रत्यक्षविशेष्यत्वं यस्य, स शब्दः । अर्थपदेन, 'अर्थ इति द्रव्यगुणकर्मसु' इति वक्ष्यमाणं सूच्यते । तेन सामान्यस्य प्रतीतौ प्रकारतया भासमानस्य व्युदासः । अनेन च अर्थपदेन द्रव्यगुणकर्मसाधर्म्यमत्रास्तीति ज्ञापनात् 'सदनित्य'मिति सूत्रे प्रागुक्ताः सत्त्वानित्यत्वद्रव्यवत्त्वकार्यत्वकारणत्वसामान्यविशेषवत्त्वरूपधर्मा इह दर्शिता भवन्तीति सामान्यादौ तेषामभावात् शब्दे सामान्यादिकोटिकसंशयो न भवितुमर्हतीति सूचितं भवति । 'श्रोत्रग्राह्यादतिरिक्ते च स्फोटे न किञ्चित् प्रमाणम् । श्रोत्रग्राह्यस्त्वनित्यत्वादिविशिष्ट एवेति न सोऽपि स्फोट' इति मतान्तरनिरासः । अत्र श्रोत्रग्रहणोऽर्थश्शब्द इत्यनुक्त्वा योऽर्थस्स इति निर्देशः, शब्दपदस्य श्रोत्रग्राह्यार्थत्वं न प्रवृत्तिनिमित्तम्, किंतूपलक्षणलक्षणमिति ज्ञापनार्थः ॥ २१ ॥

एवं धर्मिणं निरूप्य तत्र प्रकृतपरीक्षाप्रथमाङ्गं संशयं दर्शयति—

* २२. तस्मिन् द्रव्यं गुणः कर्मेति संशयः ॥ (१०२)

पूर्वोक्तयुक्त्या सामान्यादिकोटिकसंशयासंभवात् त्रिकोटिक एवायमुक्तः ॥ २२ ॥

नन्वत्र श्रोत्रग्राह्यार्थत्वरूपविशेषस्य प्रत्यक्षितत्वात् कथं संशय इत्याशङ्कायामाह—

२३. तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वात् ॥ (१०३)

शब्दो द्रव्यमित्यातिष्ठमानानां बुद्ध्या शब्दतुल्यजातीयानि द्रव्याणि ; गुणादीन्यर्थान्तरभूतानि । तार्किकदृष्ट्या च तत्तुल्यजातीयाः गुणाः ; अन्यानि अर्थान्तरभूतानीत्येवं विभाव्यम् । तथाच विशेषस्य व्यावृत्तेः उभयथा—तुल्यजातीयार्थान्तरात्मकोभयप्रतियोगिकतया यद्वा विशेषस्य धर्मस्य उभयथा—तदुभयव्यावृत्ततया सर्वत्र तुल्यजातीयादिषु दृष्टत्वात् नायं विशेषः संशयप्रतिबन्धक इत्यर्थः । अयं भावः—

न तावदिदं श्रोत्रग्राह्यत्वं प्रकृतकोटिरूपविशेषः, द्रव्यत्वगुणत्वकर्मत्वकोटिकसंशयस्यैवोच्यमानत्वात् अस्य तत्र कोटित्वाभावात् । नापि स्थाणुत्वव्याप्यवक्रकोटरादिवत् द्रव्यत्वादिकिञ्चिद्व्याप्यरूपोऽयं विशेषः, अन्यत्र कुत्रापि श्रोत्रग्राह्यार्थत्वस्याभावेन व्याप्यत्वावधारणायोगात् । न चास्य स्वरूपतोऽन्यावृत्तित्वेऽपि विशेषत्वेन रूपेण द्रव्यत्वव्याप्यत्वं संभवति द्रव्ये पृथिवीत्वजलत्वाद्यनेकविशेषदर्शनादिति वाच्यम्— द्रव्य इव गुणकर्मणोरपि रूपत्वोत्क्षेपणत्वाद्यनेकविशेषदर्शनेन विशेषत्वेन

उप. सू. २२. सूत्रमिदमुपस्कारे न ।

उप. सू. २३. विशेषस्य—व्यावृत्तेः उभयथा—उभयत्र दृष्टत्वात् व्यावृत्तिरूपः साधारणधर्मः संशयहेतुरिति ।

विशेषस्य तदेकव्याप्यत्वासंभवात । अतः, शब्दे श्रोत्रग्राह्यत्ववत् द्रव्यगतपृथिवीत्वादिरेव समानासमानजातीयसर्वव्यावृत्तः, न तु गुणादिगतरूपत्वादिरिति पृथिव्यादिवत् द्रव्यमेवेति न मन्तव्यमिति ।

पूर्वमुभयथादृष्टत्वादित्युभयथादर्शनस्त संशयकारणत्ववचनात् अत्रापि विशेषस्य संशयकारणत्वमुभयथादृष्टत्वादित्यनेनोच्यत इति न मन्तव्यम् असाधारणधर्मस्यैतन्मते संशयकारणत्वाभावात् । न्यायदर्शनादौ पुनरसाधारणधर्मस्य संशयहेतुत्वमुक्तम् ।यद्यपि श्रोत्रग्राह्यत्वरूपविशेषस्यासाधारणधर्मस्य कोट्यन्तरसाधारण्याभावेन कोट्यन्तरोपस्थापकत्वायोगेऽपि विशेषत्वेन रूपेण प्रथिवीत्वरूपत्वोत्क्षेपणत्वादिसर्वविशेषग्रहणे तेषां यथायथं द्रव्यत्वादिसमानाधिकरणतया द्रव्यत्वादिकोट्युपस्थापकत्वं संभवति । एवञ्च द्रव्यत्वादिसमानाधिकरणविशेषतुल्यविशेषवत्त्वात् शब्दे द्रव्यत्वादिसंशय इति सुवचम्—अथाप्येवं विशेषत्वेन विशेषस्य सामान्यादावपि सत्त्वेन सामान्यादिकोटिकोऽपि संशयः स्यात् । तदर्थं पूर्वमर्थपददर्शितैराकारैः सामान्यादिव्यावर्तने च तैरेव द्रव्यगुणकर्मसाधर्म्यभूतैः प्रकृतसंशयसंभवे विशेषस्य संशायकत्वकथनं व्यर्थम् । अतः पूर्वोक्तरीत्या संशयासंभवाशङ्कायां प्राप्तायां तत्परिहारपरमेवेदं सूत्रम् । अयमेवार्थः प्रशस्तपादनिष्कृष्ट इति सावधानं विभाव्यम् । सूत्रकृता पूर्वं शब्दस्य श्रोत्रग्राह्यत्वरूपविशेषकथनञ्च तस्य रूपपृथिव्यादिक्लृप्तगुणद्रव्यादिष्वनन्तर्भावसूचनाय । अन्यथा हि शब्दो गुणः रूपत्वात् , द्रव्यं पृथिवीत्वादिति नैल्यघटादिदृष्टान्तेन प्रत्यवस्थानसंभवात् प्रकृतसंशयस्यैवानुत्थतिः स्यात् । एवञ्च श्रोत्रग्राह्यत्वं रूप-

पृथिव्याद्यात्मकेतरभेदसाधकम् । सत्त्वादिः सामान्यधर्मश्च द्रव्यत्वादि-संशयहेतुरिति विवेकः ॥ २३ ॥

एवं संशये गुणत्वस्थापनार्थानि त्रीणि सूत्राणि । तत्र शब्दो गुणः बाह्यैकेन्द्रियग्राह्यत्वात् रूपादिवदिति यद्यपि साक्षादेव गुणत्वानुमानं सुवचम् — अथापि भर्जनकपालाग्नौ प्रभायाञ्च हेतोर्व्यभिचरितत्वशङ्का अप्रयोजकत्वशङ्का च स्यादिति परिशेषबलादेव गुणत्वं समर्थयितुमनाः आदौ द्रव्यत्वं निषेधति—

**२४. एकद्रव्यत्वान्न द्रव्यम् ॥ (१०४)**

एकं द्रव्यं यस्य स एकद्रव्यः, तत्त्वात् । घटादिकं हि कपालद्वयाद्यनेकसमवेतमेव । यदि च कार्यद्रव्यस्यैकमात्रद्रव्यसमवेतत्वं स्यात्, अवयवसंयोगासमवायिकारणकत्वभङ्गः स्यादिति भावः । ननु शब्दस्य द्रव्यत्ववादिना एकद्रव्यत्वं नाङ्गीकृतम् ; अतो हेतुरसिद्ध इति चेन्न-- पूर्वमर्थशब्देन सत्त्वानित्यत्वादिसाधर्म्यसद्भावकथनात् द्रव्यसमवेतत्वस्यापि सिद्धेः । अनित्यत्वञ्च शब्दस्य स्थापयिष्यते । न चानित्यं द्रव्यं द्रव्यासमवेतमस्तीति द्रव्यवत्त्वमपि सिद्ध्यति । एवं तर्हि एकद्रव्यत्वं कथं सिद्ध्यतीति चेत्—शब्दस्य सर्वदेशसर्वकालोपलम्भबलेन व्यापिनित्यनिरवयवद्रव्यवृत्तिताया आवश्यकतया इदमपि सेत्स्यतीति ॥

अस्मदुक्तमेकद्रव्यत्वं कर्मत्वसाधकं भवितुमर्हतीति न मन्तव्यमित्याशयेनाह—

*** २५. नापि कर्माचाक्षुषत्वात् प्रत्ययस्य ॥ (१०५)**

प्रत्ययस्य शब्दविषयकस्य अचाक्षुषत्वात् चक्षुरजन्यत्वात् शब्दो

---

उप. सू. २५. उपस्काराद्युतोऽपि वास्तवः सूत्रपाठोऽयमेव ।

न कर्मापीत्यर्थः। ननु चक्षुरजन्यप्रत्यक्षविषयत्वं वा चक्षुर्जन्यप्रत्यक्षाविषयत्वं वा हेतुः, उभयथापि त्वाचप्रत्यक्षविषये कर्मणि मनःप्रभृतिकर्मणि च व्यभिचार इति चेन्न, चाक्षुषप्रत्ययविषयावृत्तिजातिमत्त्वादित्यत्र तात्पर्यात्। सा च जातिरत्र शब्दत्वम्, दृष्टान्ते तु रसत्वादिः। अयं भावः—शब्दः कर्मेति वादिना न वायुमनसोः परमाणूनां वा कर्मेदमिति वक्तुं शक्यम्; द्रव्ययोग्यतां पुरस्कृत्यैव कर्मयोग्यतायाः वाच्यतया शब्दस्य प्रत्यक्षायोगात्। अन्यथा वाय्वादिकर्मणामशब्दरूपाणामपि प्रत्यक्षापत्तेः। अतः पृथिव्यप्तेजःकर्मेत्येव वाच्यम्। तानि च रूपवत्त्वाच्चाक्षुषाणीति तत्कर्मरूपः शब्दोऽपि चाक्षुषः स्यात्। अन्यथा तदीयमशब्दरूपं गतागतादिकर्माप्यचाक्षुषं स्यादिति।

ननु कर्मशब्दयोरेकत्वमेव। कर्मत्वेन ग्रहणं चक्षुषा। शब्दत्वेन तु श्रवसेति चेन्न—व्यक्तेर्यदिन्द्रियग्राह्यत्वम्, तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वमिति नियमेन चक्षुषा शब्दत्वस्य श्रवसा कर्मत्वस्य चाग्रहणायोगात्। यदि चैकस्य कर्मणः कर्मत्वशब्दत्वभेदेन भिन्नेन्द्रियग्राह्यता, तर्हि स्पर्श एव रूपत्वेन रूपेण चक्षुषा गृह्यते; रूपमेव रसत्वेन रसनेन गृह्यत इत्यादिकल्पनया रूपादेरपि वैजात्यासिद्धिप्रसङ्ग इति सर्वमेकं स्यात्। अतो भिन्नतया भिन्नेन्द्रियेण गृह्यमाणस्य तदेवेदमिति प्रत्यभिज्ञापकाभावाद्भिन्नत्वमेव युक्तम्। अत एव—कर्म द्विविधं शब्दरूपमशब्दरूपञ्च। आद्यं श्रवसैव ग्राह्यम्। अन्त्यमन्येनैवेन्द्रियेण—इत्यपि निरस्तम्। शब्देऽपि कर्मत्वसत्त्वे श्रवसा तद्ग्रहणप्रसंगात्। यदि च विभिन्नेन्द्रियग्राह्यत्वनिर्वाहाय वस्तुद्वयस्यावश्यकता, तर्हि शब्दः कर्मेति

स्वीकारे किं लाघवमस्ति। अनुपलभ्यमानकर्मान्वकल्पनया गौरवात्। किञ्च संयोगविभागयोरकारणत्वादपि शब्दो न कर्म। एतेन गुणत्वकल्पनेऽपि गौरवमिति निरस्तम्। संयोगविभागद्वयाकारणत्वप्रयोज्यत्वाद् गुणत्वस्य, तत्सत्त्वे तस्यापि सिद्धः। अतः परिशेषात् गुणत्वसिद्धिः॥ २५॥

ननु आशुतरविनाशित्वात् शब्दः कर्म। न च द्वित्वादिभिः ज्ञानादिभिश्च व्यभिचारः; वैलक्षण्यस्य दर्शनात्। यथा हि कर्मसंताने उत्तरोत्तरकर्मकाले पूर्वपूर्वकर्मनाशः, तथा शब्दसंतानेऽपीति उत्तरसमकालिकनाशप्रतियोगिपूर्वघटितसंतानवत्त्वेन हेतुना शब्दः कर्मेति ज्ञायते इत्यत्राह—

**२६. गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम्॥ (१०६)**

उक्तबाधकबलात् शब्दस्य कर्मान्यत्वे सिद्धे गुणभूतस्यैव सतः शब्दस्य अपवर्गः उत्तरकाले पूर्वविनाशः कर्मनिरूपितसाधर्म्यमात्रम् न तु कर्मत्वसाधक इति। अत्रायं विशेषः—उत्तरोत्पन्नेन शब्देन तदुत्तरक्षणे पूर्वशब्दनाशः; कर्मणस्तूत्तरसंयोगनाश्यत्वादन्यकर्मोत्पत्ति काल एव नाश इति॥ २६॥

ननु सर्वमिदं शब्दे कार्यत्वानित्यत्वाद्यङ्गीकारे घटते। अन्यथा "एकद्रव्यत्वान्न द्रव्यम्" इत्युक्तेरनवकाशात्। किञ्च अपवर्गित्वेन शब्दे कर्मसाधर्म्यस्वीकारोऽप्ययुक्तः। अनित्यत्व एव प्रमाणाभावादित्यत्रं शब्दनित्यत्वं प्रतिक्षेप्तुमारभते—

**२७. सतो लिङ्गाभावात्॥ (१०७)**

अपवर्ग इत्यनुवर्तते। सतः उच्चारणात् प्राक् शब्दश्रवणादूर्ध्वं च सद्भावविशिष्टस्य शब्दस्य साधकं नास्तीति। शब्दे पूर्वापरकालसत्ता

साधकप्रमाणाभावात् न नित्यत्वमित्यर्थः। न चोत्पत्तिविनाशकल्पने गौरवादेव सत्ता स्वीक्रियत इति वाच्यम्; घटादेरपि तर्हि नित्यत्वापत्तेः। सर्वदाऽनुपलभ्यमानत्वात् घटादिरनित्य इति चेत्—तुल्यमत्रापि। गमनविकलस्य शब्दस्याविकलश्रवसा श्रोत्रा अवहितेनाप्यनुपलम्भात्। आवरणबलाच्छब्दो नोपलभ्यत इति भ्रम इति चेत्—समानं घटादावपि। तत्रावरणमस्ति चेत्, उपलभ्येतेति चेत्—तुल्यम्। अतोऽनेकविधावरण – तदतीन्द्रियत्व– तद्ध्वंस-प्रागभावादिकल्पनापेक्षया शब्दस्य प्रागूर्ध्वं चासत्त्वमेव ज्यायः ॥ २७ ॥

ननु नित्यान्तरसाधर्म्यात् शब्दस्य नित्यत्वं साधयाम इत्याशङ्कायामाह—

२८. **नित्यवैधर्म्यात्** ॥ (१०८)

शब्दस्य सामान्यादिरूपत्वं न भवतीति प्रागेव स्थितम्। एवञ्च स नित्यत्वे गुणो द्रव्यं वा स्यात्। नाद्यः। स किमनित्यवृत्तिः, नित्यवृत्तिर्वा? न प्रथमः, नित्यस्य गुणस्यानित्यवृत्तित्वायोगात्। न द्वितीयः, नित्यवृत्तिनित्यगुणत्वेऽतीन्द्रियत्वापत्तेः। नान्त्यः; बहिर्द्रव्यप्रत्यक्षे रूपस्य कारणतया नीरूपस्य शब्दस्याप्रत्यक्षापत्तेः। किञ्च स किमणुः, महान्, परममहान् वा? प्रथमे प्रत्यक्षत्वं न स्यात्। द्वितीये परिच्छिन्नमहत्त्वादनित्यत्वापत्तिः। तृतीये बाह्यप्रत्यक्षं न स्यात्। यत्र शब्दः, न तत्रेति परिच्छिन्नतयोपलम्भोऽपि न स्यात्। अतः सर्वैरनित्यवैधर्म्यादपवर्ग इति। व्यञ्जकवैधर्म्यं न सूत्रस्वरसार्थः; वक्ष्यते च ॥

---

उप. सू. २८. नित्यं —व्यक्तः पूर्वापरकालस्थायि घटादिकं व्यंग्यम्, तद्वैलक्षण्यात् व्यंग्यस्य घटादेर्व्यञ्जकदीपाद्यनुमापकत्वं नास्ति। शब्दस्य तु व्यञ्जकत्वाभिमतचैत्राद्यनुमापकत्वमस्तीति।

एवं परपक्षेऽनुपपत्तिमुक्त्वा स्वपक्षे साधकमाह—

२९. **अनित्यश्चायं कारणतः ॥** (१०९)

कारणतः—कारणवत्त्वादित्यर्थः । इदमेवोक्तं न्यायसूत्रे, "आदिमत्त्वात्" इति । कारणानि इतश्चतुर्थसूत्रे निर्देक्ष्यति । यत् कारणवत्, तत् विनाशि, यथा घटादीतीह व्याप्तिः ॥२९॥

ननु शब्दे कारणवत्त्वमसिद्धम् । उच्चारणादीनां शब्दव्यञ्जकत्वाङ्गीकारेण कारणत्वाभावादिति शङ्कां निरस्यति—

३०. **न चासिद्धं विकारात् ॥** (११०)

कारणवत्त्वं नासिद्धम्, शब्दस्य तीव्रत्वमन्दत्वादिविकारवत्त्वात् सुखादेरिव कारणवत्त्वानुमानात् ॥ ३० ॥

ननु विकारवत्त्वमप्यसिद्धम् । न च तीव्रः शब्दः, मन्दः शब्दः, इत्यादिप्रतीत्यनुपपत्तिः । तीव्रत्वादेरुपाधिनिष्ठस्य तत्रारोपात् । यथा मणिकृपाणादिगतह्रस्वत्वदीर्घत्वादेः प्रतिफलिते मुखादावारोपः इत्यत्राह—

३१. **अभिव्यक्तौ दोषात् ॥** (१११)

तीव्रत्वादेरौपाधिकत्वकल्पनया शब्दस्योच्चारणाद्यभिव्यङ्ग्यत्वस्वीकारे दोषात् । तथाहि—तीव्रत्वादिकं तावत् नौपाधिकम्—अबादौ शैत्यादेरिव स्वाभाविकत्वेनैवोपलब्धेः । स्फटिकलौहित्यादौ जपाकुसुमाद्युपाधेरिवात्र कस्यचिदुपाधेरनुपलम्भात् । अन्यथा शैत्यादेरप्यबादौ औपाधिकत्वं स्यादिति दोषः । उपाधिश्च कः ? न तावत् शब्दोत्पत्तौ सहकारिकारणत्वेनास्मदभिमतो वायुः; तस्यातीन्द्रियत्वेन तद्गततीव्रत्वादेरयोग्यतया आरोपायोगात् । नाप्युच्चारणादिरुपाधिः,

तस्य व्यवधानादिबलाददर्शनेऽपि, शब्दे तीव्रत्वाद्युपलम्भात् । न च यदा कदाचित् पूर्वानुभूतस्य तीव्रत्वादेरिदानीं स्मरणादारोपः; अव्यवस्थया मन्दत्वादेरप्यत्रैवारोपापत्तेः ।

न च शब्दो व्यङ्ग्यः । व्यञ्जककालातिक्रमेण गृह्यमाणत्वात् । व्यङ्ग्यं हि घटादिकं व्यञ्जकस्य प्रदीपस्य सत्ताकाले व्यज्यते; न तु तन्निर्वाणेऽपि । शब्दस्तु उच्चारणादिव्यापारविनाशात् परं श्रूयते । घनयुगसंघट्टजन्मा हि निर्घोषो विद्युतः संघट्टजनिताया दर्शनात्परं विलम्बेन श्रूयते । एवं सर्वत्र ।

एवमुच्चारणादिकमपि न व्यञ्जकम् । ककारव्यञ्जकस्य गकारादिव्यञ्जकत्वस्याप्यापत्तेः । यत् यद्ग्राहकेन्द्रियग्राह्यं सत् यत्समानदेशम्, तत् तद्व्यञ्जकव्यङ्ग्यमिति नियमस्य दर्शनात् । घटादिकं हि तादृशं पटादिव्यञ्जकप्रदीपव्यङ्ग्यमिति । मिथोविभिन्नदेशवर्तिनोर्घटपटयोरेकेन्द्रियग्राह्ययोरेकप्रदीपव्यङ्ग्यत्वाभावात् समानदेशत्वोक्तिः । अस्तु वा एकप्रदीपव्यङ्ग्यत्वस्वरूपयोग्यताऽपि तत्र । तथापि सत्ताग्राहकेन्द्रियग्राह्यं घटत्वं न सत्ताव्यञ्जकव्यक्तिव्यङ्ग्यम्, तस्याऽऽकृतिविशेषव्यङ्ग्यत्वादिति तत्र व्यभिचारवारणाय समानदेशकत्वोक्तिः । सत्ताघटत्वयोर्न्यूनाधिक देशवृत्तितया न समानदेशत्वम् ॥ किञ्चोच्चारणादि न व्यञ्जकम् । शब्देन अनुमीयमानत्वात् । व्यञ्जकं हि व्यङ्ग्येन नानुमीयते । किन्तु व्यङ्ग्यसहभावेन गृह्यत एव । यथा घटव्यञ्जिका प्रदीपप्रभेति ।

अतोऽभिव्यक्तेरनुपपन्नतया व्यञ्जकगतस्य व्यङ्ग्ये आरोप इत्यस्य दुर्वचतया तीव्रत्वादिरूपविकारस्य सद्भावात् कारणवत्त्वं सिद्धमिति ततोऽनित्यत्वमिति ॥ ३१ ॥

शब्दस्य व्यंग्यत्वासम्भवं द्रढयितुम्, शब्दस्य जन्यत्वे भेर्याद्यवच्छेदेनैवोत्पत्त्या कथं दूरस्थस्य शब्दश्रवणमित्याशङ्कां शमयितुञ्च तत्कारणानि परिगणयति—

* ३२. संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिः ॥ (११२)

भेरीताल्वादिसंयोगात् वंशदलाधरोष्ठादिविभागाद्वा प्रथमं ध्वनिवर्णरूपशब्दनिष्पत्तिः। ततः कदम्बमुकुलन्यायेन वीचीतरङ्गन्यायेन च शब्दात् शब्दनिष्पत्तिः। (अभितः शब्दोत्पत्तौ कदम्बवृक्षेमुकुलोत्पत्तिन्यायः। वायुप्रसरणानुरोधिशब्दसंताने वीचीसंतानन्यायः)। व्यञ्जकत्वपक्षे इदं न घटते। विभागस्य कुत्रापि व्यञ्जकत्वादर्शनात्। प्रदीपसंयोगादिरेव हि घटादिव्यञ्जकः। एवं शब्दस्य शब्दव्यञ्जकत्वं न सम्भवति। पदार्थानां स्वसजातीयव्यंग्यत्वाभावात्। न हि प्रदीपः प्रदीपान्तरेण, घटो घटान्तरेण वा व्यज्यते।

एवं संयोगविभागानन्तर्यं शब्दस्य प्रतीयमानं व्यञ्जकत्वप्रयुक्तमेवास्त्विति शंकापरिहारेण चतुस्सूत्र्या शब्दस्य प्रत्यक्षसिद्धकारणवत्त्वबलात् अनित्यत्वमुपपादितम् ॥ ३२ ॥

ननु वेदो नित्यः। स च वर्णसमुदायरूपः। वर्णानित्यत्वे तन्नित्यत्वं दुर्वचम्। अतः शब्दसामान्यं नित्यमिति स्थाप्यते इति मन्वानं प्रत्याह—

* ३३. लिङ्गाच्चानित्यः ॥ (११३)

अत्र आम्नायपदमर्थलब्धमिति कन्दली। किरणावल्यामाम्नायप्रस्तावेऽपि शब्दसामान्यविषयकत्वाभिमतिर्लक्ष्यते। अतः अनित्यश्चायमिति सूत्रात्° अयमित्यनुवर्तते। चकारः प्रत्यक्षसमुच्चायकः। तथाच

लिङ्गात प्रत्यक्षाच्च अनित्यः शब्दः । प्रत्यक्षं कारणवत्त्वविषयकं प्रागेव दर्शितम् । तथा नेदानीं शब्दः, निवृत्तः कोलाहलः इत्यादिकं नाशविषयकं प्रत्यक्षमपि ग्राह्यम् । लिङ्गं तु—अनित्यः शब्दः प्रागुपलब्धत्वे सति अनुपलभ्यमानत्वात् ; बाह्यप्रत्यक्षविषयत्वात्, संतन्यमानत्वादित्यादि । एवं वेदलिङ्गमप्यत्र. "त्रयो वेदा अजायन्त", "महतो भूतस्य निःश्वसितम्—ऋग्वेदो यजुर्वेद" इत्यादिकं विवक्षितम् ॥३३॥

अथ पूर्वपक्षिणस्त्रीणि सूत्राणि—

**३४. द्वयोस्तु प्रवृत्त्योरभावात् ॥ (११४)**

गुरुणा संप्रदीयमानः शब्दः शिष्येण प्रतिगृह्यते । शब्दो यदि मध्ये विनाशी स्यात्, तदा द्वयोः—गुरुशिष्ययोः द्वयोः—संप्रदाने प्रतिग्रहे च प्रवृत्ती न स्याताम् ॥ ३४ ॥

**३५. प्रथमाशब्दात् ॥ (११५)**

"त्रिः प्रथमामन्वाहेति" प्रथमाशब्दघटितवाक्यादित्यर्थः । अत्र हि सामिधेनीनां मध्ये प्रथमायाः ऋचः त्रिरावर्तनीयता विहिता । प्रथममुच्चारितस्य पुनरुच्चारितस्य च शब्दस्य भिन्नभिन्नत्वे एकस्यैव त्रिरावृत्तिरिति कथम् ? यद्वा त्रिः पठितायाः ऋचः आवृत्तित्रयेऽपि प्रथमात्वं वक्तव्यम् । तच्च ऋचः एकत्वे भवितुमर्हति । उच्चारणभेदेन शब्दभेदे तु द्वितीयादिवारोक्तायाः प्रथमात्वं न घटते इति प्रथमाशब्द एवानुपपन्न इति ॥ ३५ ॥

**३६. संप्रतिपत्तिभावाच्च ॥ (११६)**

समित्येकीकारे । एकीकृत्य प्रतिपत्तिः संप्रतिपत्तिः । ऐक्यविषयिणी प्रतिपत्तिरिति यावत् । सा च प्रत्यभिज्ञा, 'सोऽयं गकार'

इत्यादिः। तस्याः भावात् सत्त्वात् शब्दः स्थिरः। अत एव च नित्य इति ॥ ३६ ॥

उक्तान् हेतून् दूषयति—

**३७. सन्दिग्धाः सति बहुत्वे ॥ (११७)**

व्यक्तीनां बहुत्वे अनेकत्वे सति—ऐक्यरूपसाध्याभावेऽपि वर्तमाना इमे सम्प्रदीयमानत्व - प्रतिगृह्यमाणत्व - प्रथमाशब्दवाच्यत्व - प्रत्यभिज्ञायमानत्वरूपाः हेतवः सन्दिग्धापरपर्यायानैकान्तिकहेत्वाभासाः। गुरुणा नृत्ये शिक्ष्यमाणे तस्य नृत्यस्य गुरुशिष्यकृतस्य, गुरुणा शिष्येण च पुनःपुनः कृतस्य च वस्तुतोऽनेकत्वेऽपि तत्रेमे संप्रतिपन्ना इति ३७

नन्वस्तु शब्दाध्यापनं नृत्याध्यापनतुल्यम्। अथापि व्यक्तिभेदे सति प्रथमात्वं प्रत्यभिज्ञा च कथमुपपद्येते। तत्राह—

**३८. संख्याभावः सामान्यतः ॥ (११८)**

संख्या नाम प्रथमात्वम्; तथा पूर्वोक्तसंप्रतिपत्तिरपि। स एव ह्ययमुपसर्गः। धातुश्च तत्समानार्थः। अतः संप्रतिपत्तिरपि संख्याशब्दार्थः। सामान्यतः साजात्यतः संख्या भवतीति। द्वितीयवारमुच्चारिताया ऋचः व्यक्तिभेदेऽपि आनुपूर्व्या पूर्वोच्चारितसाजात्यात् प्रथमाशब्दः। सोऽयं गकार इति प्रत्यभिज्ञा च, सेयं दीपज्वाला, तदेवेदमौषधमितिवत् साजात्यावलम्बिनी; उत्पत्तिविनाशप्रत्यक्षादेरनन्यथासिद्धत्वादिति ॥ ३८ ॥

तत् सिद्धम्, शब्दोऽनित्य इति। एवमनित्यत्वात् आशुतरविनाशित्वात् कर्मसधर्माप्ययं गुण एवेति तस्याकाशे व्यवस्थितत्वं तत एव तेन तदनुमानं च सुस्थमिति ॥

द्वितीयान्त्ये गन्धमुख्यव्यवस्थां कालदिक्स्थितिम् ।
संशये कारणं शब्दे गुणत्वानित्यते जगौ ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने द्वितीयमाह्निकम् ।

इति द्वितीयोऽध्यायः ॥

---

श्रीः

## अथ तृतीयोऽध्यायः

आन्तरद्रव्यनिरूपणमेतदध्यायार्थः । तत्र गोर्महिषादित इव आत्मनो देहादितो विविच्य प्रत्यक्षेण ग्रहणाभावादनुमानत एव तत्सिद्धिरिति अनुमानविधया चेतनस्य चैतन्याधीना सिद्धिरत्राह्निके व्युत्पाद्यते । तत्रेदमादिमं सूत्रम् —

**१. प्रसिद्धा इन्द्रियार्थाः ॥ (११९)**

इन्द्रियाणामर्थाः इन्द्रियार्थाः । यदाह—'गन्धरूपरसस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः' इति । त इमे प्रसिद्धाः, प्रकृष्टा सिद्धिः प्रत्यक्षम्, तद्विषया इति । अर्था इत्यनुक्त्वा इन्द्रियार्था इति कथनम् सर्वपदार्थग्रहणार्थम्, इन्द्रियाणामतीन्द्रियत्वेऽप्यर्थप्रत्यक्षान्यथानुपपत्त्या तत्करणानि तान्यपि प्रसिद्धप्रायाणीति ज्ञापनार्थञ्च । न तु तेषामपि प्रत्यक्षत्वं सिद्धान्ते; तेषां गोलकादिशरीरावयवविलक्षणत्वात् । इन्द्रियाणि चार्थाश्चेति द्वन्द्वो वा । इदञ्च सूत्रं प्रत्यक्षरूपवक्ष्यमाणहेतुरिव इन्द्रियाण्यर्थाश्चाप्यात्मसाधने हेतव इति दर्शयितुमपि । तथा चेह प्रयोगः—इन्द्रियाणि सकर्तृकाणि करणत्वात्

वास्यादिवत्, अर्थाः भोक्तृसापेक्षाः भोगकर्मत्वात् छिदिक्रियादि-कर्मभूतकाष्ठादिवदिति ॥ १ ॥

उक्तविधानुमानस्य शरीरादिरूपकर्तृसाधनेनैव पर्यवसानं स्यादिति शङ्कायाम्, बलिष्ठेन हेत्वन्तरेणातिरिक्तस्याऽऽत्मनः सिद्धतया तत्परत्वमेवोक्तानुमानस्यापीति गमयितुं हेत्वन्तरमभिमतमाह—

**२. इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥ (१२०)**

इन्द्रियैरर्थानां रूपादीनां प्रसिद्धिः, इन्द्रियेभ्योऽर्थेभ्यश्च योऽन्योऽर्थः तस्यात्मनः साधिकेत्यर्थः। अयं भावः—प्रत्यक्षं किञ्चिदाश्रितं गुणत्वात्, प्रत्यक्षं ससमवायिकारणकं समवेतकार्यत्वात् रूपादिवत्, प्रत्यक्षरूपक्रिया कर्तृजन्या क्रियात्वात् छिदिक्रियावदिति सामान्यतः कस्यचित् सिद्धौ तस्य शरीरादिरूपत्वबाधे परिशेषादात्मसिद्धिरिति। यद्यपि ज्ञानसामान्यं पक्षीकर्तुं शक्यम्, तथापि चार्वाकपर्यन्तसर्वाभिमतत्वात् प्रत्यक्षं विशिष्य गृहीतम् ॥ २ ॥

अथाभिमतं परिशेषमेव दर्शयितुमुक्तानुमाने दोषमाशङ्कते—

**३. सोऽनपदेशः ॥ (१२१)**

प्रथमसूत्रविवक्षितमनुमानं द्वितीयसूत्रदर्शितानुमानसापेक्षम्। योऽसौ द्वितीयसूत्रोक्तहेतुः, सः अनपदेशः हेत्वाभासः। शरीरादेरेव हि ज्ञानाश्रयत्वादि संभवति। न च इदमिति ज्ञानकर्मणः शरीरस्य कथं ज्ञानकर्तृत्वम्, कर्तृकर्मणोर्विरोधात्; एवमिन्द्रियाणां करणानां

---

उप. सू. ३. चैतन्यं शरीरगुणः तत्कार्यत्वात् शरीरगतरूपादिवदिति पूर्वपक्ष्यभिमतो हेतुरनपदेशः।

कर्तृत्वमयुक्तम् ; स्वतन्त्रत्वरूपस्य कर्तृत्वस्य, परतन्त्रव्यापारशालित्वरूपस्य करणत्वस्य च विरोधादिति वाच्यम्—आत्मानं जानातीत्यादौ अतिरिक्तात्मवादिनाऽप्येकस्यैव कर्तृत्वकर्मत्वस्वीकारात् तयोरविरोधात् । तर्हि चैत्रो ग्रामं गच्छतीतिवत् स्वं गच्छतीति प्रयोगापत्तिरिति चेत्—तन्न ; प्रयोगानुसारेण कतिपयक्रियामात्र एव कर्तृकर्मणोर्भेदस्येष्यमाणत्वात् । तथा कर्तुः करणत्वमपि, "आत्मानमात्मना वेत्सी"त्यादौ स्वीकृतमिति लाघवात् कर्तृत्वकरणत्वोभयाश्रयतयैव इन्द्रियमनुमीयतामिति ॥ ३ ॥

उक्ताशङ्कापरिहारकं हेतुमाह सूत्रत्रयेण—

४. **कारणाज्ञानात्** ॥ (१२२)

शरीरेन्द्रियरूपावयविकारणकोटिनिविष्टानां परमाणुपर्यन्तानां सर्वेषामज्ञानात्—ज्ञानशून्यत्वात् तत्कार्यं शरीरादिकं न ज्ञानाश्रय इत्यर्थः । कारणगुणपूर्वको हि कार्यगुणो दृष्टः । अतः परमाण्वादौ ज्ञानाभावे कथं शरीरादौ ज्ञानोत्पत्तिरिति । न च विशेषगुणस्यैव कारणगुणपूर्वकत्वम्, न तु सर्वस्य ; संख्यासंयोगविभागादेरतथात्वादिति वाच्यम्—ज्ञानस्याप्येकमात्रेन्द्रियग्राह्यतया विशेषगुणत्वात् । किण्वादिजनितमदशक्तिः, ताम्बूलराग इत्यादिकमपि पाकादिवशात् कारणगुणपूर्वकमेवेति । किण्वम् = सुरावीजविशेषः ॥ ४ ॥

ननु कारणेष्वपि ज्ञानं स्वीक्रियताम् । किञ्च ज्ञानस्य सामान्यगुणत्वात् कारणगुणपूर्वकत्वनिर्बन्धोऽपि न भवति । पृथिव्यादितत्तद्द्रव्यासाधारणगुणो हि विशेषगुणः । अस्माभिस्तु ज्ञानं पार्थिवपाथसीयादिरूपेषु नानाशरीरेषु नानेन्द्रियेषु च स्वीक्रियत इति कथमयं विशेषगुण इत्याशङ्कायामाह—

५. **कार्येषु ज्ञानात्** ॥ (१२३)

कार्येषु बहुषु ज्ञानप्रसङ्गादित्यर्थः । यदि परमाण्वादिषु ज्ञानं स्यात् । तत्कार्यत्वाविशेषाद्घटादिष्वपि ज्ञानं वर्तेत । न च इष्टापत्तिः, तत्र ज्ञानकार्यस्य कस्यापि कदाऽप्यभावेन तत्सत्त्वायोगात् । न च शरीराकारपरिणामदशायामेव ज्ञानस्वीकारात् ताम्बूलरागवत् व्यवस्थेति वाच्यम्—तथासत्यपि शरीरे तदवयवेषु हस्तादिषु तदवयवेष्वङ्गुल्यादिषु सर्वेषु कार्येषु ज्ञानप्रसङ्गात् चेतनबहुत्वापत्त्या मिथःक्षोभेण प्रवृत्तिनिवृत्तिनियमासिद्धिप्रसङ्गात् । एतेन ज्ञानं सामान्यगुण इति समाधानमपि निरस्तम् । तथापि शरीर इव हस्तादिष्वप्यनुभवस्य तुल्यतया ज्ञानाश्रयत्वावश्यम्भावेन बाहुराज्यप्रसङ्गात् ॥ ५ ॥

नन्ववयवानामवयविनश्च ज्ञानाश्रयत्वेऽपि प्रवृत्तिनिवृत्तिनियमदर्शनात् फलबलादैकरस्यमपि कल्प्यते । एवमेकमेव ज्ञानमवयवावयविसर्वाश्रितमिति कल्पनादपि नियमोपपत्तिः । तथा यदेवान्त्यावयवि तत्रैव ज्ञानमिति चेतनैकत्वपक्ष एवाप्यस्तु । तत्राह—

६. **अज्ञानाच्च** ॥ (१२४)

अनेकाभिप्रायमिदं सूत्रम् । (१) परकीयज्ञानादेरन्येनाज्ञानादित्येकोऽर्थः । तथाचावयवानां मध्ये एकावयवगतस्य ज्ञानस्यान्यावयवेन ज्ञातुमशक्यत्वात् कथं सर्वावयवैकरस्यम् । तथाऽनुभवोऽपि नास्ति, हस्तोऽहं पादगतानुभवानुसारेण तदनुकूलं प्रवर्ते इत्येवम् । (२) एव-

---

उप. सू. ५. ज्ञानस्य परमाणुगतत्वे घटादीनामपि ज्ञानवत्त्वप्रसङ्गात् ।

उप. सू. ६. घटादिषु चैतन्यस्यानुपलब्धेः ।

मवयवावयविसर्वाश्रितमेकं ज्ञानमित्यादिपक्षेऽपि तस्य ज्ञानस्य तज्जन्यस्य संस्कारस्य च तदन्तर्गतिकावयनाशेऽपि नाशावश्यम्भावेन, एकाङ्गवैकल्यात्प्राक् अनुभूतस्य पश्चात् स्मरणं न स्यादित्यन्योऽर्थः । (३) तथा मृतशरीरे ज्ञानाभावादपि शरीरं नात्मेत्यपरोऽर्थः । (४) एवं शैशवात् प्रभृति आमरणमुपचयापचयाभ्यामन्त्यावयव्यपि विभिन्नमिति एकेन दृष्टस्यान्येन प्रतिसंधानरूपं ज्ञानमपि न भवति । एवं शरीरान्तर्गतस्य हृदयमस्तिष्कादिरूपस्य कस्यचिदवयविन एवात्मत्वमिति पक्षेऽप्युपचयापचयनिबन्धनो दोषोऽवसेयः । (५) तथा शरीरस्यात्मत्वे पूर्वजन्मार्जितसंस्कारोद्बोधायत्तस्मरणरूपज्ञानाभावात् नरमृगविहगादिषु तत्तज्जात्यनुगुणाहारविहारादिप्रवृत्तिः प्रथमा न स्यात् । तथा श्रीपार्थसारथि मिश्रः स्वानुभवमाविश्चकार, "जातिस्मराश्च केचिदद्यत्वेऽपि देहान्तरे रहोवृत्तं वृत्तान्तं संबोधयन्त उपलभ्यन्त इत्युपलब्धिसिद्धः शरीरात्मनोर्भेदः" इति । तथा अस्माकमप्यद्यत्वेऽप्यनेकत्र प्रसिद्धोऽयमनुभवः, यत् प्राक्तनजन्मवृत्तं स्मरन्तो व्याहरन्तो यथोक्तं दर्शयन्तश्च जातिस्मराः इतस्ततो जन्म लभन्त इति । अतः पूर्ववृत्तज्ञानाभावाच्छरीरं न स्मर्तुमर्हतीति च न स आत्मेति ।

एतेनेन्द्रियचैतन्यमपि निरस्तम् । एकेन दृष्टस्यान्येन स्मरणायोगात् । अनुभवितुरिन्द्रियस्यापघातेऽपि स्मरणदर्शनात् । अतः स्मर्तरि अनुभवरूपज्ञानाभावात् स्मरणं नोपपद्यत इति । ननु मनसो ज्ञानाश्रयत्वपक्षे नैते दोषा इति चेत्—तत्राप्युत्तरम्(६)अज्ञानादिति । अतीन्द्रियत्वादित्यर्थः । मनसोऽतीन्द्रियत्वात् तद्गतं ज्ञानादिकमप्य-

तीन्द्रियं स्यादिति । (७) एवं मनस एकशरीरस्थत्वे कायव्यूहस्थले शरीरान्तरावच्छेदेन तस्य ज्ञानाश्रयत्वाभावान्न मन आत्मा । तदर्थं ज्ञानाश्रयत्ववत् विभुत्वस्यापि मनसि स्वीकारे युगपद्‌ज्ञानानुत्पत्तिनिर्वाहाय करणान्तरं कल्पनीयमिति कर्ता करणमिति पदार्थद्वयसिद्धिरविशिष्टेति सिद्धं नः समीहितम् । केवलम् आत्मन एव मन इति संज्ञाऽप्यनुभवविरुद्धा कल्प्यत इत्ययमेव विशेषः ।

(८) एवं ज्ञानं न शरीरगुणः अन्येनाज्ञानात् । यदि शरीरगुणः, तर्हि शरीरस्य प्रत्यक्षितत्वात् रूपादिवत् ज्ञानमप्यन्येन ज्ञायेत। एवं ज्ञानं न शरीरगुणः अव्याप्यवृत्तित्वात्, अयावद्‌द्रव्यभावित्वात् बहिरिन्द्रियाग्राह्यत्वादित्यादिकं भाष्योक्तमपि यथासंभवमत्र चकारेण गृह्येत । तत् सिद्धं शरीरादेर्ज्ञानाश्रयत्वायोगात् परिशेषादात्मनः सिद्धिरिति ॥ ६ ॥

नन्वास्तां ज्ञानेनात्मसाधनम् । नथाच प्रसिद्धिः किञ्चिदाश्रिता गुणत्वादित्यनुमानमपदेशः स्यान्नाम ; धर्मधर्मिणोरभेदात् । इन्द्रियं सकर्तृकम्, अर्थाः सभोक्तृकाः इतीन्द्रियैरर्थैश्चात्मानुमानं तु अनपदेशः। न हीन्द्रियादेः कर्तुश्च तादृशः संबन्धोऽस्ति । अतोऽन्यदेवायं हेतुरिति हेतोः ईदृग्घेतुवचनमनपदेश इति सौगतच्छायानुयायीशङ्कते—

**७. अन्यदेव हेतुरित्यनपदेशः ॥ (१२५)**

त्वदुक्तहेतोः साध्यापेक्षयाऽन्यत्वात् सः अनपदेशः अहेतुरित्यर्थः ॥ ७ ॥

---

उप. सू. ७. उभयमपि बौद्धखण्डकं सिद्धान्तसूत्रम् । लोके साध्यादन्यस्यैव हेतुत्वात् तादात्म्यस्थलेऽपि हेतुरहेतुः ।

ननु साध्यापेक्षया हेतोरन्यत्वं गुण: ; न तु दोषः । अनन्यत्वे हि हेतोः साध्याविशिष्टत्वात् साध्यसमरूपहेत्वाभासता स्यात् । अतोऽन्यत्वादहेतुरिति न युक्तमित्यत्रोपपादयति—

**८. अर्थान्तरं ह्यर्थान्तरस्यानपदेशः ॥ (१२६)**

यथाऽनन्यत्वमात्रेण हेतुत्वमयुक्तम्, तथाऽन्यत्वमात्रेणापि । अन्यथा अर्थान्तरत्वाविशेषात् गर्दभरूपमर्थान्तरमप्यग्निरूपार्थस्यापदेशो भवतु । अतः तादात्म्यमपदेशनियामकम् । यथा अयं वृक्षः शिंशपायाः, शिंशपात्वादित्यादि । वृक्षत्वसाधनेऽपि तादात्म्यमस्त्येव । धर्मधर्मिणोस्तादात्म्यात् । वृक्षत्वशिंशपात्वयोर्वृक्षाभेदे च मिथोऽप्यभेदसिद्धेः । न चेन्द्रियार्थानां कर्तुश्च कथमपि तादात्म्यमिष्टम् । अतोऽयं प्रथमसूत्राभिमतो हेतुरनपदेश एवेति ॥ ८ ॥

एवं सूत्रद्वयेनाशङ्कां प्रदर्श्य हेतुतानियामकं न तादात्म्यम्, किंत्वन्यदेवेति परिहरिष्यन् अतादात्म्येऽपि हेतवो भवन्तीति दर्शयति—

**९. संयोगि समवाय्येकार्थसमवायि विरोधि च ॥ (१२७)**

न्यायभाष्ये सूत्रमिदमनूद्य भाषितम् (३-२-४४), 'यथा धूमोऽग्नेः, गोर्विषाणम् ; पाणिः पादस्य, रूपं स्पर्शस्य ; अभूतं भूतस्य' इति । अयं धूमोऽग्निमान् अविच्छिन्नमूलत्वादिविशिष्टत्वात् इत्यत्राग्निधूमयोः संयोगः । झाटान्तरिते गवि विषाणं वीक्ष्य इदं गोसंबन्धि ईदृशत्वादित्यत्र गोविषाणयोः समवायः । एकार्थसमवायि द्विविधम्—एकार्थप्रतियोगिकसमवायानुयोगि एकार्थसमवेतश्चेति । प्रथमं पाणि-

---

उप. सू. ८. धूमादिकमपि अग्न्यादेरर्थान्तरत्वेन न तद्धेतुः ।

पादम्; एकशरीरसमवायानुयोगित्वात् । रूपस्पर्शौ पुनरेकस्मिन्नर्थे समवेताविति रूपं द्वितीयमेकार्थसमवायि । अभूतं भूतस्येति विरोध्युदाहरणञ्च वक्ष्यमाणरीत्या तत्सूत्रस्य तादृशयोजनां प्राचीनामनुसृत्य । यथा अभूतमनुत्पन्नं वर्षं भूतस्य वाय्वभ्रसंयोगस्य लिङ्गमिति । सूत्रे चकारः पूर्वपक्ष्यभिमतस्य तादात्म्यस्थलस्य संयोगादिरूपसूत्रोक्तसंबन्धातिरिक्तसंबन्धस्थलस्य च समुच्चयार्थः । तथाच संयोग्यादिरप्यपदेशो भवतीत्यानुभविकमिति तादात्म्यस्थल एव हेतुत्वाभिमानो न युक्त इति भावः । एवं न्यायभाष्ये अग्निधूमादिकार्यकारणभावापन्नस्थलोदाहरणाद् बौद्धसंमतकार्यकारणभावस्थलमप्यनभ्युपगम्य तादात्म्यस्थलमात्रे हेतुत्वशङ्कायाः केनचित् कृतायाः परिहारकमिदं प्रकरणमिति ज्ञायते । पूर्वसूत्रस्वारस्यमपि तदैव ॥ ९ ॥

संयोग्यादीनामुक्तानां चतुर्णामुदाहरणप्रदर्शनायोपरि चतुःसूत्री—

१०. **कार्यं कार्यान्तरस्य ॥** (१२८)

इन्धनकार्यो धूमः इन्धनकार्यस्याग्नेर्हेतुरिति । यद्यपि सर्वोदाहरणपरत्वमप्यत्र सूत्रेऽन्यत्र च संभाव्यते । यथा—कुलालव्यापारनिष्पाद्यमानं कपालं तत्र भविष्यतो घटस्य तत्समवेतस्य लिङ्गम् ; यथा रूपं तदेकार्थसमवेतस्य स्पर्शस्य ; यथा च नकुलकर्तृको जयो जयविरोधिनः पराजयस्य सर्पगतस्येत्येवम्—अथापि यथाक्रमं चतुर्णामुदाहरणाय चत्वारि सूत्राणीत्यत्रौचित्यादेकमुदाहृतम् ॥ १० ॥

अवर्तमानं वर्तमानस्यानुमापकमिति समवाय्युदाहरति—

---

उप. सू. १०. एकार्थसमवायिनं सूत्रकृदुदाहरति—

* ११. अभूतं भूतस्य ॥ (१२९)

अभूतम् आशुतरविनाशित्वादविद्यमानं शब्दविशेषादिकं भूतस्य विद्यमानस्य तत्समवायिनो वीणावेणवाद्यवच्छिन्नाकाशादेर्लिङ्गम् । भूत-शब्दः सत् वर्तमानमित्यर्थे बहुलं प्रयुक्तचरः । यथाऽत्रैव प्राक्, "भूताच्च प्राची" इति; यथा च भूतार्थवादः, यथाभूतार्थः इत्यादौ । एतदारभ्य सूत्राणि विरोध्युदाहरणपरतया प्राक्तनैर्व्याख्यातानीति अनुमानसूत्रन्यायवार्तिकतात्पर्यटीकादर्शनादध्यवसीयते । तत्र, "भूतं वर्षमभूतस्य वाय्वभ्रसंयोगस्य, अभूतं वर्षं भूतस्य वाय्वभ्र-संयोगस्य, भूतो नकुलजयः भूतस्य सर्पपराजयस्य च विरोधितया लिङ्गम्" इत्यनूद्य तन्निरसनात् । प्रशस्तपादभाष्यव्याख्यासु च व्योमवत्यां कन्दल्याञ्च अभूतमनुत्पन्नं वर्षं भूतस्य वाय्वभ्रसंयोगस्य लिङ्गमित्यर्थोऽस्य सूत्रस्य अनूद्य दूषितः—न ह्यत्र वर्षं लिङ्गम्, किन्तु वर्षानुत्पादः । स च न वाय्वभ्रसंयोगविरोधीति । एवं दूषयित्वा ध्वनिविशेषेण चैत्राद्यनुमानमुदाहृतम् । किरणावल्यां तु अनुत्पन्नवर्षादिकमर्थं सर्वथैवास्पृष्ट्वा शब्दबुद्ध्यादिना वीणात्मादेरनुमानमेव सूत्रार्थत्वेन दर्शितम् । एवञ्च विरोधिपरतया काचिद्योजना प्राक्स्थिता पश्चादुपेक्षितेति ज्ञायते । ततश्चोभयव्याख्यानुकूलत्वाय सूत्रे विरोधिपदं नास्तीति च गम्यत इति । अत्र, पूर्वोत्तरसूत्रयोश्च विस्पष्टरीतिं विहाय कार्यकार्यान्तर-भूताभूतपदनिर्देशो हेतुसाध्ययोः तादात्म्याभावस्पष्टीकरणाय ॥ ११

वर्तमानं विनष्टस्यानुमापकमिति एकार्थसमवायिन उदाहरणम-

---

उप. सू. ११-१२-१३. सूत्रत्रयेण विरोधिलिङ्गानि उदाह्रियन्ते । प्रथम-सूत्रं विरोध्यभूत भूतस्येति ।

१२. **भूतमभूतस्य ॥ (१३०)**

भूतं शिलोच्चयशिखरादौ सूर्यश्येनादेःसंयोगादिकम् अभूतस्य सूर्यश्येनादिवर्तिनः क्रियादेर्लिङ्गमिति। अत्र हि क्रियासंयोगयोरेकार्थसमवायिता ॥ १२ ॥

अथ विरोधिन उदाहरणम्—

१३. **भूतो भूतस्य ॥ (१३१)**

भूतो वर्तमानो विजयदृप्तो नकुलः भूतस्य वर्तमानस्य पराजितस्य पन्नगस्य हेतुरिति। एषां सूत्राणां संभावितार्थान्तरविवक्षणमपि न निराक्रियते। अनेकार्थतायाः सूत्रभूषणत्वात् ॥ १३ ॥

एवञ्चेत् अर्थान्तराणामपि हेतुत्वम्, तर्हि अयमस्मिमान् गर्दभादिति किमिति नापदिश्यते इति शङ्कां परिहरन् नानोदाहरणदर्शननिष्कर्षणीयं विस्पष्टयति—

१४. **प्रसिद्धिपूर्वकत्वादपदेशस्य ॥ (१३२)**

प्रसिद्धिः साध्यान्विते धर्मिणि सपक्षे दृष्टान्ते हेतोर्दर्शनम्। अत एवाह—"अनुमेयेन संबद्धं प्रसिद्धञ्च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्" इति। अनुमेयेन=पक्षेण धर्मिणा संबद्धम्, तदन्विते= अनुमेयधर्मान्विते सपक्षे प्रसिद्धञ्च यत् अनुमेयधर्माभावे विपक्षे सर्वत्र नास्ति; तत् लिङ्गमनुमापकमिति तदर्थः। निष्कृष्टञ्च किरणावल्याम्, "दृढव्याप्तिकतया ज्ञानं प्रसिद्धिः" इति। तथाचापदेशस्य हेतुवचनस्योक्तविधप्रसिद्धिपूर्वकत्वात् तादात्म्यशालिवत् तद्भिन्नमपि प्रसिद्धिशालि

---

उप. सू. १४. प्रसिद्धिः स्मर्यमाणा व्याप्तिः। तत्पूर्वकत्वात् हेतुवचनस्य।

चेत्, हेतुर्भवत्येवेति । अयं भावः—यदि तादात्म्यं गमकमुच्यते । तदा किमिति इयं शिंशपा वृक्षत्वादित्यपि नानुमीयते, शिंशपायां वृक्षतादात्म्यस्य वृक्षे शिंशपातादात्म्यस्य चाविशिष्टत्वात । अतोऽन्यदेव किञ्चिद् गमकमेष्टव्यम् । एवञ्च यत् प्रसिद्धं साध्यवति धर्मिणि प्रकृष्टसिद्धिमत्—उपाध्यप्रयुक्तस्वाभाविकसाध्यसाहचर्यशालितया निश्चितमिति यावत्—तत् लिंगमिति ।

नन्वेवमप्रसिद्धसाध्यकमनुमानं कथमिति चेत्—किमिदमनुमानम्? किमितरभेदसाधकं लक्षणरूपं केवलव्यतिरेकि, किं वा अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वादिसाधकं वाय्वादिसाधनाय प्रागुक्तमिति । नाद्यः, तत्र पृथिवी इतरभिन्ना गन्धवत्त्वादित्यादौ पक्षैकदेशे घटादौ साध्यप्रसिद्धिस्वीकारात् । नन्वाकाशादेरेकव्यक्तेर्थत् लक्षणं शब्दवत्त्वादि, तत्र कथमेकदेशे साध्यप्रसिद्धिरिति चेन्न—तत्र धर्मिग्राहकप्रमाणेनाकाशसिद्धिकाल एव तस्येतरभिन्नतया सिद्धत्वेन लक्षणेनेतरभेदस्यासाधनात् । केवलमितरभेदसाधनस्वरूपयोग्यत्वमेव तत्र लक्षणस्य व्यावर्तकत्वं नामेति । नान्त्यः, तत्राप्यष्टद्रव्यातिरिक्तद्रव्याश्रितमित्यननुमानस्य प्रागेवोक्तत्वात् अष्टद्रव्यातिरिक्ताश्रितमित्येव साधनात् साध्याप्रसिद्ध्यभावात्; गुणादौ तत्प्रसिद्धेरुक्तत्वादित्यलम् ।

इदञ्च लिङ्गं द्विविधम्, विशेषतोदृष्टं सामान्यतोदृष्टञ्च । यज्जातीययोर्हेतुसाध्ययोः सपक्षे साहचर्यग्रहः, तज्जातीययोरेव मध्ये एकेनान्यसाधने विशेषतोदृष्टम् । यज्जातीययोः प्राक् साहचर्यग्रहः, तज्जातीयभिन्नजातीयदर्शनेन तज्जातीयभिन्नजातीयस्यैव साधनं यत्र भवति केवलं

पक्षसपक्षगतधर्मयोरन्यादृशसामान्याकारपरिकल्पनया अनुमाने, तत्र सामान्यतोदृष्टम् । यथा शीतादिस्पर्शविजातीयानुष्णाशीतस्पर्शदर्शनेन जलादिविजातीयवाय्वनुमाने ॥

एवमिन्द्रियाणि सकर्तृकाणीत्यादेरनुमानस्यापदेशतां समर्थ्य पूर्वपक्ष्यभिमतमनपदेशत्वं यत्रयत्र भवेत, तत् सर्वमाह—

**१५. अप्रसिद्धोऽनपदेशोऽसन् संदिग्धश्चानपदेशः ॥ (१३३)**

अपदिश्यते व्यपदिश्यते साधकतयेत्यपदेशो हेतुः । (अपसृत्य देशनं निर्देशोऽपदेशः । निर्दिष्टव्यसाध्यनिर्देशमात्रेणानुपरम्य ततोऽपसृत्य तदर्थतया अन्यस्यापि निर्देश इति) प्रसिद्धिमान् अपदेश इत्युक्त्या अप्रसिद्धोऽनपदेश इति तावत् सिद्धम् । न केवलमेतावत्। असन् संदिग्धश्चानपदेशौ भवत इत्यर्थः । ईदृशभावाविष्कारार्थमेव वाक्यद्वयकरणम् । असन् पक्षे हेतुरविद्यमानः । संदिग्धः—हेतुरयं पक्षे किं साध्येन सह वर्तते, उत साध्याभावेनेति संदिग्धः । ननु सर्वत्रानुमाने पक्षे साध्यसंदेहसद्भावात् हेतोश्च निश्चितत्वात् हेतुः पक्षे साध्यसहचरितो न वेति संदेहोऽविशिष्ट इति कथमयं हेत्वाभास इति चेन्न—संदिग्ध इत्यस्य संदेहविषयभूतसाध्यतदभावसाहचर्यशालीत्यत्र तात्पर्यात् । ननु अप्रसिद्ध इत्यस्य प्रसिद्धिरहित इत्यर्थकतया व्याप्तिरहित इति सिद्ध्यति । ह्रदोऽग्निमान् धूमादित्यादौ च व्याप्तिसत्त्वेऽपि हेत्वाभासता वक्तव्येति असन्निति पृथङ्निर्देशो युज्यते । संदिग्ध इति तु कथम्; अयं धूमवानग्निमत्त्वादित्यत्र संदिग्धेऽप्रसिद्धत्वस्यैवाक्षतत्वादिति चेत्—सत्यम् । अथापि साध्यवति हेतो-

---

उप·सू·१५. विरुद्धव्याप्यत्वासिद्धौ, स्वरूपासिद्धः, अनैकान्तिकश्च हेत्वाभासाः।

दर्शनं प्रसिद्धिरित्यस्मदुक्तत्वात् अप्रसिद्ध इत्यत्र साध्यवत्यदृष्ट इत्येवार्थः । स च विरुद्धो भवति ; साध्यवदवृत्तित्वात् । संदिग्धस्तु साध्याभाववतीव साध्यवत्यपि दृष्ट इति नायमप्रसिद्ध इति सूत्रकृदाशयः । एवञ्च पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपे हेतुनिष्ठे रूपत्रये एकैकवैकल्यादेकैकोऽनपदेश इत्युक्तं भवति । यथा सपक्षावृत्तित्वादप्रसिद्धः, पक्षावृत्तित्वादसन्, विपक्षवृत्तित्वात् संदिग्ध इति ।

ननु रूपपञ्चकं हेत्वङ्गम् । तत्राबाधितत्वमसत्प्रतिपक्षितत्वञ्चेति रूपद्वयं शिष्टमस्ति । अत एव जलीयद्रवत्वं नैमित्तिकं द्रवत्वत्वादित्यत्र पक्षसत्त्वादिरूपत्रयसत्त्वेऽपि प्रत्यक्षबाधितत्वादेवासद्धेतुत्वम् । एवं नित्यः शब्दः अनित्यधर्मानुपलब्धेरित्यत्र नित्यधर्मानुपलब्धेरनित्यः शब्द इति प्रतिपक्षहेतुवर्णनस्थलेऽपि सत्प्रतिपक्षिततया हेत्वाभासत्वमिति चेत्---अत्र चकारात् अनपदेश इति पुनरावर्तनाच्च बाधितसत्प्रतिपक्षितयोरपि ग्रहणमिति किरणावली ।

इदमत्र विचार्यम्---न्यायदर्शन इवात्रापि हेत्वाभासपञ्चविधत्वकल्पनमनावश्यकम् । प्रशस्तपादभाष्येऽपि तथा नोक्तम् । बाधस्थले किं हेतोः साध्यव्याप्यत्वं पक्षवृत्तित्वं वाऽनङ्गीकृत्य बाधोऽङ्गीक्रियते, उत तत्तदप्यङ्गीकृत्य । आद्ये उक्तत्रिविधान्तर्भाव एव बाधितस्य । अन्त्ये तु स कथं हेतुदोषः ? हेतुज्ञानविघटकदोषो हि हेतुदोषः । न हि बाधेन परामर्शविघटनं क्रियते । अनुमितिविघटनं क्रियत इति चेत् ---तदास्ताम् । परामर्शवत् बाधाभावस्यापि अनुमितिसामग्रीनिविष्टत्वात्, हेतोर्निर्दोषत्वेऽपि कारणान्तराभावात् कार्यं न जाय-

इत्येव स्वीकार्यम्। अन्यथा सिद्धिदशायामनुमित्यभाववादिभिः सिद्धिरपि हेतुदोषत्वेन भाव्या स्यात्। कस्यचित् परामर्शानन्तरं निद्रादिदोषादनुमित्यनुत्पत्तौ हेतुर्दुष्ट इति वक्तव्यं भवेत्। अतः पक्षे साध्याभावो व्याप्तिपक्षधर्मताविशिष्टहेतोर्दुष्टतां नापादयतीति न बाधितोऽनपदेश इति सूत्रकृदाशयः स्यात्। एवं सत्प्रतिपक्षस्थलेऽप्यनुमितिप्रतिबन्धाद्बाधवत् न हेतुदोषत्वम्। अत एव मनो मूर्तं क्रियावत्त्वादित्यत्र अमूर्तं मनः अस्पर्शत्वादिति प्रतिप्रयोगे, अणुत्वेनावधृते मनसि अमूर्तत्वबाधाद्विरुद्धत्वं भाष्ये उक्तम्। विरोधश्चायं प्रतिज्ञाविरोधः पक्षसाध्ययोरनन्वयादिति कन्दल्यां व्याख्यातम्। अतो बाधसत्प्रतिपक्षौ विहाय त्रैविध्यमेव सुवचम्।

भाष्ये तु, "विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत्" इति पूर्वमुक्त्वा पश्चादपदेशाभासविभागे विरुद्धासिद्धसंदिग्धानध्यवसितभेदेन चातुर्विध्यमभाषि। अनध्यवसितो नाम असाधारणः। कार्यं प्रागपि सत कार्यत्वात्, शब्दो नित्यः शब्दत्वादित्येवम्। असाधारणधर्मो न संशायकः, किन्त्वनध्यवसायहेतुरिति तन्मतं प्रागेवावाचि। अयञ्च सूत्रे अप्रसिद्धेऽन्तर्भावितः—अप्रसिद्धः सपक्षावृत्तिः। स च द्विविधः विपक्षमात्रवृत्तिः पक्षमात्रवृत्तिश्चेति। आद्यो विपरीतव्याप्यो विरुद्धः; अन्त्योऽसाधारणः। एवमसन्नपि त्रिविधः। पक्षतावच्छेदकविशिष्टपक्षे हेतुतावच्छेदकविशिष्टहेतुरसन् असिद्ध उच्यते। स चाश्रयासिद्धस्वरूपासिद्धाप्रसिद्धसाधनभेदात् त्रेधेति। संदिग्धोऽपि साध्यतदभावसहचरितहेतुः। तत्र पक्षभिन्ने साध्यतदभावसाहचर्ये साधारणः, पक्षान्तर्भावेन तथात्वे चानुपसंहारी। अन्येषां तु हेत्वाभासानामत्रैव यथायथमन्तर्भाव इति।

अत्राप्यसाधारणं द्विविधम्, वस्तुतः पक्षवृत्तिसाध्यकं तदवृत्तिसाध्यकञ्चेति । यथा शब्दोऽनित्यः शब्दत्वात्, नित्यः शब्दत्वादिति । आद्यःसद्धेतुरेव । द्वितीये तु बाधात हेतुर्विपरीतव्याप्यस्सन् विरुद्ध एव । अतएव विरुद्धासिद्धसंदिग्धमित्यनेनाप्रसिद्धं सर्वं विरुद्धमिति दर्श्यते । तत् सिद्धं त्रिविधो हेत्वाभास इति ।

वाय्वादिप्रकरणे प्रागेव कर्तव्यं हेतुहेत्वाभासविभागमत्रैव कुर्वन् महर्षिरनुमानप्रामाण्यसिद्धेः परमं फलमात्मानुमानमिति दर्शयति ॥१५॥

हेत्वाभाससूत्रस्यासत्संदिग्धयोरनपदेशत्वकथन एव नैमर्थ्यम् । अप्रसिद्धस्यानपदेशत्वमनुक्तिसिद्धमिति प्रागेवोक्तम् । तदनुरोधेनासत्संदिग्धयोरुदाहरणं सूत्रद्वयेनाह—

१६. **यस्माद्विषाणी तस्मादश्वः ॥** (१३४)

अश्वमेव प्राणिनं पक्षीकृत्य अयमश्व इति साध्यते । न चाश्वे विषाणित्वमस्ति । अतः स्वरूपासिद्धो हेतुः । सर्वाश्वपक्षीकारे त्वेवम् । अयमश्व इति किञ्चित्पक्षीकारे पुनरप्रसिद्धोदाहरणमपि भवेत् । हेतोरश्वत्वाक्रान्तसपक्षव्यक्तिवृत्तित्वविरहात विपरीतसाधकत्वसंभवात् ॥१६॥

संदिग्धमुदाहरति—

१७. **यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम्॥** (१३५)

गां पक्षीकृत्य गौर्विषाणित्वादित्यनुमाने विषाणित्वस्य गोत्वतदभावसाहचर्यात् संदिग्धत्वम् । अयमेवानैकान्तिकः । एकस्मिन्नन्ते भव ऐकान्तिकः । अन्तो नाम अवसानभूमिः निर्णयकोटिः ; न्यायभाष्ये

---

उप. सू १६. व्याप्यत्वासिद्ध-स्वरूपासिद्ध- विरुद्धानामुदाहरणमिदम् । अत्र रासभः पक्षः ।

नित्यत्वादेरन्तत्वोक्तेः। ऐकान्तिको नेति अनैकान्तिकः। कोटिद्वय-साधारण इति यावत्। अन्तशब्दस्य देशवाचित्वे तु अनेकदेशस्थः साध्यतदभावदेशस्थ इत्यर्थः स्यात्। संदिग्धस्येत्यनुक्त्वा अनैकान्तिकस्येत्युक्तिः, न संदेहसत्त्व एव हेतुदोषः; किन्तु सर्वदैव; उभयकोटि-साहचर्यस्यैव नियामकत्वादिति सूचयितुम् ॥ १७ ॥

बौद्धसांख्यपक्षप्रतिक्षेपार्थमुपरितनं सूत्रम्-

१८. आत्मेन्द्रियार्थसन्निकर्षात् यन्निष्पद्यते तदन्यत् ॥ (१३८)

पूर्वम्, 'अन्यदेव हेतुरित्यनपदेशः' इत्यत्र ज्ञानेनात्मानुमानं धर्मधर्मिणोरनन्यत्वात् युज्यते; न त्विन्द्रियेणात्मानुमानमित्यभिसंहितं हि पूर्वपक्षिणा। तत्रात्मज्ञानयोरनन्यत्वं तदिदं खण्ड्यते। निष्पद्यमानं हि ज्ञानं नित्यादात्मनोऽन्यदेव। धर्मधर्मिणोरत्यन्तभेदात्। अत एव ज्ञानात्मवादोऽपि निरस्तः; अहं जानामीति ज्ञानाश्रयत्वस्यैव प्रतीतेः; कार्याकार्ययोस्तादात्म्यायोगाच्चेति। अतः सर्वस्यापदेशत्वं पूर्वोक्तयुक्त्या, न तु तादात्म्यादिति भावः। सूत्रमिदं पूर्वोक्तस्यात्मसाधकज्ञानहेतोरुक्त-विधानपदेशभिन्नत्वरूप सद्धेतुत्वमात्रपरञ्चेत्, नातीव प्रयोजनम्। अर्थ-सिद्धत्वात्। अत एवं व्याख्यातम्।

यत्तु सांख्यमतम्—अन्तःकरणस्येन्द्रियद्वारा बहिर्निःसृत्य घटादिकं व्याप्नुवतः तदाकारपरिणामो भवति। स परिणामो वा, तादृशस्यान्तः-करणस्य बाह्येन घटादिना सह संयोग एव वा ज्ञानमित्युच्यते। तथा-चान्तःकरणमेव तदाश्रय इति—तदप्यनेन निरस्तम्। आत्मा तावत् प्रति सर्वविलक्षणो वा शरीराद्यभिन्न एव वा भवतु। आत्मा इन्द्रियेण,

उप. सू. १७ ज्ञानमात्मसाधके तु हेत्वाभासादन्यदित्यर्थः।

इन्द्रियमर्थेन च संनिकृष्यते। एवं संनिकर्षबलात् यन्निष्पद्यते, तत् अन्यत् ज्ञानशब्दाभिधेयमात्मानुमानोपयोगि। न त्वन्तःकरणपरिणामादिरित्यर्थः। मन एव तावदिदानीमसिद्धम्। सिद्धावपि अणुतया सिद्ध्यतस्तस्य नित्यस्य कथं बहिःपरिणामः, अर्थसन्निकर्षो वा। न च मनोऽतिरिक्तेऽन्तःकरणे किञ्चित् प्रमाणम्। अतो विलक्षणस्यास्य ज्ञानस्यानुभविकस्याश्रयः कश्चिदात्माऽनुमीयते इति। यन्निष्पद्यते इति प्रयोगात् ज्ञानोत्पत्त्यनुभवो दर्शितः। आत्ममनइन्द्रियार्थेत्यनुक्त्वा मनस्त्यागेनोक्त्या मनस एवासिद्धिः, सिद्धौ च धर्मिग्राहकप्रमाणेन नित्यतयाऽणुतया च सिद्धिः सूच्यते।

एवं ज्ञानस्यानपदेशत्वनिराकरणेन च आत्मा साधितः ॥१८॥

एवं ज्ञानेन स्वात्मानुमानमुक्त्वा परकीयज्ञानस्याप्रत्यक्षतया तेन परात्मानुमानमस्माकमसंभवीत्यालोच्य हेत्वन्तरेण परकीयं ज्ञानं परञ्चानुमापयति—

१९. **प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥** (१३७)

प्रवृत्तिनिवृत्ती शारीरक्रियाविशेषौ। तथा च भाष्यम्—"शरीरसमवायिनीभ्याञ्च हिताहितप्राप्तिपरिहारयोग्याभ्यां प्रवृत्तिनिवृत्तिभ्यां रथकर्मणा सारथिवत् प्रयत्नवान् विग्रहस्याधिष्ठाता अनुमीयते" इति। अत्र प्रयत्नवानिति भाषणं ज्ञानस्य प्रयत्नद्वारैव शारीरक्रियाहेतुत्वमिति वस्तुस्थितिमनुसृत्य। न तु प्रयत्नानुमानमत्र सूत्रे ज्ञानप्रकरणात्। प्रयत्नेनात्मानुमानञ्चोत्तराह्निके वक्ष्यति। तदयं प्रयोगः—चैत्रादिशरीरं प्रेक्षावदधिष्ठितं हितप्राप्तियोग्यक्रियावत्त्वात् अहितपरिहारयोग्यक्रियावत्त्वा-

---

उप० सू० १९. प्रवृत्तिनिवृत्ती—प्रयत्नविशेषौ।

द्वा रथवत् अस्मच्छरीरवच्चेति । सूत्रार्थस्तु—प्रत्यगात्मा स्वात्मा । प्रवृत्तिनिवृत्ती स्वात्मसाधकत्वेन स्वशरीरे दृष्टे, परशरीरे परात्मसद्भावविषये लिङ्गं भवत इति । स्वकीयप्रवृत्तिनिवृत्तिसजातीयप्रवृत्तिनिवृत्तिभ्यां स्वात्मदृष्टान्तेन परात्मानुमानमिति भावः । तत्र ताभ्यां स्वात्मानुमानप्रकारो भाष्यवाक्यदर्शित एव । सूत्रे चकारः ज्ञानवत् प्रवृत्तिनिवृत्त्योरपि आत्मानुमापकत्वसमुच्चयार्थ इति ॥

बुद्ध्यादिनाऽऽत्मनः सिद्धिं हेतुरूपपरिस्थितिम् ।
हेत्वाभासविधाश्चाह तृतीयाद्ये परानुमाम् ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने तृतीयेऽध्याये प्रथममाह्निकम् ।

---

श्रीः

## तृतीयाध्याये द्वितीयमाह्निकम्

आत्मनश्चैतन्येनानुमानमावेदितम् । अन्यैरपि हेतुभिः तदनुमानं वैशद्याय प्रदर्श्यते । तत्र मनोगतिमपि हेतुं वक्ष्यन्, आत्मोपकरणं मनः आत्मानन्तरमुद्दिष्टमपि मध्य एव निरूपयति—

**१. आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥**

आत्मा चक्षुरादिभिरिन्द्रियैः सन्निकृष्यते, इन्द्रियाण्यर्थैः । एवं सत्यपि चाक्षुषादिज्ञानस्य कदाचिदुत्पत्तिः कदाचिदनुत्पत्तिश्च मनसोऽनुमापिका । चाक्षुषादिज्ञानं उक्तात्मादिसंनिकर्षातिरिक्तकारणविशेषसापेक्षम्, तस्मिन् सत्स्वपि कदाचिदनुत्पद्यमानत्वादिति भाष्यानुसारी अर्थः । अर्थान्तरं तु—आत्मादिसन्निकर्षे सति कदाचित् चाक्षुषज्ञानस्य

भावः, तदैव त्वाचज्ञानस्याभावश्च मनसो लिङ्गम् । युगपज्ज्ञानानुत्पत्तिः मनसो लिङ्गमिति यावत् । मनस्स्वीकारे तु मनसः इन्द्रियेण सन्निकर्षस्यापि प्रत्यक्षकारणतया मनसोऽणुत्वस्वीकारेण तत् येनेन्द्रियेण सन्निहितम्, तज्जं प्रत्यक्षमिति व्यवस्था सूपपादेति । यद्यपि न्यायभाष्योक्तरीत्या स्मृत्यनुमितिशाब्दबोधसंशयप्रतिभास्वप्नज्ञानोहाः, सुखादिप्रत्यक्षम्, इच्छादयश्च मनसो लिङ्गानि, अनिन्द्रियनिमित्तानां तेषां करणान्तरनिमित्तताया आवश्यकत्वात्—अथापि तैरणुत्वेन मनस्सिद्धिर्दुर्लभेति युगपज्ज्ञानानुत्पत्तिरूपहेतोर्विशेषत आदरणम् । परंतु ज्ञानायौगपद्यस्य तृतीयसूत्रे वक्ष्यमाणत्वात् प्रथमयोजना भाष्यादृता । ॥ १ ॥

आकाशादाविव मनस्यप्यतिदेशार्थं सूत्रम्—

**२. तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ (१३९)**

तस्य मनसः । अन्यत् प्रागेव व्याख्यातम् ॥ २ ॥

द्रव्यत्वनित्यत्वनिरूपणानन्तरं वाय्वाकाशादाविव अत्रापि संख्या प्रतिबोधयितव्या । परन्त्वात्मोपकरणतया सिद्ध्यतो मनस इन्द्रियान्तरवत् प्रत्यात्मं भेदः आत्मभेदे सिद्धे सिद्ध एव । अथाप्येकस्यैवात्मनः किमनेकानि मनांसि, एकं वेति जिज्ञासा तावदशान्ताऽवतिष्ठते । तथा नर्तकीकरचरणादौ, सौभर्यादीनां कायव्यूहेषु, पतितगृहगोधिकाविभक्ततत्पुच्छयोश्च युगपत् क्रियोत्पत्तिर्मनोधीना समर्थनीया । नित्यत्वेन व्याख्यातस्य मनसोऽणुत्वे नानामनःस्वीकार एवैतदुपपत्तिः । यदि तु मनो विभु, तदा तदुपपत्तिरनायासेन स्यात् । एवञ्च सर्वेषामात्मनामेकमेव मन इत्यपि सुवचमिति स्यादत्रापि संभावनेत्यपि शङ्का । तत्परिहारार्थमाह—

*** ३. प्रयत्नायौगपद्यात् ज्ञानायौगपद्याच्च प्रतिशरीरमेकं मनः॥ (१४०)॥**

कचित् यौगपद्याभिमानेऽपि युगपदनेकावयवैरनेककार्ये प्रवर्तितुम्, अनेकेन्द्रियैर्युगपदनेकं ज्ञातुञ्चासमर्थताया एव प्रायः प्राणिषु दर्शनान्नैवम्। एवञ्चैकत्र व्यापृतस्यान्यत्रासामर्थ्यात्, विभुत्वे च मनसः, अणुत्वेऽप्यनेकत्वे वा तदयोगात् नित्यमणु मनः प्रतिशरीरमेकम्; न त्वेकस्मिन्नपि शरीरे अनेकम्। कर्मेन्द्रियज्ञानेन्द्रियभेदेनापि मनोभेदो नास्तीति हेतुद्वयेन ज्ञाप्यते। नर्तक्यास्तु अभ्यासाधानितमनोवेगवशात् अतिक्षिप्रभाविनीषु करचरणक्रियासु द्रष्टृणां यौगपद्याभिमानः, अलातचक्रदर्शनवत्। एवं दीर्घशष्कुलीभक्षणादावपि। कायव्यूहेषु प्रतिशरीरमिन्द्रियान्तरवत् मनसोऽप्यन्यत्वान्नानुपपत्तिः। गृहगोधिकापुच्छे तु संश्लिष्टावस्थोत्पन्नक्रियाधीनवेगविशेषनिबन्धना भ्रामितविसृष्टचक्रभ्रमणवत् कञ्चित् कालं क्रियानुवृत्तिरिति।

अत्र व्योमवतीकन्दल्यादिवर्णितावतरण-सूत्रानुवादार्थवर्णनबलात् सूत्रे 'प्रतिशरीरं मन' इति पदे स्त इति ज्ञायते। एकविभुमनःपक्षखण्डनार्थं सूत्रप्रवृत्तिं वर्णयन्त्या किरणावल्या एकपदमात्रस्य तत्खण्डकत्वाभावात् प्रतिशरीरमिति पदमपि सूत्रस्थतया ज्ञाप्यत इव। मनःपदं पुनः प्रकरणवशादनुक्तिसिद्धमेव। अथापि कचित् सूत्रपाठेऽपि तदुपलभ्यते। मनोधिकारसमाप्तिज्ञापनाय पुनस्तत्प्रयोग इति वक्तव्यम्। मा भूद्वा तत्॥ ३॥

अथात्मलिङ्गाधिकारसूत्रं संक्षेपेणानेकहेतुप्रदर्शकमाह—

**४. प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि॥ (१४१)**

देहेन्द्रियमनःप्राणवेदनादिसंघातेऽस्मिन् विलक्षणे एकैकोऽप्यंशोऽ

वश्यमात्मानमनुमापयति। तेष्वेकस्यात्मत्वेऽन्यत्र कार्यं नोत्पद्येत; अन्येषामेकाधीनत्वे च विनिगमनाविरहः; सर्वेषामात्मत्वे त्वनेकात्मवादः स्यात्; मृतशरीरे प्राणापानादिसर्वप्रसङ्गश्च; अहमेकः प्राणापानादिमान् सुखदुःखादिमांश्चेत्याद्यनुभवप्रतिसंधानविरोधश्चेति सूत्राशयः। सूत्रार्थस्तु प्राणापानौ उच्छ्वासनिःश्वासौ, पञ्चवृत्तिप्राणव्यापारो वा। निमेषोन्मेषौ चक्षुर्मीलनिर्मीलने वायुनोदनाधीने। जीवनशब्दस्य स्वकर्मोपार्जितशरीरावच्छिन्नात्ममनस्संयोगो मुख्योऽर्थ इति किरणावली। तथाच न्यायभाष्यम् (३-२-२७), "सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितो जीवनमिष्यते" इति। प्रकृते वृद्धिर्भग्नक्षतसंरोहणञ्च जीवनपदविवक्षितमिति भाष्यादिनिष्कृष्टम्। मनोगतिः समनन्तरनिरूपितस्य मनसोऽभिमतविषयग्रहानुकूला क्रिया। इन्द्रियान्तरविकारः अम्लफलरूपगन्धग्रहणाधीनो रसनेन्द्रियविकारो रसगर्धिप्रवर्तितो दन्तोदकसंप्लवभूतः। इमे सर्वे प्रत्येकं पुरुषाधीनाः, विजातीयवायुक्रियात्वात्, निमेषोन्मेषत्वात्, वृद्ध्यादिरूपत्वात्, अभिमत्यनुकूलक्रियत्वात्, दर्शनानुसारिविकारत्वात्; भस्त्रावायुक्रियावत्, दारुयन्त्रनिमेषोन्मेषवत्, गृहपतिकृतगृहवृद्ध्यादिवत्, पेलकान्तरोद्देशेन दारकप्रेरितपेलकगतिवत्, अपवरकान्तर्गतप्रेक्षककृतैकगवाक्षद्वारकदर्शनानुरोधिगवाक्षान्तरावच्छेदकृतव्यापारविशेषवदिति। सुखादयश्च किञ्चिदाश्रिताः गुणत्वात् रूपादिवदिति परिशेषबलादात्मानुमितिहेतवः। न चैषां शरीरादिवृत्तित्वम्, ज्ञानसामानाधिकरण्येन अहमर्थवृत्तित्वेन चानुभवात्। किञ्च सुखादिकं प्राक्कालकृतकिञ्चित्पदार्थानुभवाहितेष्टसाधनताज्ञानाधीनकालान्तरोपलब्धतत्सजातीयपदार्थगततदिष्टसाधनत्वस्मरणापादितेच्छाप्र-

वृत्तिसंततिसमासादनीयमिति आजन्ममरणस्थाय्येकात्मसिद्धिरिति न देहादिः क्षणभङ्गुर आत्मा भवितुमर्हतीत्युक्तं(१–१–१०)न्यायभाष्ये॥

एवमात्मा साधितः। तस्य द्रव्यत्वनित्यत्वे पूर्ववदतिदिशति—

५. **तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥** (१४२)

तस्य आत्मनः। शिष्टं स्पष्टम् ॥ ५ ॥

एवं द्रव्यत्वनित्यत्वनिरूपणानन्तरं वायोरिव तस्यैकत्वनानात्वचिन्तनमागमिकाकारसदसद्भावचिन्तनञ्च क्रमेण कर्तव्यम्। एवमपि वक्ष्यमाणाकारस्य सर्वात्मसाधारण्यं तद्विशिष्टरूपेण नानात्वञ्च ज्ञापयितुं पूर्वमेवाऽऽगमिकाकारविचारं प्रवर्तयन् पूर्वपक्षमाह सूत्रत्रयेण—

६. **यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥**

नायं संदर्भः आत्मनोऽननुमेयत्व-शास्त्रैकगम्यत्वशंकया प्रवृत्तः; वायुतोऽप्यधिकं प्रपञ्चेन तस्य साधितत्वात्। किन्तु आगमगम्याकारस्य वायाविव कतिपयस्य चिन्तारूपः। यथा नानाभूतानां वायूनां प्रतिव्यक्ति नियतः स्वाभाविक आकारः आगमैकावसेयः—तद्दर्शिमहापुरुषवाक्यमात्रावसेय इति यावत्,—तथा आत्मन्यपि स्वाभाविकः प्रत्यात्मभिन्नो वा सर्ववृत्तिर्वाऽऽकारः आगमिक एव। न तत्र मानान्तरम्। यदि तु मानान्तरात् तत्र किं विशेषतोदृष्टादनुमानात्, उत सामान्यतोदृष्टात्। नाद्यः, कस्याप्यात्मनःप्रत्यक्षाभावेन क्वचिदपि तादृशाकारसाहचर्येण कस्यचिल्लिङ्गस्यादर्शनात् केनापि लिङ्गेन विशेषतस्तदाकारानुमानायोगात्। न च स्वयं प्रत्यक्ष्यत इति वाच्यम्, अयोग्यत्वात्। योग्यत्वे स्वात्मनेव परात्मनाऽपि ग्रहणप्रसंगः। न हि घटादिः केन चिद् गृह्यते, नान्येनेत्यस्ति। अतः सन्निकर्षे अयं यज्ञदत्त इति परेण यज्ञदत्तात्मप्रत्यक्षाभावात् स्वेनापि

स नैव प्रत्यक्ष्यते इति विशेषतोदृष्टं लिङ्गं सर्वात्मसु किञ्चिदसाधारणाकारसाधकं न विद्यत इति ॥ ६ ॥

तर्हि सामान्यतोदृष्टात् तत्सिद्धिरस्तु। तत्राह—

**७. सामान्यतोदृष्टाच्चाविशेषः ॥ (१४४)**

यथा स्पर्शादिना वाय्वादिधर्मिसिद्धिः, तथा ज्ञानादिना किञ्चिद्धर्मिसिद्धिः स्यात्। स च परिशेषात् द्रव्यान्तरभिन्नत्वेनाप्यनुमीयते। अतो नात्मनोऽसिद्धिः। परंतु गवादौ गोत्वादिरिव तत्रत्योऽसाधारण आकारो न सामान्यतोदृष्टादवगम्यते। नित्यत्वविभुत्वादयस्तु वियदादिसाधारणा इति ॥ ७ ॥

तस्मात् प्रत्यक्षानुमानानवकाशात् अनुमानसिद्धोऽप्यात्मा विलक्षणाकारतया शब्दैकसमधिगम्य इत्याह—

**८. तस्मादागमिकः ॥ (१४५)**

तथा हि श्रुतिः, "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः", "विज्ञानघन एव"इत्यादिः।

एवं पूर्वपक्षे सिद्धान्तमाह—

**९. अहमिति शब्दस्य व्यतिरेकान्नागमिकम् ॥ (१४६)**

अयं भावः—अपहतपाप्मत्वादिकमनुमानगम्यमेव। सत्यसंकल्पत्वादिकमप्यौपाधिकम्। रागादेर्बन्धकालिकत्वात्। विज्ञानघनत्वमपि विज्ञानाश्रयत्वं देहकाल एव। जानातीतिधातुप्रतिपाद्यताविरहिण आत्मनो

---

उप.सू.७. सामान्यतो दृष्टादनुमानादपि आत्मत्वेन अष्टद्रव्यातिरिक्तद्रव्यत्वेन वा आत्मसिद्धिर्न भवतीत्यर्थः। उप.सू ८. अहम्पदं साभिधेयं पदत्वादित्यनुमानादात्मसिद्धिः। अहंत्वरूपमात्मत्वं प्रवृत्तिनिमित्तमितोऽवगम्यते इति।

ज्ञानरूपता च दुरुपपादा। अत आत्मनि शिष्यमाणमसाधारणं रूपमहन्त्वमेव। तस्मादात्मरूपमागमिकं न भवति। अहमितिशब्दस्यात्मनोऽन्यत्र व्यतिरेकात् अभावात्। आत्मान्यस्याहंशब्दमुख्यार्थत्वाभावादिति प्रत्ययस्येति वक्तव्ये शब्दस्येति कथनं स्वकीयप्रत्ययस्य स्वयं सुग्रहत्वेऽपि परकीयतत्प्रत्ययस्य तत्प्रयुक्तशब्देनैव ज्ञेयतया; अहमितिज्ञानं न निर्विकल्पकं निर्विकल्पस्या-भिलापायोगादिति ज्ञापनाय च ॥ ९. ॥

सत्यं पृथिव्यादितो व्यतिरेकः अहमितिशब्दस्य। अहं पृथिवी, अहं जलम्, अहं शरीरम्, अहमिन्द्रियमित्यव्यवहारात्। तावता अहन्त्वस्यानागमिकत्वं कथम्। ज्ञानादिनाऽऽत्मनोऽहन्त्वेन रूपेणानुमानाभावात्। आत्मप्रत्यक्षस्य च निरस्तत्वादित्यत्राह (सिद्धान्ती)—

* १०. यद् दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति ॥ (१३७)

यदि दृष्टमितिवत् यद् दृष्टमिति पाठोऽपि प्रसिद्ध इहाद्रियते, अध्याहारक्लेशाभावादर्थौचित्याच्च। (अन्वक्षमित्यत्र प्रत्यक्षमित्यपि पाठः)। अयमर्थः—यत् यस्मात्कारणात अहं देवदत्तः, अहं यज्ञदत्त इति तत्तदात्मसाक्षिकं प्रत्यक्षं दृष्टम् अनुभवसिद्धमस्ति, तस्मान्नागमिकमिति पूर्वसूत्रेणान्वयः। आत्मनः प्रत्यक्षयोग्यत्वादहन्त्वमपि प्रत्यक्ष्यत एव। तावता न परेणापि परात्मप्रत्यक्षापत्तिः। यथा ज्ञानसुखादीनां योग्यत्वेपि स्वेनैव ग्रहणम्; न परेण। तथाऽऽत्मनोऽपीति व्यवस्थासंभवात्। (अत एव असन्निष्ठम् अहन्त्वप्रत्यक्षमन्येन न गृह्यते) देवदत्तयज्ञदत्तद्वयनिर्देशः तत्तदहन्त्वं तत्तद्दृश्यमेवेति न कुत्राप्यहन्त्वमाग-

---

* उप. सू. १०. यदि दृष्टमिति पूर्वपक्षसूत्रम्। यदि अहमिति प्रत्यक्षम्, किमात्मानुमानेनेति।

मिकमिति दर्शयितुम्, परात्मनः परयोग्यत्वशङ्कां परिहर्तुञ्च। अहन्त्वं प्रत्यक्षयोग्यमन्यत्। आत्मत्वं तु जातिः। तस्य जातित्वेन न प्रत्यक्षम्; अनेकात्मप्रत्यक्षाभावात्॥ १०॥

नन्वेवमात्मनः प्रत्यक्षसिद्धत्वे किमिति प्रागनुमानविस्तर इत्यत्राह—

**११. दृष्टे आत्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः॥ १४८**

अहमिति प्रत्यक्षमिति निर्विवादम्। तथा अहमर्थ आत्मेत्यपि। परन्तु यथा अहं यज्ञदत्तः, अहं जानामि, अहं सुखीत्यादिप्रत्ययराशिः, तद्वत् अहं शुक्लः, अहं स्थूल इत्यादिरप्यस्ति। शौक्ल्यस्थौल्यादिश्च शरीरगुण इति निर्विवादम्। अतस्तत्सामानाधिकरण्यादहमर्थः शरीरमेवेति स एवात्मा; स एव ज्ञानाद्याश्रय इति लौकिका मन्यन्ते। तान् प्रति आत्मा प्रत्यक्षसिद्ध इत्युक्तौ, "सत्यमयं प्रत्यक्षसिद्ध एव; स च पृथिव्यादिपञ्चभूतात्मक एवेति कथमतिरिक्तात्मद्रव्यपरिगणनम्" इत्याक्षिपेयुः। तदर्थं प्रथमतो देहाद्यतिरिक्तमात्मानं हेतुभिः प्रसाध्य अहमित्यात्मविषयकं प्रत्यक्षं तद्विषयकमेवेत्युच्यते। एवञ्च प्रत्यक्षदृष्टेऽप्यात्मनि, लिङ्गे (पूर्वोक्ते) सति—यौ द्विप्रकारौ प्रत्ययौ, अहं यज्ञदत्तः, अहं शुक्ल इत्येवमात्मदेहगोचरौ प्रागुक्तौ तत्र—एकः आत्मगोचर एव प्रत्यक्षवत् प्रत्ययो भवति घटादिप्रत्यक्षतुल्यो भवति, लिङ्गसिद्धयथावस्थितात्मविषयकतया दृढत्वात् अबाधितत्वात्। अन्यस्तु शरीरगोचरो न वास्तवाहमर्थविषयकप्रत्यक्षप्रत्यय इति। एवञ्च दृढप्रत्ययमुपादायात्मनः प्रत्यक्षत्वं पृथिव्यादितः पृथग्गणनार्हत्वञ्च ज्ञातं भवत्विति पूर्वमनुमानोपन्यास इति भावः॥ ११॥

ननु यथा अहं शुक्ल इत्यादेः आत्मनि अहन्त्वप्रत्यक्षपरत्वं न भवति, तथा अहं देवदत्त इत्यादेरपि ; देवदत्तादिपदानां शरीरवृत्तिजातिविशेषविशिष्टार्थकत्वात् । अत एव देवदत्तो गच्छतीति गमनसानाधिकरण्यमप्युपपद्यते । आत्मनि गमनक्रियाया अयोगादित्यत्राह—

१२. **देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः ॥**

'एकादशेऽहनि पिता नाम कुर्यात्' इत्याद्यागमानुसारेण विवेकिभिः पित्रादिभिर्नामकरणं न पिण्डमात्रस्य, किन्तु पिण्डावच्छिन्नस्याऽऽत्मनः, जातकरणनामकरणादीनां शरीरावच्छिन्नात्मसंस्कारकत्वात् । जातस्य हि नामकरणम् । जन्म चात्मनो देहेन्द्रियादिसंघातसंबन्ध इति निर्विवादं न्यायसूत्रेषु । अत एवाऽऽत्मनः प्रेत्यभावः । अतो देवदत्तादिपदमात्मपर्यन्तार्थकमिति शुक्लादिशब्दविलक्षणम् । उक्तञ्च भामत्याम् (२-३-१६), "देवदत्तादिनामधेयं तावत् जीवात्मनः ; न शरीरस्य ; तन्नाम्ने शरीराय श्राद्धादिकरणानुपपत्तेः" इत्यादि । अतः शरीरावच्छिन्नात्मनि देवदत्तपदमौपचारिकमिति न मतव्यम् । अतः अहं देवदत्त इति प्रत्यक्षमात्मनि अहन्त्वे प्रमाणमेव । देवदत्तो गच्छतीयत्र तु देवदत्तपदमुपचाराच्छरीरे प्रयुक्तम् । न च गच्छतीत्यत्राख्यातस्य कृत्यर्थकत्वात् गमनानुकूलकृतेश्चात्मनि अबाधितत्वाद् देवदत्तपदमात्मपर्यन्ते मुख्यमेव किं न स्यादिति वाच्यम्—यन्निष्ठव्यापारविशेषो धातुना विवक्ष्यते, स कर्तेत्येवानुभवात् । अत एव स्थाली पचतीत्यादौ स्थालीगतव्यापारस्य धातुना विवक्षा ।

---

° उप. १२. देवदत्तो गच्छतीति गतिसामानाधिकरण्यानुभवो व्यवहारश्च भाक्तः (देवदत्तपदं शरीरावच्छिन्नात्मनि प्रयुक्तं चेत् औपचारिकम्) ।

अतो गम्यर्थस्य देवदत्तनिष्ठता अवश्योपपाद्या । आख्यातार्थो यः कश्चिदस्तु । यद्वा चेतनमात्रे प्रयुज्यमानधातुस्थल एवाख्यातस्य कृतिरर्थः, यथा भुङ्क्ते इत्यादौ । धातोश्चेतनाचेतनसाधारण्ये तु तस्य धातोश्चेतनविषये प्रयोगेऽपि अविशेषादाश्रयत्वमेवार्थः । अतो रथो गच्छतीति प्रयोगबलात् देवदत्तो गच्छतीत्यत्राप्याश्रयत्वमेवाख्यातगम्यम् । सर्वदा देवदत्तपदमात्मपर्यन्तार्थकमीदृशस्थले उपचाराच्छरीरे प्रयुक्तमिति

शङ्कते—

१३. संदिग्धस्तूपचारः ॥ (१५०)

देवदत्तशब्दस्य किं शरीरे उपचारः, उत अहंशब्दस्यात्मनीति संदिह्यते । यथा यूपत्रश्चनस्थाण्वाहुतिर्यूपसंस्कारार्था, यथा च मलापकर्षणार्थं स्नानमात्मसंस्कारकम्, तथा पिण्डनामकरणमपि तदवच्छिन्नात्मसंस्कारकं भवितुमर्हतीति देवदत्तो गच्छतीत्यादौ देवदत्तशब्दश्शरीरे मुख्य एव । न चाहं देवदत्त इति कथमिति शङ्क्यम्, अहं शुक्ल इति प्रत्ययानुसारेणाहंत्वस्यापि देहनिष्ठत्वे बाधकाभावात् अहमर्थ आत्मेत्यत्रैव विवादसंभवात् । एवञ्चाहं जानामीत्यादावेवाहंशब्द आत्मनि उपचारादस्तु । अतो नाहन्त्वमात्मासाधारणाकार इति स कश्चिदागमिक एव तत्र स्यादिति ॥ १३ ॥ परिहरति—

**१४. अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः॥(१५१)**

अर्थान्तरं प्रत्यक्षं यस्य प्रत्ययस्य, सोऽर्थान्तरप्रत्यक्षः । यद्वा

---

१. **अत एव व्युत्पत्तिवादे**—द्वितीयायाम्, गतिबुद्धिसूत्रे गतिबुद्धिकर्तृत्वमाश्रयत्वरूपमुक्तम् । एवं गच्छतीते प्रयोगाभावनिर्वाहावसरेऽप्येवम् । तृतीयायाम् आश्रयत्वार्थाभिप्रायेण चैत्रेण गम्यत इत्युदाहृतम् । आख्यातविचारे गच्छति, जानाति, करोतीत्यादौ आश्रयत्वे निरूढलक्षणेति दीधितिकारोऽपि प्रमाणीकृतः ।

**उप० सू. १३.** अहमित्येतत [illegible]

प्रतिगतोऽक्षं प्रत्यक्षः साक्षात्कार इत्यर्थः । पुल्लिङ्गविशेष्यविवक्षया पुंस्त्वम् । अहमिति प्रत्ययः शरीरादर्थान्तरविषयकसाक्षात्कारः, कुतः : प्रत्यगात्मनि स्वात्मनि भावात् , स्वात्मविषयकत्वात् । परत्र परात्मनि वा शरीरे वा अभावात । तदविषयीकरणादित्यर्थः । अयं भावः— अहमिति प्रत्ययस्य को विषय इति विचार्यम् । तत्प्रत्ययव्यक्तेर्जायमानाया य आश्रयः स एव तद्विषय इति वाच्यम् । "प्रत्येतुः प्रत्येतव्यादनतिरेकः प्रत्यक्त्वम् " इति चोदयनाचार्याः । अत एव स्वात्मन्येव स प्रत्ययो भवति । अन्यथा तस्यात्मसामान्यविषयकत्वे शरीरादिविषयकत्वे वा सति आत्मान्तरादावप्यहमिति प्रत्ययोऽस्य जायेत । एवम् अहं शरीरम् , अहं पाद इत्यादिप्रत्ययश्च स्यात् । एतेन—अहमितिप्रत्ययस्य तत्प्रत्ययव्यक्त्याश्रयो विषय इति कुतो नियमः ? तद्व्यक्त्यवच्छेदकदेहो विषय इत्येव नियमोऽस्तु । तथाच शरीरावच्छेदेन तत्प्रत्ययव्यक्तेरात्मनि जायमानत्वात् शरीर एवाहन्त्वम्-- इत्यपि निरस्तम्—अहं शरीरमित्यादिप्रत्ययापत्तेः ।

किञ्च अहमिति प्रत्ययो बहिरिन्द्रियजन्यो वा मानसो वा । नाद्यः, अन्धबधिरादीनामपि तत्सत्त्वात् । नान्त्यः, इन्द्रियाणां विशेषगुणग्रहणमन्तरा द्रव्यग्राहित्वाभावेन शरीरग्राहित्वायोगात् । तद्गतशौक्ल्यादेरन्धादिभिरग्रहणेनामानसत्वात । ज्ञानसुखादिर्गृह्यत इति चेत्—न स शरीरगुण इत्यावेदितम् । अतिरिक्तात्मविषयकत्वे तु ज्ञानादिना सह मानसमात्मग्रहणमिति सुवचम् । ननु यथा अहमर्थ आत्मेति पक्षे अहंत्वस्यात्मनि, अहं जाने, अहं सुखीति मनसा गृहीतस्य पश्चात् अहं शुक्ल इत्यादौ चाक्षुषे स्मृत्युपनीततया भानम्, तथा शरीरमहमर्थ

इति पक्षेऽपि अहं शुक्ल इत्यनुभूतस्याहन्त्वस्य पश्चात् स्मृत्युपनीतस्य अहं जाने इति मानसे भानमस्त्विति चेत्—एवं तर्हि अहंत्वस्य शरीरनिष्ठत्वेऽपि आत्मा मानसप्रत्यक्षयोग्य इति स्वीकृतं भवति । न चाहमिति तत्र शरीरस्यैव भानम्—तत्र ज्ञानानन्वयात् । बाह्यस्य शरीरस्य मानसायोग्यतया तद्विशेष्यकमानसप्रत्यक्षासंभवाच्च । योग्यस्यैवैन्द्रियकज्ञाने विशेष्यत्वात् ।

किञ्च अहमितिप्रत्ययावच्छेदकदेहः अहमर्थ इति सिद्धे ह्ययमाक्षेपः । तदेव न भवति; सौभर्यादेरेकदेहावच्छेदेन कृतस्यान्यदेहावच्छेदेन प्रतिसंधानाभावप्रसंगात् । जातिस्मरेण पूर्वजन्मवृत्तस्य अहं तदकरवमित्यग्रहणप्रसंगाच्च । तथा च भगवान् अगायत्, "इमं विवस्वते योगं प्रोक्तवानहमव्ययम्" इति । तस्मात् तत्प्रत्ययव्यक्त्याश्रय एवाहमर्थः । एवञ्चाहं जाने, अहं सुखीत्यादौ आत्मन्यहन्त्वं मुख्यमेव भासत इति ॥ १४ ॥

एवमात्मन्यहन्त्वसमर्थनसिद्धं प्रकृतांशं निष्कर्षति—

**१५. देवदत्तो गच्छतीत्युपचारात् अभिमानात्तावच्छरीरप्रत्यक्षोऽहङ्कारः ॥ (१५२)**

अहंशब्दस्यात्मपरत्वात् अहं देवदत्त इत्यादौ देवदत्तादिपदमपि तत्सामानाधिकरण्यात् पिण्डावच्छिन्नपरम् । तत्रैव च स शब्दो मुख्यः; न तु पिण्डे । अहं देवदत्त इतिवत् मम शरीरं देवदत्त इति, अहं देवदत्तवानिति चाप्रयोगात् । एवञ्चाहन्त्वदेवदत्तत्वयोरात्मनिष्ठत्वात्

उप.सू. १५. पूर्वपक्षसूत्रम् । उपचारादित्येतदनन्तरम्, इत्युक्तमिति शेषः । तावदिति हेतौ । देवदत्तो गच्छतीत्येतत् उपचारादिति यदुक्तम्, तत् अभिमानात्, न तु वास्तवं तत्; यस्मात् अहमिति प्रत्ययः प्रत्यक्षभूतशरीरविषयक इत्यर्थः ।

अह देवदत्त इत्यादि आत्मप्रत्यक्षं निर्बाधम् । देवदत्तो गच्छतीत्यादौ च विशिष्टवाचिनः शब्दस्य विशेषणे शरीरे उपचारः । एवं देवदत्तःशुक्लः स्थूल इत्यादावप्युपचारः । एवम्, अहं शुक्ल इत्यादिप्रयोगोऽप्यमुख्य एव । अयमनयोर्विशेषः——अहम्पदं नात्र शरीरे लाक्षणिकम् । किंत्वनादिसिद्धदेहात्मभ्रान्तिबलात् देहे आत्माभिमानात् अहंत्वेन देहविषयकः शुक्लादिशरीरसाक्षात्काररूपोऽहम्प्रत्ययः । अहमिति हि स्वात्मा केवल उच्यते, न तु देहविशिष्टः । देवदत्त इति च देहविशेषविशिष्टः परात्मा । स्वात्मभ्रान्तिश्च स्वदेहेऽनादिसिद्धेति । अहङ्कार इत्यस्यानहमर्थेऽहम्प्रत्यय इत्यर्थः । गर्वापरपर्यायस्याहङ्कारस्य मूलभूतोऽयं देहात्माभिमानरूपोऽहङ्कार इति ज्ञापनायाहङ्कारपदप्रयोगः । तेनाभिमानदार्ढ्यसिद्धिः । तत् सिद्धं, 'देवदत्तो गच्छतीति प्रत्यय उपचारात्; शरीरप्रत्यक्षोऽहङ्कारोऽभिमाना'दिति । सूत्रे गच्छतीतीत्यस्यानन्तरं प्रत्यय इत्यर्थसिद्धम् । एवमेव हि इतिशब्दनिर्देशोऽस्य शैली । तावदित्यवधारणे । अभिमानादेवेत्यर्थः । तेनोपचारनिषेधः । यद्वा उपचारापेक्षयाऽत्र वैलक्षण्यपरं तावत्पदम् ॥ १५ ॥ पुनःशङ्कते—

१६. संदिग्धस्तूपचारः ॥ (१५३)

देवदत्तो गच्छतीत्युपचारः संदिग्धः । देवदत्तपदस्य शरीरवाचिताया एव संभवात् । न च मम देवदत्त इति, अहं देवदत्तवानिति च प्रत्ययव्यवहारयोरापत्तिः । अहन्त्वस्यापि शरीरधर्मतया अहमर्थदेवदत्तयोरभेदात् तथाऽऽपादनासंभवात् । न चाहमिति प्रत्यगात्मगोचरमिति

० उप० सू० १६. उक्तशंकापरिहारिसिद्धान्तसूत्रम् । आत्मनि अहम्प्रत्ययस्यौपचारिकत्वं पूर्वपक्षमुक्तं संदिग्धमित्यर्थः ।

शङ्क्यम्—अहमितिप्रत्ययव्यक्तेराश्रयो नाहमर्थः; नापि तद्व्यक्त्यवच्छेदकदेहः, जातिस्मरादिप्रत्ययानुपपत्तेरुक्तत्वात्। किन्तु स्वाश्रयावच्छेदकत्वसंबन्धेन तत्प्रत्ययव्यक्तिमान् अहम्पदार्थः। स च देह एव। जातिस्मरजन्मान्तरशरीरञ्च तत्प्रत्ययव्यक्त्यनवच्छेदकमपि तद्व्यक्त्याश्रयात्मावच्छेदकमेव। आत्मनश्चात्र संबन्धघटकतया न प्रत्यक्षत्वम्। परत्वापरत्वप्रयोजकविप्रकर्षसन्निकर्षवत्ताबुद्धौ संबन्धघटकत्वेपि कालदिशोरप्रत्यक्षत्ववदुपपत्तेः। संबन्धस्याप्रत्यक्षत्वेऽपि विशिष्टप्रत्यक्षाङ्गीकारात्। अत एवात्र वैशेषिकमते समवायस्यातीन्द्रियत्वेऽपि रूपविशिष्टघटप्रत्यक्षम्। एवञ्चायोग्य एवाऽऽत्मा। अहं देवदत्तः, अहं स्थूल इत्यादिकञ्चाभिमानं विनैव देहपरतया सूपपन्नम्। अहं जाने, सुखीत्यादावपि आत्मनिष्ठस्यापि ज्ञानादेः शरीरविशेषणत्वमेव। अहं देवदत्तः कृशः, अहं कृशो ज्ञानीत्यादावहम्पददेवदत्तपदयोः शरीरार्थकत्वस्य ज्ञानादिकं प्रति विशेष्यत्वस्य चावश्यकतया सर्वत्र तथैवोपपत्तेः ॥१६॥

ननु अहं जाने इत्यत्र ज्ञानस्य स्वशरीरविशेषणत्वे यज्ञदत्तज्ञानस्यापि तच्छरीरविशेषणत्वात् यज्ञदत्तेन सह तज्ज्ञानप्रत्यक्षस्याप्यापत्तिरिति शंकां पूर्वपक्षी परिहरति—

**१७. न तु शरीरविशेषात् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः ॥ (१५४)**

अहमर्थः शरीरमेवेत्युक्तावपि ज्ञानादेरात्मनिष्ठत्वस्वीकारात् परकीयज्ञानादेश्च परेणाग्राह्यत्वात् यज्ञदत्तोऽयं ज्ञानीति विष्णुमित्रस्य न प्रत्यक्षम्। यज्ञदत्तादेः शरीरविशेषात् शरीरापेक्षया विशिष्टत्वात् अतिरिक्तत्वात् तस्याप्रत्यक्षत्वात्। 'यज्ञदत्तादिगतस्य ज्ञानस्य प्रमाणान्तरेण

---

**उप. सू. १७. शरीरभेदं प्राप्य परज्ञानं परस्य न विषयः। शरीरगतत्वे रूपादिवत् गृह्येत।**

पूर्वमवधारणे सिद्धे तदनन्तरम् यज्ञदत्तोऽयं ज्ञानीति प्रत्यक्षापत्तिरिति चेत्--इष्टापत्तिः। सुरभि चन्दनमिति चाक्षुषप्रत्यक्षे सौरभभानवत् यज्ञदत्तशरीरप्रत्यक्षे ज्ञानभानसंभवात्। ननु 'तत्र, अहं जाने इति प्रतीत्या तद्ग्रहणं किन्न स्यात्; अहम्पदेन यज्ञदत्तदेहस्यापि ग्रहणसंभवात्। अहमितिप्रत्ययव्यक्त्याश्रयदेवदत्तात्मावच्छेदकतायाः यज्ञदत्तदेहेऽप्यविशिष्टत्वात्। विभुद्रव्यं प्रति मूर्तसामान्यस्यावच्छेदकत्वात्' इति शङ्केति चेत्---तत्र चेदमुत्तरम्--विष्णुमित्रशरीरापेक्षया यज्ञदत्तशरीरस्य विशेषात् वैलक्षण्यात्। न अहमित्यनेन तत्प्रत्ययव्यक्त्याश्रयावच्छेदकं सर्वमुच्यते। किंतु तत्प्रत्ययव्यक्त्याश्रयात्मनिष्ठगुणाद्यवच्छेदकशरीरमात्रम्। अतः अहं जाने इति विष्णुमित्रप्रत्यये यज्ञदत्तदेहस्य तत्र चावच्छेदकतासंबन्धेन तज्ज्ञानादेर्न विषयत्वम्। एतेन यज्ञदत्तशौक्ल्यस्थौल्याभिप्रायेण अहं शुक्लः स्थूल इति विष्णुमित्रप्रयोगापत्तिरित्यपि निरस्तमिति॥ नेदं सूत्रं देहातिरिक्तात्माभावशङ्कायां प्रवृत्तम्: पूर्वाह्निक एव तत्सर्वपरिहारात्॥ १७॥

एवं सूत्रद्वयकृतपूर्वपक्षपरिहारसूचनपूर्वकमुपक्रान्तं निगमयति---

**१८. अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः॥ (१५५)**

देहातिरिक्तात्मवादिभिः देहात्माभिमानः अहं शुक्ल इत्यादिप्रतीत्यैव दर्शनीयः। अहमित्यस्य देहे मुख्यत्वे अभिमानोऽयं दुरुपपादः। अतो नाहंपदस्य शरीरार्थकत्वं स्वीकार्यम्। अहम्पदस्य शरीरपरत्वे,

---

० उप. सू. ०।८. अहमिति प्रत्ययः आत्मनो मुख्याहमर्थत्वप्रत्यक्षयोग्यत्वाभ्यामुपपादनीयः। शब्देन गगनमिवात्मा ज्ञानादिना सिद्धः। अत आत्मा नागमिकः।

अहं शरीरम्, अहं कर इत्यादिप्रतीतेः प्रागापादितायाः परिहारासंभवात् । स्वाश्रयात्मावच्छेदकत्वादिरूपगुरुसंबन्धेन प्रत्ययविशेषवान् अहमर्थ इति क्लेशस्यायुक्तत्वाच्च । स्वात्मनो योग्यत्वस्वीकारेण प्रत्ययविशेषाश्रयोऽहमर्थ इत्यस्यैव लाघवात् । एवञ्चाशरीरस्य भगवतोऽपि, 'बहु स्यां प्रजायेय' इत्याद्यहङ्प्रयोगोपपत्तिः । अहञ्च मम देवदत्त इत्याद्यप्रतीत्यादियुक्त्या देवदत्तादिपदमप्यात्मन्येव मुख्यम् । अहं देवदत्तः कृश इत्यत्र शरीरेऽहमभिमानः; देवदत्तशब्दोपचारश्च । अहं कृशः ज्ञानीत्यत्र कृशपदमेव तु समभिव्याहृतपदद्वयमुख्यत्वात् कृशशरीरावच्छिन्नात्मपर्यन्तपरमस्तु । एवं तर्हि अहं गुरुः इत्यादावपि तथा स्यादिति चेत्—अस्तु विवेकिनां तथैव प्रयोगः । अविवेकिनां तु सर्वत्र देहेऽहमभिमान एव । ततः अहं कृशो ज्ञानीत्यत्रापि ज्ञानस्य देहनिष्ठताया एव ग्रहणात् । तस्मादहमिति प्रत्ययव्यवहारौ प्रत्यगात्मनि मुख्यौ, प्रत्यगात्मविषयीकरणयोग्यौ चेति । तदयं सूत्रार्थः—मुख्ययोग्याभ्यामहमितिप्रत्यक्षव्यवहाराभ्यामात्मविशेषस्य सिद्धेः नासाधारणाकारविशिष्ट आत्मा आगमिकः । शब्दवत् व्यतिरेकाव्यभिचारात् । व्यतिरेकाव्यभिचारः—व्यावृत्तत्वनियमः । अमुख्ययोरहम्प्रत्ययव्यवहारयोः शरीरादौ सत्त्वेऽपि मुख्ययोग्ययोः प्रत्ययव्यवहारयोः शरीरादितो नियमेन व्यतिरेकात्—व्यावृत्तत्वात् । यथा शब्दस्याऽऽकाशसाधकस्य पृथिव्यादितो व्यतिरेकः, तद्वत् । तत्सिद्धं वाय्वादेरतीन्द्रियतया तद्गतासाधारणाकारस्यानेकस्याऽऽगमिकत्वेऽपि स्वात्मनः प्रत्यक्षसिद्धतया अहमित्यसाधारणधर्मविशिष्ट एवात्मा भासते, न चान्यः शास्त्रैकगम्योऽस्त्यस्यासाधारणाकार इति नास्यागमिकत्वमिति ।

एवमसाधारणाकारेण भासमाने कथं देहात्माभिमान इति चेत्—यथा शुक्तिगतविशेषाग्रहणात् शुक्तौ रजतरूपविशेषभ्रान्तिः, तथा देहे अहन्त्वविरोध्याकारस्याग्रहणात् ज्ञानाश्रयत्वभ्रमात् देहेऽहन्त्व-भ्रम इत्यस्तु। भ्रमनिवृत्तिश्च देहादिभेदरूपान्योन्याभावाख्यधर्मग्रहणात्। किन्नामाहन्त्वमिति चेत्—स्वात्मत्वम्। अहमिति प्रत्ययो यत्तद-वच्छेदकत्वं वा, तदाश्रयात्मावच्छेदकत्वं वा, तदात्मनिष्ठसुखाद्यवच्छेद-कत्वं वा नाहन्त्वम्, किन्तु अहमिति प्रत्ययाश्रयत्वमेवेति प्रागुक्तमेव। तथाचैकस्य ज्ञानस्य यो विषयः आश्रयश्च, सोऽहमर्थः। एवञ्च स्वावच्छेदकत्वस्वविषयत्वोभयसंबन्धेन वा स्वाश्रयावच्छेदकत्वस्वविषयत्वो-भयसंबन्धेन वा स्वाश्रयनिष्ठसुखाद्यवच्छेदकत्वस्वविषयत्वोभयसंबन्धेन वा ज्ञानविशिष्टत्वं नाहन्त्वम्; किन्तु स्वाश्रयत्वस्वविषयत्वोभयसंबन्धेन ज्ञान-विशिष्टत्वमेव तदित्युक्तं भवति। यद्वा तादृशज्ञानविशिष्टत्वं परिचायकमा-त्रम्; ज्ञानाभावकालेऽप्यहंत्वसत्त्वात्। अतः तदुपलक्षितः कश्चिदसाधा-रणो धर्मः स्वात्मगतो विशेषाख्यो धर्म एव वाहन्त्वम्। अत एव निर्धर्मक-धर्मिग्रहणायोगात् प्रथमतोऽहं सुखीतिज्ञानकाल एवात्मना सहाह-न्त्वस्यापि ग्रहणोपपत्तिः। उत्तरोत्तरज्ञानविषये आत्मनि भासमानमहत्त्वं पूर्वपूर्वक्षणजातज्ञानादिविशिष्टत्वादिरूपमेव वाऽस्त्वित्यन्यदेतत्। न पुनरहंशब्दवत्त्वमेवाहन्त्वम्: बालानामव्युत्पन्नानामहमिति प्रत्यक्षे अहंशब्दभानप्रसक्त्यभावात्, भाषाभेदेन वाचकशब्दभेदाद्विनिगमना-विरहाच्च। अहंशब्दश्च तच्छब्दप्रयोक्तृव्यक्तिमेवाहन्त्वेन बोधयतीति नान्यस्यात्मनोऽहमिति परेण व्यवहारः। अतः अहमादितत्तद्भाषापदस्य तत्तत्प्रयोक्तृत्वोपलक्षितपरत्वम्; तत्प्रयोक्तृसमवेतत्वोपलक्षितधर्मे विशेष-

विशिष्टपरत्वं वा । तत्सिद्धम् आत्मैवाहमिति गृह्यते, स एव च तच्छब्दमुख्यार्थ इति न तस्यागमिकत्वमिति ॥ १८ ॥

सोऽयमात्मा नानेकः शब्दलिङ्गकाकाशवदिति शङ्कते—

**१९. सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम् ॥ (१५६)**

एकस्मिन्नप्यात्मनि सुखदुःखादिकं सर्वं स्वीकृतम् । अतः शब्द-लिङ्गाविशेषादाकाशैक्यवत् सुखादिरूपसाधकगुणाविशेषादात्मन एक-त्वमेव ; न तु चैत्रमैत्रादिदेहभेदादात्मभेद इति ॥ १९ ॥

सिद्धान्तमाह—

**२०. नानाऽऽत्मानो व्यवस्थातः ॥ (१५७)**

सुखदुःखादेः सर्वत्र स्वीकारेऽपि तत्र व्यवस्थाऽप्यस्ति । यदा कश्चित् सुखी, तदा अन्यो दुःखी ; यदा कश्चिदभिज्ञः, तदाऽन्यो जड इति । अत आत्मभेदः । न चाकाशे प्रदेशभेदेन तीव्रमन्दादिशब्द-भेदवत् एकस्मिन्नेव देहभेदेन सुखदुःखादिभेद इति शङ्क्यम्—वैषम्यात् । प्रतिसंधानव्यवस्था ह्यत्र व्यवस्थोच्यते । यथा बाल्ययौव-नादिशरीरभेदेऽपि अहं प्रागज्ञ इदानीमभिज्ञः, प्राग्दुःखी इदानीं सुखीति प्रतिसंधानम्, तथा चैत्रमैत्रादिदेहभेदेऽपि चैत्रीयसुखादिकमपि मैत्रादिदेहावच्छेदेन प्रतिसंधीयेत । सौभर्यादिभिरेकदेहानुभूतस्यान्यदेहेन प्रतिसंधानात् । एवम् अहं, त्वमित्यनुसंधानव्यवस्थाऽपि द्रष्टव्या । अतो व्यवस्थाबलादात्मानो नानेति ॥ २० ॥

ननु "एकधैवानुद्रष्टव्यम्", "नेह नानास्ति किञ्चन", "त्वं वा अहमस्मि", "एकमेवाद्वितीयम्", "अग्निर्यथैको भुवनं

प्रविष्टो रूपंरूपं प्रतिरूपो बभूव, एकस्तथा सर्वभूतान्तरात्मा " इत्यादिशास्त्रबलादात्माद्वैतमेष्टव्यमित्यत्राह——

२१. **शास्त्रसामर्थ्याच्च** ॥ (१५८)

तदा हि शास्त्रं शास्त्रं स्यात् । यद्येकः शास्ता, शासनीयश्चान्य इति द्वावात्मानौ स्याताम् । अन्यथा सौभर्यादिवत् कश्चिदेक एव महापुरुषः संसारकुहरगतमियन्तं कायव्यूहमधिष्ठाय भोगेन कर्म क्षपयतीति स्वीकृतप्रायमिति कः कस्य शास्तेत्यलम् । किञ्च शास्त्राणामात्मनानात्वपक्ष एव सामर्थ्यं समन्विनार्थकत्वम् । अन्यथा भेदावगाहिप्रत्यक्षविरोधवत् बद्धमुक्तजीवनानात्वजीवेश्वरानानात्वप्रतिपादकसर्वशास्त्रविरोधोऽपि स्यात् । आत्मैकत्ववादास्तु क्वचित् कैवल्यपराः, क्वचित् सर्वात्मसाम्यपराः, क्वचिच्च सर्वप्रपञ्चनियन्तृपरमात्मैकत्वपरा इति सर्वसामञ्जस्यमिति ॥ २१ ॥

तृतीयान्त्ये मनोऽवोचत् तदाद्यैश्चात्मसाधनम् ।
श्रुतिं विना स्वात्मरूपदृश्यतामात्मनां भिदाम् ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने
तृतीयेऽध्याये द्वितीयमाह्निकम् ।

इति तृतीयोऽध्यायः ॥

---

## अथ चतुर्थोऽध्यायः ।

यथोद्देशं द्रव्याणि निरूपितानि । अथास्याऽऽत्मनो भोक्तुर्भोग्य-भोगोपकरणादि वक्तुं चतुर्षु भूतेषु नित्यानित्यविवेकः प्रस्तूयते । तत्र नित्यनिरूपणमाद्ये आह्निके । तत् परमाणुभूतं नित्यं साधयति—

**१. सदकारणवन्नित्यम् ॥ (१५९)**

कारणमस्यास्तीति कारणवत् । न कारणवत् अकारणवत । यद्धि कारणवद्भिन्नम् सच्च, तन्नित्यम् । अतः परमाणुरपि तथाभूतो नित्य इति । प्रागभावस्याकारणकस्य व्यावृत्तये सदिति । घटादावनैकान्त्य-वारणाय अकारणवदिति । एवं परमाणोः सत्तावत्त्वकथनात्, 'अभावादेव भावोत्पत्ति'रिति मतं निरस्तम् । नित्यत्वमविनाशित्वम् । पूर्वमद्रव्यत्वहेतुना वियदादेर्नित्यत्वमुक्तम् । तद्वदेव परमाणुरपि नित्यः सत्त्वे सति अकारणवत्त्वादित्युच्यते । अद्रव्यकमित्यनुक्त्वा अकारणवदित्युक्तिः परमाणुवत् तद्गुणानामपि नित्यत्वमकारणवत्त्वादिति सूचनार्थम् । तेन कारणवत् सर्वं सदनित्यमिति लाभात् पाकात्मककारणवत्त्वात् पार्थिवपरमाणुरूपादेरनित्यत्वमपि गमितं भवति ।

ननु परमाणुरेव न सिद्धः । नतरां तस्याकारणवत्त्वम् । नतमाञ्च नित्यत्वमित्यत्राह—

**२. तस्य कार्यं लिङ्गम् ॥ (१६०)**

आकाशादौ तत्कार्यः शब्दादिरिव परमाणावपि तत्कार्यमेव लिङ्गम् । सर्वं हि कार्यद्रव्यं घटपटगृहगोपुरादिकं स्वापेक्षया निकृष्ट-

परिमाणस्वगतरूपादिसजातीयरूपादिशालिनानाद्रव्यारब्धं दृष्टम्। एवञ्च जालसूर्यमरीचिस्थं यत् सूक्ष्मं दृश्यते रजः, स त्रसो रेणुरपि तादृश-द्रव्यारब्ध इत्यनुमीयते। न च तस्य कार्यत्वमसिद्धम्—परिच्छिन्न-महत्त्ववत्तया कार्यत्वानुमानात्। महत्त्वञ्च चाक्षुषद्रव्यत्वात् सिद्धम्। दूरदूरतरादिदेशस्थितानां महत्त्वतारतम्यानुसारेण प्रत्यक्षवैलक्षण्यदर्शनेन प्रत्यक्षे महत्त्वस्य कारणत्वात्। एवञ्च चाक्षुषद्रव्यत्वं वा महत्त्वं वा कार्यद्रव्यत्वं वा त्रसरेणोः स्वनिकृष्टपरिमाणस्वसमानगुणकमिथस्संयुक्ता-नेकद्रव्यारब्धत्वे हेतुः। परिच्छिन्नमहत्त्वस्य कार्यताप्रयोजकत्वं कुत इति चेत्—यद्यत् महत्, तत्तत् कार्यमित्यन्वयव्यतिरेकबलादेव। त्रसरेणु-महत्त्वञ्च नावयवमहत्त्वजन्यम्, तेषामप्रत्यक्षत्वेनामहत्त्वात्। कारण-भूतावयवानामाधिक्ये चावयवबहुत्वाधीनमपि महत्त्वं दृष्टम्। एवञ्च त्रसरेणोः अवयवबहुत्वाधीनमहत्त्वशालित्वे कार्यत्वे च सति तत्रोर्ध्वाधः-प्रागादिषड्दिगवच्छेदेन षड्रेणुसंयोगदर्शनात् प्रतीताः षडंशा अपि नून-मवयवाः स्युरिति विभाव्यते। तत्र च तदन्तर्गतावयवद्वयमात्रस्यापि मिथस्संयोगबलात् कपालद्वयसंयोगाद्घटवत् कार्यजननसंभवात्, षड-वयवमेलनं विना कार्यं न भवतीति कल्पने प्रमाणाभावात् तत्तद्द्विक-मात्रेण प्रथमतो जनितमवयवित्रयं मिलितं त्रसरेणुं जनयतीति कल्प्यते। एवञ्च सर्वत्रसरेणुर्द्व्यणुकत्रयजन्यः त्रसरेणुत्वादिति सिद्धम्। एवञ्च परिमाणतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वात् तारत्वादितारतम्यवदित्यनु-मानसिद्धनिकृष्टपरिमाणाश्रयभूतश्च स एव त्रसरेणोः षड्भाग इत्यध्यव-सीयते। न च ऊर्ध्वाधश्चतुर्दिग्रूपषड्दिक्संबन्ध इव विदिग्घटनया दशदिगवच्छेदेन दशपदार्थसंबन्धोऽपि त्रसरेणौ संभाव्यत इति तस्य

दशभागवत्त्वापत्तिरिति वाच्यम्—तादृशरेणोः त्र्यणुकाधिकत्वाभ्युपगमेनादोषात् । न च सर्वस्यापि त्रसरेणोर्दशदिक्संबन्धात् दशावयवत्वमावश्यकमिति वाच्यम्— न ह्यनेकदिक्संबन्धि सर्वं सावयवमिति वयं ब्रूमः । किन्तु प्रमाणान्तरेण सावयवत्वे सिद्धे तत्र यावदवयवकल्पनमावश्यकम्, तावदङ्गीकृत्य तैरेवावयवैः तत्रावयविद्रव्ये विभिन्नदिक्संबन्धमपि तत्तदवयवभेदेनार्थादुपपादयामः । प्रकृते च जालसूर्यमरीचिसञ्चारिणो रेणोः प्रत्यक्षतया महत्त्वं तत एवावयवबहुत्वञ्चावश्यकम् । तत्र कपालद्वयात् घटवत् परमाणुद्वयादपि कार्यसंभवात् तन्निषेधे प्रमाणाभावात् द्व्यणुके स्वीकर्तव्ये तस्य द्व्यणुकस्य कार्यापेक्षायामयं त्रसरेणुरेव तत्कार्यत्वेन कल्प्यते । न ह्ययं त्रसरेणुरेव द्व्यणुकमिति सुवचम् । तथासति अवयवबहुत्वाभावेन प्रत्यक्षायोगात् । एवञ्चायं तज्जन्य इति स्थिते तत्र द्व्यणुकद्वयजन्यत्वेऽवयवबहुत्वाभावेनाप्रत्यक्षत्वापत्त्या द्व्यणुकत्रयजन्यत्वमिष्यते । एवञ्च द्व्यणुकेऽप्यणुत्वमेव परिमाणमिति तादृशकार्यभूताणुत्वशालिद्व्यणुकत्रयारब्धत्वात् त्रसरेणुः त्र्यणुकमिति सिद्ध्यति । एवं सिद्ध्यत्यस्मिन् यावद्दिक्संबन्धोऽवयवद्वारेण सुवचः, तावद्दिक्संबन्धस्तथवोपपाद्यत इति षडंशत्वात् षड्दिक्संबन्धोपपादनमिति । एवं परमाणुद्वयमात्रजन्यानामवयविनां त्रयाणामेव त्रसरेणूपपादकत्वे सति परमाणुत्रयजन्यं कार्यं तथा द्व्यणुकादिद्वयचतुष्टयादिजन्यं कार्यञ्च संभवति न वेति विचारोऽनपेक्षितत्वादुपेक्ष्यते । एतावत्तु औचित्यायातमिति लाघवादन्यादृशकार्योत्पादने ईश्वरेच्छायां न प्रमाणमिति कृतं विस्तरेण ।

न च षड्भागोऽपि सावयवः कार्यारम्भकत्वात् कपालवदिति तदवयवोऽप्यापद्यत इति शङ्क्यम्—तथासत्यनवस्थापातात् । तथा च

सुमेरुवत् त्रसरेणोरप्यनन्तावयवत्वाविशेषात् परिमाणसाम्यप्रसङ्गः। नन्वतीवाणुभूतस्य वस्तुनः, स्थूलकार्यस्येवानन्तशकलसंभावनाविरहात् नानन्तावयवकत्वं तुल्यमिति वाच्यम्—तर्हि क्वचिद्विश्रमस्येष्टत्वे परमाणुतोऽधिकावयवकल्पने प्रमाणाभावात् तत्रैव विश्रमोऽस्तु ॥ २ ॥

ननु यथा कार्यसाजात्यं रूपादिमत्त्वेन रूपेण परमाणोः, तथा अनित्यत्वांशेनाप्यस्तु। तथाच त्रसरेणुकारणं रूपवत्त्वानित्यत्वादिना स्वसजातीयकारणजन्यं कार्यद्रव्यत्वादिति प्रयोगात् परमाणोरनित्यत्वमपि स्यादित्यत्राह—

३. कारणभावात् कार्यभावः ॥ (१६१)

रूपादीनां कारणे सत्त्वात् कार्ये सत्त्वमिति सूत्रार्थः। एतदुक्तं भवति—रूपादिमत्त्वमनुमातुं युक्तम्। अनित्यत्वांशानुमाने तु कार्यत्वहेतुरप्रयोजकः। कारणे रूपाद्यनङ्गीकारे हि कार्यं नीरूपादिकं स्यादिति तर्कः प्रवर्तते। न च कारणस्यानित्यत्वानङ्गीकारे कार्येऽप्यनित्यत्वं न सेत्स्यति। गुणानामिवानित्यत्वस्य कार्ये द्वितीयक्षणावच्छेदेनाजायमानत्वात्। अन्यथा द्वितीयक्षण एव कार्यं नश्येत्। अनित्यत्वं नाशसामग्रीसमवधानायत्तम्, न तु कारणगतानित्यत्वायत्तम्, नित्येऽपि गगनादौ शब्दादेरनित्यत्वात्। कपाले सत्यपि कपालद्वयविभागाद् घटनाशदर्शनात्। अतो वैषम्यादनित्यत्वानुमानायोगात् आकाशादिवत् परमाणोरकारणवत्त्वान्नित्यत्वसिद्धिः। पूर्वसूत्रद्वयेनैव परमाणुवत् तद्गुणानामपि सिद्ध्या सूत्रमिदं व्यर्थमिति शङ्का एवं सूत्रावतरणेन परिहृता। एवंसति उत्तरसूत्रे चकारसांगत्यञ्चेति ध्येयम् ॥ ३ ॥

उप. सू. ३. इदानीं परमाणौ रूपादिसिद्धये प्रमाणमाह कारणेति।

परमाणोरनित्यत्वानुमाने दोषञ्चाह—

**४. अनित्यमिति च विशेषतः प्रतिषेध[धा]भावः ॥ (१६२)**

प्रतिषेधः अभावबोधनम् ; अभावधीर्वा वा । अनित्यमित्याकारकनित्याभावप्रमितिसद्भावः विशेषतः नित्यरूपप्रतियोग्यात्मकविशेषप्रयुक्तः । ननु आकाशादेर्नित्यस्य स्वीकृतत्वात् न प्रतियोग्यप्रसिद्धिरिति चेन्न—तत्राप्येवमनित्यत्वशङ्कायाः तुल्यत्वात् । अथवा अयं भावः—त्रसरेणुः परम्परया अनित्यरूपादिगुणयुक्तानित्यावयवजन्यः इत्यनुमाने रूपादावयवे चानित्यत्वविशेषणेन व्यावर्त्यं किम् ? व्यावर्त्याभावे तन्निवेशो न भवतीति न परमाण्वनित्यत्वसिद्धिः । नित्यस्य रूपादेरवयवस्य च व्यावृत्त्यर्थं विशेषणमिति चेत्—तदापि नित्यं किञ्चित् अवयवकाष्ठापन्नं कारणभूतमेष्टव्यमिति सिद्धं परमाणुर्नित्य इति । ननु विधेयकोटिप्रविष्टस्य विशेषणस्य विधेयतयाऽपि सार्थक्यसंभवात् न व्यावर्तकतयैव सार्थक्यमावश्यकमिति चेन्न—तादृशविशेषणाभावेऽप्यनुपपत्त्यभावेन हेतोस्तद्विधाने अप्रयोजकत्वात् । अत एवं प्रतिषेधो विशेषहेतुसापेक्ष इति । चकारः पूर्वसूत्रोक्तदोषसमुच्चये—प्रतिषेधाभाव इति शाङ्करभाष्ये पाठः । तदा च अनित्यमिति बोधे विशेषतः प्रतिषेधः, तस्य अभावः—असंभवः नित्यस्य स्वीकारे इति सूत्रार्थः ॥ ४ ॥

नन्वेवं नानुमीयते ; किन्तु रूपादिमत्तया परमाण्वनुमाने पूर्वं सिद्धे तत् परमाण्वादि पक्षीकृत्य, इदमनित्यम् , इदमीयरूपादिकञ्चानित्यमिति साध्यते । एवञ्च न पूर्वोक्तदोषः, अनित्यमित्यत्रानित्यपदस्य नित्याकाश-सामान्यादिग्रहणेन साभिधेयत्वादित्यत्राह—

उप. सू. ४. अनित्यमिति समस्तं वा, अ इति पृथगव्ययं वा विशेषतः—विशेषस्य । न नित्य इति विशेषस्य प्रतिषेधः । स नित्याभावे कथमिति ।

५. **अविद्या च ॥** (१६३)

'अनित्यमिति'इत्यनुवर्तते । परमाण्वादिकं पक्षीकृत्य तदनित्यमित्यभावबुद्धिः अविद्या भ्रान्तिरूपा च भवतीत्यर्थः । परमाणुसाधकप्रमाणेनैव तन्नित्यताया अपि सिद्धत्वादिति भावः । द्रव्यस्य विनाशो हि कारणविभागाद्वा भवेत्, कारणनाशाद्वा । परमाणुश्च धर्मिग्राहकप्रमाणेन निरवयवो निष्कारणकश्च सिद्ध इति तत्र कारणाभावात् कथमनित्यत्वं भवितुमर्हतीति । तथाच परमाण्वनित्यत्व-सावयवत्वाद्यर्थानुमानानि रूपवत्त्वपृथिवीत्वादीनि सर्वाणि बाधितानीति । चशब्दार्थः पूर्ववत् ।

एवमस्य सूत्रस्य शाङ्करभाष्यादिदर्शितरीत्या, अविद्या च=विनाशकारणस्य कस्यचिदनुपलम्भः तदविद्यमानता वा नित्यत्वं ख्यापयतीति योजनान्तरमपि युक्तम् । न च कारणविभागाद्यभावेऽपि यथा घृतादिकं कठिनं द्रवीभूय पूर्वरूपं त्यजति, तद्वत परमाणुरपि त्यजतु । तथा च कथं नित्यत्वमिति वाच्यम्—घृतादिस्थलेऽपि तेजसाऽन्तःप्रविष्टेन घृतस्य आपरमाण्वन्तं भङ्गेन पुनर्द्रवपरमाणुजनितकार्यस्वीकारेण कारणविभागादित एव कार्यनाशात् । अतोऽच्छेद्योऽदाह्योऽक्लेद्योऽशोष्योऽयमात्मवन्निरवयवः परमाणुर्नित्य इति ॥ ५ ॥

ननु यदि स्यात्, उपलभ्येत; अनुपलम्भान्नास्तीति परमाण्वभावस्य प्रत्यक्षत्वात् कथं प्रत्यक्षविरोधेन तदनुमानमित्याशङ्कायाम्, ज्ञानगुणनिरूपणावसरे उपदेष्टव्यमत्रैवोपदिशति—

६. **महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः ॥** (१६४)

उपलब्धिस्तावत् द्विधा बाह्या मानसी च । तत्र द्रव्यप्रत्यक्षसामान्यं महति द्रव्य एव भवति । अत एव मानसप्रत्यक्षग्राह्यस्या-

त्मनोऽपि महत्त्वमेव । बाह्यप्रत्यक्षे तु महत्त्ववत् अनेकद्रव्यवत्त्वं रूपञ्च कारणम् । अनेकं द्रव्यं समवायितया यस्य तत् अनेकद्रव्य-मवयवि । यद्वा नवमसूत्र इव अनेकपदं भूयःपरम् । नात्र बहुव्रीहिः । अनेकद्रव्यमस्यास्तीत्यनेकद्रव्यवत् । अस्तु वा कर्मधारयात् मत्वर्थीय-निषेधात् अनेकद्रव्येति बहुव्रीहिरेव । तत्त्वम् अवयविसमवेतत्वम् । इदमप्यन्वयव्यतिरेकविशेषात महत्त्ववत् रूपवच्च बाह्यप्रत्यक्षकारणम् ।

ननु प्रत्यक्षसामान्यं प्रति अवच्छेदकलघुकारणताकेन लघुना महत्त्वेनैवातिप्रसङ्गपरिहारे किमित्यनेकद्रव्यवत्त्वं गुरुभूतं बाह्यप्रत्यक्ष-कारणं कल्प्यमिति चेत्----अत्रोपस्कारकारः----दूरादौ महत्त्वो-त्कर्षात् प्रत्यक्षोत्कर्ष इति हि महत्त्वं कारणं कल्प्यते । क्वचिदूर्ण-नाभिप्रभृतिकृते विनते सूत्रजाले महत्त्वोत्कर्षे सत्यपि दूरात् तदप्रत्यक्ष-त्वेऽपि तन्मध्यगत ऊर्णनाभिप्रभृतिः प्रत्यक्ष्यते । आस्तृतमतिसूक्ष्मं वस्त्रं दूरादप्रत्यक्षम् ; अल्पपरिमाणस्तु तदन्तःस्थो मुद्गरादिः प्रत्यक्षः । तत्रानेकद्रव्यवत्त्वोत्कर्ष एव नियामक इति सिद्धं तस्य प्रत्यक्ष-कारणत्वमिति । ननु किमिदमतिवितत्सूत्रजालापेक्षया अल्पपरिमितेः कीटस्यानेकद्रव्यवत्त्वमुत्कृष्टमिति । बहुदेशव्यापिताप्रयोजकानेकद्रव्य-वत्त्वोत्कर्षः सूत्रजालस्य ह्यस्त्येव----सत्यम् ; भूयोवयवनिबिडसन्नि-विष्टत्वरूप उत्कर्षः इह विवक्षावशाद् ग्राह्यः । अस्तु एकपदं केवलार्थ-कमसंश्लिष्टपरम् । अनेकं संश्लिष्टं निबिडमिति यावत् । अनेक-द्रव्यवत्त्वञ्च निबिडावयवसमवेतत्वम् । इदञ्च न द्व्यणुके । अवयव-निबिडतायास्तदवयवद्वारैव वक्तव्यत्वात् । परमाणोश्चावयवाभावात् ।

अत्रेदं विमृश्यम्——महत्त्वादनेकद्रव्यवत्त्वाद्रूपविशेषाच्च द्रव्यं प्रत्यक्षमिति व्योमवत्यां सूत्रपाठात् तदनुरोधे महत्त्वस्यापि कारणत्व-प्रतीतावपि, प्रायो व्योमवत्यामर्थानुवाददर्शनात् प्रसिद्धपाठस्यैवादरणे महत्त्वं प्रत्यक्षकारणमिति न सूत्राद्भाष्याद्वा स्पष्टं प्रतीयते। किन्तु महति द्रव्ये प्रत्यक्षं भवति, नाणौ ; तत्रापि प्रयोजकं तु अनेकद्रव्य-वत्त्वमेव। बाह्यप्रत्यक्षे अनेकद्रव्यवत्त्वस्य कारणत्वेऽपि द्रव्यप्रत्यक्ष-सामान्ये महत्त्वं कारणमिति कल्पनाऽपि व्यर्था। आत्मप्रत्यक्षे आत्म-गतमहत्त्वस्य कारणत्वे महत्त्वस्यापि मानसगोचरत्वापत्तेः। न हि अहं महानिति प्रत्यक्षमनुभवसिद्धम्। अत एवात्मनि अणुत्वादिवि-चारस्तीर्थकराणाम्। महत्त्वस्य कारणत्वे च तस्यापि द्रव्येण सह प्रत्यक्षमवर्जनीयम् ; तथैवानुभवादिति।

सूत्रे रूपादिति उद्भूतरूपादित्यर्थकम्। अत एव चक्षुरादेरप्रत्य-क्षम्। मध्यन्दिनोल्काप्रकाशस्यानुपलब्ध्या अनभिभूतादित्यपि वक्तव्य-मिति न मन्तव्यम्—असति प्रतिबन्धके इत्यस्य सर्वकार्यसाधारणत्वात्। तत्र रूपग्रहणरूपविशेषणज्ञानाभावात् द्रव्याग्रहणमिति सुवचत्वाच्च ॥६॥

उक्तहेतुद्वये यदभावात्परमाणावनुपलब्धिः, तद्विविच्य दर्शयति—

*** ७. अद्रव्यद्रव्यत्वात् परमाणावनुपलब्धिः ॥ (१६५)**

न विद्यते द्रव्यं यस्य तत् अद्रव्यम्। द्रव्यासमवेतद्रव्यत्वा-दित्यर्थः। यस्य हि द्रव्यसमवेतत्वमेव नास्ति, कुतस्तस्यानेकद्रव्यवत्त्व-मिति भावः। न तूद्भूतरूपाभावात् परमाणावनुपलब्धिः। अवय-विगतोद्भूतरूपेण तत्रोद्भूतरूपस्याप्यनुमानादिति। न्यायवार्तिके इदम्, उपरितनसूत्रञ्चोद्धृतम्, यथा (२-१-३), "अयञ्चार्थः सूत्रकारेण

सूत्रद्वयेनोक्तः, 'अद्रव्यद्रव्यत्वात् परमाणावनुपलब्धिः' 'रूपसंस्काराभावाद्वायोरनुपलब्धिः' इति" इति ॥ ७ ॥

तर्हि रूपादिति किमर्थम्? तत्राह—

*८. **(सत्यपि द्रव्यत्वे महत्त्वे) रूपसंस्काराभावाद्वायोरनुपलब्धिः ॥**

रूपसंस्कारः रूपसमवायः। उद्भूतरूपाभावादित्युक्तौ अनुद्भूतरूपसद्भावशङ्का स्यात्। अतः संस्कारपदम्, रूपवासनाऽपि नास्ति, सर्वथा रूपं नास्तीत्यावेदनाय। यद्वा समवायस्यैकतया वायौ स्पर्शसमवायसत्त्वात् रूपसमवायोऽपि स्यात्; तथा च समवायसंबन्धेन रूपमपि स्यादिति शङ्कापरिहाराय रूपसंस्कारपदम्। वायौ रूपप्रतीतिकार्याभावात् समवायेन रूपनिरूपिताधिकरणता न स्वीक्रियत इति तेन द्योत्यत इति। वायौ रूपसामान्याभावश्च गुणविनिवेशाधिकार एव सिद्ध इति। निदाघोष्मादावप्यनुपलब्धिरुपपादनीयेति, वायोरित्युपलक्षणञ्चेत्—तदनुगमाय उद्भूतरूपाभावादित्येव रूपसंस्काराभावादित्यस्यार्थोऽस्तु। तस्य सूत्रान्तरालाभे उपलक्षणत्वं मास्तु। संस्कारपदं समवायपरमिति, "समवायेचे" ति पाणिनिसूत्रादपि ज्ञायते। अतः समवायपदमिव संस्कारपदमपि पारिभाषिकं ग्राह्यम्। दर्शितपूर्वन्यायवार्तिकग्रन्थे, 'सत्यपि द्रव्यत्वे महत्त्वे' इति सूत्रखण्डानुद्धारात उपस्कारकृद्व्याख्याततत्वाच्च तत्सत्त्वं दुर्निश्चयम्। अस्ति चेत्--द्रव्यत्वे इत्यस्य अनेकद्रव्यवत्त्वे इत्यर्थ आश्रयणीयः। यद्वा द्रव्यत्व इति वायौ प्राग्द्रव्यत्वसमर्थनस्य कृतस्य स्मारणम्। महत्त्व इत्यनेकद्रव्यवत्त्वस्फोरणमित्येवं क्लेशेन वर्णनीयम् ॥ ८ ॥

नन्वणुर्नोपलभ्यताम् । तद्गतं रूपं किं नोपलभ्यते ? तत्राह—

९. **अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः ॥ (१६७)**

अनेकं भूयस्संख्याकं द्रव्यं यस्य तदनेकद्रव्यं त्रसरेण्वादि । तत्समवायात् । रूपस्य विशेषः अनुद्भूतरूपव्यावृत्तो धर्मः अनुभवसिद्धः, यद्विषये न्यायभाष्यम् (३–१–३५) "यद्भावात् कचिद्रूपोपलब्धिः, यदभावाच्च द्रव्यस्य कचिदनुपलब्धिः स रूपधर्म उद्भवसमाख्यातः" इति । उपलब्धिरूपकार्यान्यथानुपपत्तिकल्पितं वैलक्षण्यं तदिति यावत् । तथाच रूपप्रत्यक्षे अनेकद्रव्यसमवायविशिष्टो रूपगतोद्भवः कारणम् । न चानेकद्रव्यसमवायोऽणुरूपे इति भावः ॥ ९ ॥

एवं रसनादिना परमाणुरसाद्यनुपलब्धिरपि अनेकद्रव्यसमवायविशिष्टतत्तद्गतोद्भवरूपधर्माभावादेवेति ख्यापयितुमाह—

१०. **[ए]तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥ (१६८)**

उद्भवाभावादेव पाषाणादौ रसगन्धयोः; प्रभादौ स्पर्शस्य चानुपलब्धिरिति रसाद्युद्भवोऽपि हेतुरिति ॥ १० ॥

ननु परमाणुतद्गतरूपादेरनुपलम्भेऽपि द्व्यणुकतद्गुणानुपलम्भः कथम् । तत्र हि रूपादावनेकद्रव्यसमवायः उद्भवश्च स्तः । एवं चक्षुरादीन्द्रियाणां तद्गुणानाञ्च कुतो न ग्रहणम् । रूपग्राहके चक्षुषि रूपौत्कट्यस्य स्पर्शादिग्राहकत्वगादौ च स्पर्शाद्यौत्कट्यस्य, तथा अनेकद्रव्यसमवायस्य च निर्विवादत्वात् । एवं निदाघोष्मादौ रूपस्य, पाषाणादौ रसगन्धयोः, प्रभादौ स्पर्शस्य चानुपलम्भः कथम् । तत्रतत्र किञ्चिद्गुणोद्भवबलेन सकलगुणोद्भवस्याविशेषादनुमानादित्यत्राह—

**११. तस्याभावादव्यभिचारः ॥ (१६९)**

द्व्यणुकेऽणुद्रव्यवत्त्वसत्त्वेऽपि विवक्षितरीत्या अनेकद्रव्यवत्त्वस्याभावादव्यभिचारः । इन्द्रियरूपादावुत्कटत्वे सत्यपि उद्भवो नाङ्गीक्रियते इत्युद्भवाभावादव्यभिचारः । तदुक्तं न्यायभाष्ये ३-१-३९; ३-१-७० । निदाघोष्मादौ च फलबलादेकगुणोद्भवोऽन्यगुणानुद्भवश्च एष्टव्य इति तत्राप्युद्भवरूपकारणाभावादव्यभिचार इति ।

गुरुत्वस्य महद्गतस्य कुतो न प्रत्यक्षमिति शङ्कापरिहारार्थमिदं सूत्रमिति तु न । न हि तत्रोद्भूतरूपत्वाद्यभावेनाप्रत्यक्षत्वमुपपाद्यम्, किंत्वयोग्यत्वादेव । अन्यथा योग्यत्वे तत्रोद्भूतरूपत्वाद्यभावेऽपि संख्यापरिमाणादिन्यायेन प्रत्यक्षापत्तेरिति ॥ ११ ॥

नन्वेवमणौ तद्रूपादिप्रत्यक्षायोगेऽपि संख्यापरिमाणादिप्रत्यक्षं स्यादित्यत्राह—

**१२. संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि ॥ (१७०)**

रूपिद्रव्यसमवायादिति । रूपचाक्षुषत्वे तत्समानाधिकरणं संख्यादिकमपि प्रत्यक्ष्यते । चाक्षुषज्ञाने सर्वत्र रूपभानस्य नियतत्वात् । तथाचोक्तयुक्त्या रूपस्याणुगतस्यानुपलम्भात् संख्यादिकमपि न गृह्यते । तच्चाक्षुषं प्रति अनेकद्रव्यसमवायावच्छिन्नोद्भूतरूपस्यैकार्थसमवायसंबन्धेन कारणत्वादिति । चकारो गुणान्तरस्य स्नेहादेः पृथिवीत्वादिजातेश्च संग्रहार्थः । अत्र विशिष्य चाक्षुषाणीत्युक्तिः रसनादीन्द्रियाणां

---

उप. सू. ११. तस्य—रूपत्वस्य उद्भवस्य चाभावात् गुरुत्वं न प्रत्यक्षम् बाह्यैकैकेन्द्रियग्राह्यत्वे रूपत्वाद्यन्यतमस्य अव्यभिचारात्—नियमात् ।

रसादिमात्रग्राहकाणां द्रव्याग्राहकतया संख्यादिग्राहकत्वाभावात्। यद्यपि त्वगिन्द्रियं द्रव्यग्राहकमिति तदप्यत्रोपलक्ष्यमेव—अथापि जालसूर्यमरीचिस्थतया दृश्यमानस्य त्रसरेण्वादेरपि त्वाचप्रत्यक्षाननुभवेन परमाणुत्वाच्चप्रत्यक्षप्रसक्त्यभावात् तत्संख्यादौ चाक्षुषप्रत्यक्षस्यैवाऽऽशङ्कया तत्परिहारानुसारेण चाक्षुषाणीत्युक्तिः ॥ १२ ॥

संख्यादेश्चक्षुर्योग्यत्वमात्रेण रूपमानाभावेऽपि संख्यादिचाक्षुषस्वीकारे नीरूपेषु वाय्वादिष्वपि तच्चाक्षुषं स्यात्। अतः तदभावात् स नियमः स्वीकार्य इति दर्शयितुमाह—

* १३. अरूपिष्वचाक्षुषत्वात् (पाणि) ॥ (१७१)

अत्र अरूपिष्वचाक्षुषत्वादिति व्योमवतीपाठः। तथाच पूर्वसूत्रशेषमिदम् ॥ १३ ॥

एवं परमाणुतत्समवेतयोरग्रहणमुक्तम्। अथ समवेतसमवेतस्याग्रहणमपि तुल्ययुक्त्येति मनसिकृत्याऽऽह—

**१४. एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् ॥ (१७२)**

एतेन रूपरसगन्धस्पर्शेषु महद्गतेषु तत्तदिन्द्रियजन्यज्ञानव्युत्पादनेन, गुणान्तरेषु कर्मणि च चाक्षुषे उक्तरूपकारणवर्णनेन च गुणगतयोर्गुणत्वस्य भावाख्यायास्सत्तायाश्च सर्वेन्द्रियं ज्ञानमपि अनेकद्रव्यसमवेतसमवायादिति सिद्धमित्यर्थः। अत्र संख्यादेर्धर्मान्तरस्य चाक्षुषत्वोक्त्या रासनत्वाद्यभावावगमनात् तद्वत् सत्तागुणत्वयोरपि रासनत्वाद्यभावो मन्येत। न च रसत्वादेरपि तदभावः किं न मन्यत इति शङ्क्यम्—तस्य चक्षुरादिनाऽनुपलम्भादगत्या रासनत्वादेरेव स्वीकार्य-

त्वादिति । तन्मतिपरिहारार्थं स्पष्टमुच्यते सर्वेन्द्रियमिति । सर्वमिन्द्रियं कारणतया ऽस्य तत् । संख्यादेः रसनाद्यग्राह्यत्वाभिप्रायेऽपि रसादेः रसनादिग्राह्यत्वस्योक्ततया रसत्वादेरपि तद्ग्राह्यताया एव स्वीकार्यतया च तद्वदेव, यो गुणो यदिन्द्रियग्राह्यः तन्निष्ठा जातिरपि तद्ग्राह्येति न्यायेन सत्तागुणत्वयोरपि रसादिनिष्ठत्वेन रूपेण रसनादिग्राह्यत्वमस्त्ये-वेति भावः ॥ १४ ॥

तत् सिद्धम्---परमाणुतद्गुणादेरनुपलब्धिः सामग्र्यभावात् ; न तु वस्त्वभावात् । सत्यामेव सामग्र्यामनुपलब्धिरेवाभावसाधिका । सैव योग्यानुपलब्धिरित्युच्यते । अतोऽनुमानेन तत्सिद्धिर्निर्बाधेति पृथिव्युदकज्वलनपवनपरमाणवः सन्ति नित्या इति ॥

अणुतद्गुणसंसिद्धिः, तदर्थेऽध्यक्षसंविदः ।
योग्यायोग्यविवेकश्च तुरीयाद्ये विधीयते ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने
चतुर्थेऽध्याये प्रथममाह्निकम् ॥

---

अथ चतुर्थे द्वितीयमाह्निकम् ।

उक्तं परमकारणद्रव्यम् । अथ कार्यद्रव्यं द्वितीये निरूप्यते । तत् विभागार्हत्वात् विभज्य निर्दिशति---

**१. तत् पुनः पृथिव्यादिकार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम् ॥**

तत् "तस्य कार्यं लिङ्गम्" इति सूत्रे कार्यमिति लिङ्गतया प्रकृतं भूतचतुष्टयकार्यद्रव्यं प्रत्येकं त्रिविधमित्यर्थः । परमाणूनां महा-

प्रलये सर्वमुक्तावपि सत्त्वात् भोगविषयत्वं नेष्टमिति कार्येति। "चेष्टेन्द्रियार्थाश्रयश्शरीरम्" इति न्यायसूत्रे शरीरलक्षणम्। इन्द्रियलक्षणं विषयलक्षणञ्च लक्षणावल्यां न्यायाचार्यैरुक्तम्—"शरीरसंयुक्तमपरोक्षप्रतीतिसाधनमतीन्द्रियमिन्द्रियम्— ज्ञानकारणजन्यत्वरहितज्ञानत्वमपरोक्षत्वम्। प्रतीयमानतया भोगसाधनं विषयः" इति। अत्रेन्द्रियलक्षणे प्रतीतिगतमपरोक्षत्वं जातिविशेष इत्यपि सुवचम्। एवमतीन्द्रियत्वमप्यपरोक्षप्रतीत्यविषयत्वमिति। दलकृत्यं तु शरीरवारणाय शरीरसंयुक्तत्वम्। एतदिन्द्रियलक्षणघटकञ्च शरीरत्वं नेन्द्रियाश्रयत्वरूपम्। आत्माश्रयदोषात्। किंतु चेष्टाद्याश्रयत्वरूपम्। इन्द्रियसन्निकर्षेऽतिव्याप्तिवारणाय शरीरभिन्नमित्यनुक्त्वा शरीरसंयुक्तमित्युक्तिः। आत्मवारणायातीन्द्रियमिति। लिङ्गविधयाऽनुमितिसाधनजाठरानलादिवारणायापरोक्षेति। विषयलक्षणे शरीरेन्द्रियवारणाय प्रतीयमानतयेति। यद्यपि शरीरमपि प्रतीयमानम्—अथापि नियमेन प्रतीयमानत्वेन रूपेण भोगसाधनत्वं न भवतीति। तथाच भोगावच्छेदकत्वेन भोगहेतुप्रतीतिकरणतया च भोगसाधनं शरीरमिन्द्रियञ्च। तद्रूपेण भोगासाधनं कार्यद्रव्यं विषय इत्युक्तं भवति ॥ १ ॥

शरीरमन्यद्वा भौतिकं सर्वं पाञ्चभौतिकमिति वेदान्तिनिष्कर्षः। पृथिव्यादिकार्येति पूर्वयुक्त्या एकैकमपि सर्वोपादनकमिति न मन्तव्यमिति, तं निरस्यति—

**२. प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते ॥**

प्रत्यक्षाप्रत्यक्षयोः संयोगः स्तम्भपिशाचसंयोगः। स न

---

उप.सू.२. शरीरस्य पाञ्चभौतिकत्वनिरासकमिदम्। अतः शरीरमिति पूरणीयम्।

प्रत्यक्षः तत्कारणयोः स्तम्भपिशाचयोर्मध्ये पिशाचस्याप्रत्यक्षत्वात् । एवं घटगगनसंयोगादिकमपि द्रष्टव्यम् । तद्वत् पार्थिवादिद्रव्यमप्यप्रत्यक्षं स्यात्, यदि पाञ्चभौतिकम् अप्रत्याक्षवाय्वकाशोपादानकं स्यात् । ननु संयोगो द्रव्यद्वयोपादानको द्रव्यद्वयव्यासज्यवृत्तिः । तत्र किं पार्थिवादिद्रव्यस्यावयविनः संयोगवत् अप्रत्यक्षोपादानकत्वेऽप्रत्यक्षत्वमुच्यते, उताप्रत्यक्षनिरूपितव्यासज्यवृत्तित्वे । उभयमपि न युक्तम्, द्व्यणुकोपादानके तद्वृत्तौ त्रसरेणौ व्यभिचारादिति चेन्न—अप्रत्यक्षपदस्य प्रत्यक्षायोग्यार्थकत्वात् । अणुस्तु योग्य एव । अप्रत्यक्षता तु महत्त्वाभावात् । तथा—पार्थिवादिद्रव्यं न वाय्वाद्युपादानकं प्रत्यक्षत्वात्; यन्नैवम्, तन्नैवम्, यथा वायुतृणसंयोगादीत्यनुमानम् । यत् स्वरूपतः प्रत्यक्षायोग्यम्, तदुपादानकमपि प्रत्यक्षायोग्यमेव । संयोगस्तु संबन्धत्वात् संबन्धिद्वयप्रत्यक्षे सत्येव प्रत्यक्ष इति विशेषः ॥ २ ॥

ननु तेजोबन्नानां त्रिवृत्करणमेव श्रुत्युक्तम् । न्यायसाम्यात् पाञ्चभौतिकत्वं वेदान्तिनः कल्पयन्ति । तत् कामं मा भूत । श्रुत्युक्तरीत्या सर्वं पार्थिवादि तेजोबन्नोपादानकमस्तु । तेषां प्रत्यक्षयोग्यत्वाच्च न वायुतृणसंयोगादिनयः । तत्राह—

३. **गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥** (१७५)

पृथिवीजलादिभेदेन विलक्षणानां गुणानामवयविनि प्रादुर्भावाभावात् त्रैभौतिकमपि न भवतीति । अयं भावः—पृथिव्यप्तेजस्सु वर्तमानाः सर्वे विशेषगुणास्तत्र तत्र विजातीयाः । अत एव विशेषगुणत्वं तेषाम् । एवञ्च त्रितयोपादानकत्वे सुरभ्यसुरभ्यारब्धघटवदत्र कार्ये कोऽपि गुणो नोत्पद्येत । कार्ये जायमानगुणं प्रति सर्वकारणवृत्तीनामेक-

जातीयानां गुणानां कारणत्वात् । तथाचैकैकमपि कार्यद्रव्यमेकैकभूतोपादानकमेवेति ॥ ३ ॥

नन्वेवं नानाभूतोपादानकत्वस्य कार्यद्रव्येऽनङ्गीकारे शरीरादौ पञ्चभूतगुणोपलम्भः कथम्? अत एव हि, 'गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकं' (न्या. सू.) शरीरमुच्यत इत्यत्राह—

**४. अणुसंयोगस्त्वप्रतिषिद्धः ॥ (१७६)**

एकजातीयाणुकार्येऽपि द्रव्येऽन्यजातीयाणुतत्कार्यसंयोगो न प्रतिषिध्यते । अतो घटोपादानभूतमृत्पिण्डादौ जलादिमेलनवत् पार्थिवशरीरोपादानेऽपि आरम्भप्रभृति जलादिमेलनं पार्थिवादुपादानात् तत्कार्यनिर्वर्तनार्थमेव भवति । एवमर्थं संपुक्तानां द्रव्यान्तराणां गुणा एव कदाचिदनुभूयन्ते, वस्त्रादौ पुष्पादिगन्धवदिति । अणुपदं तत्कार्यस्याप्युपलक्षकम् । अल्पार्थकं वा । पार्थिवादिशरीरे जलादि स्वल्पमिति ज्ञापनाय तथोक्तिः । तुशब्दः तादृशसंयोगाधीनावयव्युत्पत्तिं व्यवच्छिनत्ति ॥ ४ ॥

अथ प्रथमनिर्दिष्टं शरीरात्मकं कार्यं विभजति—

**५. तत्र शरीरं द्विविधं योनिजमयोनिजञ्च ॥ (१७७)**

तत्र कार्यद्रव्यसामान्येऽन्तर्गतं शरीरं द्विविधमिति । अत्र योनिजं पार्थिवमेव । अयोनिजं तु पार्थिवादिभेदेन चतुर्विधम् । तत्र जलीय - तैजस - वायवीयानां वरुणमिहिरमारुतलोकादिषु प्रसिद्धिः । इह पुनः पार्थिवमेव । तत्र योनिजं शुक्रशोणितसंनिपातजम् । तद् द्विविधं जरायुजमण्डजञ्च । आद्यं नराणां पशूनाञ्च । गर्भवेष्टनचर्मपुटं

---

**उप.सू.५.तत्र-शरीरसामान्ये शरीरं पार्थिवं शरीरम् । वृक्षादिकं तु न शरीरमिति ।**

जरायुः । द्वितीयं पक्षिसरीसृपाणाम् । सरीसृपाः सर्पादयः स्थलगताः, जलस्थिता मत्स्यादयश्च । अण्डं नाम मातृशरीरान्निःसृतं प्राण्यावारकं गोलकात्मकम्, तत्र आपाकनिक्षिप्तघटादिवत् कञ्चित् कालं विपच्यमानाः प्राणिनः प्रादुर्भवन्ति । अयोनिजमनपेक्षितशुक्रशोणितम् । तद् देवानामृषीणाञ्च, उद्भिज्जवृक्षादीनाञ्च । वृक्षादीनां भाष्ये विषयेऽन्तर्भावनं जङ्गमवत् पञ्चवृत्तिप्राणाभावात् । वस्तुतः सजीवत्वात् तेषामपि शरीरत्वमागमलोकप्रसिद्धमेव ॥ ५ ॥

योनिजं निर्विवादम् । अतोऽयोनिजे देवर्ष्यादिशरीरे संदिहानान् प्रति तत्साधनार्थमथ सूत्राणि—

६. अनियतदिग्देशपूर्वकत्वात् ॥ (१७८)

सर्वस्य पञ्चम्यन्तस्य 'सन्त्ययोनिजाः' इति सूत्रेऽन्वयः । शरीराणां नानादिक्षु, दिश्येकस्यामपि नानादेशेषु जायमानतया अव्यवस्थितदिग्देशपूर्वकत्वात् यत्रयत्र शरीरारम्भौपयिकं विलक्षणपरमाणुपुञ्जसंमेलनम्, तत्रतत्र स्थले जले वा योनौ अयोनौ वा शरीरं भवितुमर्हति । न खलु पटादेस्तन्त्वादिवत् शुक्रशोणितयोः साक्षाच्छरीरोपादानत्वम् । किन्तु गर्भसंगतयोः शुक्रशोणितयोः पाकवशादापरमाण्वन्तभङ्गे सति आवश्यकान्यादृशरूपरसादिविशिष्टैः शुक्राद्यन्तर्गतैः परमाणुभिः अन्नाद्याप्यायकद्रव्यायोजितपरमाणुसहितैः शरीरोत्पत्तिरिति । तत्र नरादिशुक्रशोणितयोर्नरजातीयशरीरारम्भकपरमाणुमयत्ववत् तत्तद्व्यक्तिविशेषसंबन्धिशुक्रादेः तत्तद्व्यक्तिच्छायानुकारिशरीरारम्भकपरमाणुमयत्वमपि यद्यपि प्रायिकम्—तथापि तदन्यथाभावः, एकजातेष्वेवाङ्गप्रत्यङ्गादिष्वप्यने-

---

उप. सू. ६. अनियताः दिग्देशाः येषां परमाणूनां तत्पूर्वकत्वात् ।

कविधत्वादिकञ्च बहुत्र दृश्यत एवेति पाकवशविश्लिष्टशुक्रशोणितपरमाणुपुनर्मेलनक्रमोऽदृष्टाधीन इति अदृष्टाधीनः शरीरसन्निवेश इति सिद्धम्। अतो यादृशपाकजगुणविशिष्टाः शुक्रादिपरमाणवः कार्यारम्भकाः, तादृशपरमाणूनां शुक्रादि विनापि कचिद्दिग्देशयोः स्थितिसंभवात् तदभिज्ञः तेषां संघटनेनापेक्षितं पुण्यं देवादि, पापं नारकादि च शरीरं किं नोत्पादयेदिति ॥ ६ ॥

७. धर्मविशेषाच्च ॥ (१७९)

गर्भान्तर्वेदनीयानन्तदुःखप्रसङ्गभङ्गहेतुधर्मविशेषाच्च योनिसंबन्धं विना शरीरोत्पत्तिरिति ॥

८. समाख्याभावाच्च ॥ (१८०)

पद्मजः कुम्भजः इत्यादिसमाख्यासत्त्वादपि तद्वाच्याः देवर्ष्यादयोऽयोनिजाः प्रतीयन्ते ॥

९. संज्ञाया आदित्वात् ॥ (१८१)

यानि योनिजानि शरीराणि ब्राह्मणादिवर्ण-गवाश्वादिपशु-गरुडादिविहग—सर्पादिसरीसृपसंबन्धीनि, तत्पराया: संज्ञायाः वाचकशब्दस्य तत्तद्योनिजशरीरापेक्षया आदित्वात् पूर्वत्वात्। अयं भावः—योनिजं हि शुक्रशोणितसंनिपातजम्। शुक्रशोणिते च शरीरान्तर्गते। तथा च सर्गादौ तत्तज्जातीयप्रथमशरीरं शुक्रशोणितजन्यं न भवति, तदाधारशरीरस्य ततः प्राक् अभावात्। सर्गप्रलयौ च प्रामाणिकौ। तथाच तेषु प्रथमशरीरेष्वयोनिजेष्वेव योनिजशरीरपरब्राह्मणादिसंज्ञाऽस्तीति सिद्धं संज्ञाया आदित्वम्, अयोनिजशरीरसत्त्वञ्चेति। चकारं विना एतद्धेतोः

---

उप. सू. ७. सहकारिकारणमदृष्टमत्रोक्तम्। क्षुद्रजन्महेतुत्वधर्मोपलक्षणम्।

साध्येन संमेलनं सर्वविधयोनिजसजातीयस्त्रीपुंसरूपानेकायोनिजसाधकत्वरूपातिशयवत्तयाऽस्याद्वितीयत्वात् ॥ ९ ॥

१०. सन्त्ययोनिजाः ॥ (१८२)

अयोनिजाः सन्ति प्राणिन इति प्रतिज्ञावाक्यम् । प्रतिज्ञामात्रस्य पृथक्कारणं तत्तत्र प्रत्यक्षसिद्धत्वादनुमानमप्यनपेक्षितमिति ज्ञापनाय १०

युक्त्याऽप्यर्थं प्रसाध्य श्रुतिमपि दर्शयति—

११. वेदलिङ्गाच्च ॥ (१८३)

"ब्राह्मणोऽस्य मुखमासीत्", "स आत्मानं द्वेधाऽपातयत् । ततः पतिश्च पत्नी चाभवताम्" इत्यादेर्वेदस्य अयोनिजशरीरसद्भावरूपार्थप्रकाशनसामर्थ्याच्च सन्त्ययोनिजा इति । वेदादित्यनुक्त्वा वेदलिङ्गादित्युक्तिः ईदृशानां वाक्यानां स्वार्थे तात्पर्यं परित्यजतामर्धमीमांसकानाममीमांसकत्वप्रदर्शनार्थम् ॥ ११ ॥

एवं शरीरं निरूपितम् । इन्द्रियं बुद्धिंरूपगुणनिरूपणावसरे औचित्याद्विवेचयिष्यते । विषयास्त्वनन्ताः सर्वानुभवसिद्धा एवेति ॥

कार्यद्रव्ये त्रिधाभावोऽनेकभूतानुपात्तता ।
त्रिधा देहस्य सिद्धिश्चायोनिजस्याह्निकेऽष्टमे ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने
चतुर्थेऽध्याये द्वितीयमाह्निकम् ।

इति चतुर्थश्चाध्यायः

———

## अथ पञ्चमोऽध्यायः

एवं द्रव्यं न्यरूपि। अथ गुणो निरूपणीयः। तदनन्तरमेव कर्म। अथापि तृतीये आत्मानं भोक्तारं प्रतिबोध्य तस्य भोगायतनं शरीरं सोपादानं चतुर्थे कथयित्वा तस्य शरीरस्य कर्मसारत्वात् शरीरवता क्रियमाणं कर्तव्यञ्च इदमिति ज्ञापयितुं गुणनिरूपणात् प्राक् कर्मैवाऽऽरभते। बहुग्रन्थनिरूप्यत्वाच्च गुणानां पश्चान्निक्षेपः।

तच्च कर्म द्विविधम्, लौकिकं वैदिकञ्च। तत् क्रमेण पञ्चमेन षष्ठेन च निरूप्यते। लौकिकमपि द्विविधम्, आत्माधिष्ठितनिष्ठं तदनधिष्ठितनिष्ठञ्चेति। तयोर्विधयोरत्र क्रमेणाऽऽह्निकद्वये वर्णनम्। तत्राऽऽद्यमपि द्विविधम्—सत्प्रत्ययमसत्प्रत्ययञ्चेति। आदौ सूत्रद्वयेन सत्प्रत्ययं निरूप्यते, अथासत्प्रत्ययम्। द्वितीयाह्निके पुनः अप्रत्ययं कर्म। सन् प्रत्ययो यस्मिन् कर्मणि, तत् सत्प्रत्ययम्; ज्ञानपूर्वकप्रयत्न-जन्यमित्यर्थः। जीवनपूर्वकप्रयत्नजन्यप्राणापानसन्तानक्रियायाः प्रयत्न-जन्यत्वेऽपि न सत्प्रत्ययत्वम्, तद्विषयकज्ञानस्य प्रयत्नहेतोरभावात्। एतद्व्यावृत्त्यर्थमेव प्रयत्नपदं विहाय प्रत्ययपदघटनेन सत्प्रत्ययमित्युक्तिः। तत् कर्म अवघातोदाहरणेन व्युत्पाद्यते। अवघातोदाहरणादरणं कणभ-क्षेण तत्रैकत्रैवोत्क्षेपणादिपञ्चविधकर्मोदाहरणसौकर्यमाकलय्येति ध्येयम्। तथाहि अवहननप्रवृत्तो जनः प्रयत्नेन हस्तं प्रसार्य मुसलं गृहीत्वा हस्तं सङ्कोच्य मुसलमुत्क्षिपति। अथावक्षिपति। अवक्षिप्तञ्च मुसलमुलू-खलाभिहतमुद्गच्छति। अथ किञ्चिद्दूरमुद्गम्य अधो गच्छतीति एकत्रैव

सर्वक्रियादर्शनम्। इदमपि सत्प्रत्ययं कर्म द्विविधम्—साक्षादात्माधिष्ठितशरीरनिष्ठं चेष्टाख्यम्, परम्परया तदधिष्ठितनिष्ठञ्चेति। तत्राऽऽद्यमाह——

१. आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ (१८४)

आत्मनो हस्तेन यः संयोगः, यश्चात्मनः प्रयत्नः, ताभ्यां हस्ते कर्मेति। आत्मनः संयोगप्रयत्नाभ्यामिति विग्रहः। आत्मसंयोगस्य हस्ते सर्वदैव सत्त्वात् प्रयत्नवशादेव कर्म कादाचित्कमिति स तावत् कारणम्। स च इदं कर्मात्रोत्पादयामीत्याकारकः। समवायेन हस्ते कर्म प्रति विषयताविशेषसंबन्धेन प्रयत्नस्य कारणत्वेऽपि समवायिकारणे समवायेन प्रत्यासन्नं किञ्चित् असमवायिकारणमपेक्षितमिति आत्मसंयोगेऽपि कारणम्। अन्यदीयप्रयत्नस्यात्र हस्ते विषयतासंबन्धेन सत्त्वेऽपि कर्मानुदयात् हस्तकर्म प्रति हस्तस्वामिभूतात्मगतप्रयत्न एव कारणमिति ज्ञापयितुं प्रयत्नेऽप्यात्मेत्यस्यान्वयः। अनेन सूत्रेण मुसलग्रहणार्थं हस्तप्रसारणं मुसलसंयुक्तहस्तसङ्कोचनं तादृशहस्तोत्क्षेपणं तथाऽवक्षेपणञ्चोक्तं मन्तव्यम्। तत्र प्रयत्नाकारवैलक्षण्यात् चतुर्विधकर्मवैलक्षण्यम् ॥ १ ॥

प्रयत्नाधीनं कर्म साक्षादात्माधिष्ठिते उक्त्वाऽथ तत्संबद्धे तदाह—

२. तथा हस्तसंयोगाच्च मुसले कर्म ॥ (१८५)

तथेति आत्मसंयोगप्रयत्नाभ्यामित्यर्थः। मुसलक्रियां प्रति हस्तसंयोगोऽसमवायिकारणम्। तादृशहस्तसंयोग्यात्मगतप्रयत्नश्च निमित्तकारणम्। एवञ्च हस्तगत आत्मसंयोगोऽपि कारणं भवत्येवेति तथेत्यनेन तद्विवक्षा न दुष्यति। तथाहस्तेति समस्तपाठेऽपि प्रयत्नवदात्मसंयुक्तहस्तसंयोगादित्यर्थः। कर्मपदमुत्क्षेपणावक्षेपणोभयपरम्; अविशेषात्।

उप. २. उत्क्षेपणवद्धस्तसंयोगात् मुसले कर्म। हस्तोत्क्षेपणाधीनं मुसलोत्क्षेपणम्।

हस्तोत्क्षेपणसमकालं मुसलोत्क्षेपणमिति पक्ष एव भाष्यनैर्मर्यात्, न कर्म-साध्यं कर्मेति, न हस्तोत्क्षेपणजन्यं मुसलोत्क्षेपणम्; किंतु आत्मसं-योगात् हस्तोत्क्षेपणं हस्तसंयोगान्मुसलोत्क्षेपणञ्च युगपदिति ॥ २ ॥

अथासत्प्रत्ययं कर्म मुसलादौ निरूप्यते। तच्च नोत्क्षेपणाव-क्षेपणपदवाच्यम्। अतः तद् गमनमेवोत्पतनपतनपदव्यवहार्यम्। तत्रोत्पतनं चतुर्भिराह—

**३. अभिघातजे मुसलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥**

अवक्षेपणेच्छाधीनप्रयत्नजन्यावक्षेपणवन्मुसलप्रतियोगिक उलू-खलाभिघातः उलूखलविभागौपयिकं कर्म मुसले जनयतीति स तत्रा-समवायिकारणम्। तच्च कर्म उत्पतनम्। हस्तमुसलसंयोगस्तु न कारणम्, हस्तसंयोगस्य व्यतिरेकात् सर्वत्रोत्पतने नियमेनास्थितत्वात्। उलूखलाभिघातवशात् पुनःक्रियादर्शनात्। एवं व्यभिचार-स्थलं फलादि वेदयितुमेव सूत्रे आदिपदम्। हस्तसंयोग इति प्रयत्न-स्याप्युपलक्षणम्। पूर्वमुत्क्षेपणवर्णने मुसलकर्मणः प्राक् हस्तकर्मोक्तम्। हस्तसंयोगाधीनत्वान्मुसलक्रियायाः। असत्प्रत्यये तु मुसलसंयोगाधीना हस्तक्रियेति मुसलकर्म प्रागुच्यते ॥ ३ ॥

**४. तथाऽऽत्मसंयोगो हस्तकर्मणि ॥** (१८७)

उत्पतनरूपेऽस्मिन् असत्प्रत्यये हस्तकर्मणि आत्मसंयोगः सन्नपि अकारणम्। तथेत्यस्य कारणमित्यर्थः। व्यतिरेकादित्यप्यन्वेति। यद्यात्मसंबन्धो हस्तस्य कदाचित् अपेयात्, तदापि सति हस्तमुसल-संयोगे मुसल इवात्राप्युत्पतनं संभवेदेवेति ॥ ४ ॥

तर्हि हस्तोत्पतने किं निमित्तम्? तत्राह—

५. अभिघातान्मुलसंयोगाद्धस्ते कर्म ॥ (१८८)

उलूखलाभिघातः संयोगविशेषो मुसलगतः । स निमित्तकारणम् । न तु प्रयत्नः; तद्व्यतिरेकात् । हस्तमुसलसंयोगश्चासमवायिकारणम् । भाष्ये तु अभिघातस्य निमित्तत्वं नोक्तम् । किंतु अभिघातजन्य-मुसलोत्पन्नप्रथमक्रियाजन्यो मुसलनिष्ठो वेगो निमित्तमिति प्रागुक्त्वा ततः, अभिघातात्पूर्वमवक्षेपणकाले मुसलस्थितो वेग एवाभिघातकालेऽ-प्यविनष्टः मुसलोत्पतनसमकालं हस्तोत्पतनं करोतीत्युक्तम् । अवश्यं हस्तोत्पतनसंतानगतद्वितीयाद्युत्पतनेषु वेगवन्मुसलसंयोग एव हेतुरिति प्रथमेऽपि स एव वेगो हेतुरिति । एवमपि तस्य पूर्वमेव स्थितस्य वेगस्याभिघातानन्तरकालावच्छिन्नस्यैवोत्पतनहेतुत्वात् सूत्रे अभिघाता-दित्युक्तमिति द्रष्टव्यम् ॥ ५ ॥

नन्ववघातकाले प्रायश उरश्शिरःप्रभृत्यवयवेष्वपि कर्म जायते। तत्र न प्रयत्नः, न वा मुसलसंयोगः कारणमित्यत्राह—

६. आत्मकर्म हस्तसंयोगाच्च ॥ (१८९)

आत्मशब्दः शरीरपरः । अध्यात्मं शरीरावयवान्तरेषु तदा यत् कर्म, तत् उत्पतनौपयिकवेगवन्मुसलसंयुक्तहस्तसंयोगादिति । चकारेण हस्तसंयुक्तसंयोगादिकमपि दर्शयति । एवमत्र चकारेण अवघातकाले क्वचित् पादयोः पर्यायेण तिर्यगुन्नमने, वाचिकाविर्भवनादौ च प्रयत्न-स्यापि कारणतया प्रवेशोऽस्तीति सूच्यते ॥ ६ ॥

एवमुत्क्षेपणस्थानापन्नमुत्पतनमुक्तम् । अथ तत्रैवावक्षेपणस्थाना-पन्नं पतनमाह—

---

उप. सू. ५. अभिघातात् - अभिघातप्रयोज्यात् वेगात् हस्ते कर्म।

**७. संयोगाभावे गुरुत्वात् पतनम् ॥ (१९०)**

उत्पतितं मुसलं विधारकप्रयत्नवदात्मसंयोगाभावे गुरुत्वरूपासमवायिकारणवशात् पतति । एवं वृन्तादिसंयोगाभावे फलादिकमपि । यद्यप्युत्पतनकालिकस्य वेगस्य पतनप्रतिबन्धकस्याभावात् मुसलं पततीति संयोगवत् वेगोऽपि वक्तव्यः—अथापि पूर्वं वेगस्य कारणत्वं नोक्तम् ; किंतु अभिघातरूपसंयोगस्यैवेति अत्रापि तन्मात्रोक्तिः । वक्ष्यते च वेगस्य प्रतिबन्धकत्वमन्तिमसूत्रे । प्रयत्नादिरपि संयोगद्वारैव पतनप्रतिबन्धकः इति तदनुक्तिः । तत्राऽऽद्यं पतनं गुरुत्वमात्रात् । उपरितनं तु सर्वं गुरुत्ववेगोभयहेतुकमिति गुरुत्वादित्युक्तम् । न्यायवार्तिकेऽपि (२–२–१४) एवमेव सूत्रपाठः ॥ ७ ॥

न केवलं पतने, उत्क्षेपणादावपि गुरुत्वं कारणम्; अग्निवाय्वोरुत्क्षेपणाभावात् । अत एवोक्तं श्रीकवितार्किकसिंहैः, "गौरवाद्दूरवान्तम्" इति । अत्र एव च भाष्यम्—, "प्रयत्नं गुरुत्वञ्चापेक्षमाणादात्महस्तसंयोगात् हस्ते कर्म भवति" इत्यादि । क्वचित् गुरुत्वाश्रयसंयोगोऽपि पतनकारणम् । अत एव गुरुद्रव्योपश्लिष्टाग्नितुलापटलकादेः पतनमिति न्या. वा. २–१–३३ । एवं गुरुत्वस्य सर्वत्र कारणतया गुरुत्वादूर्ध्वगमनं तिर्यग्गमनं वा क्षिप्ततोमरादिष्विव सर्वत्र कुतो नेत्यत्राह—

**८. नोदनविशेषाभावान्नोर्ध्वं न तिर्यग् गमनम् ॥ (१९१)**

तिर्यगूर्ध्वञ्च गमयितुमनुकूलं हस्तेन नोदनं तोमरादौ यल्लक्ष्यते, तत् मुसले नास्ति । तादृशविशेषाभावे गुरुत्वस्य पतनजनकत्वं स्वभाव इति । नोदनं संयोगविशेषः ॥ ८ ॥

---

उप सू. ७. संयोगवेगप्रयत्नानां प्रतिबन्धकानामभावे गुरुत्वात् पतनम् ।

उप. सू. ८. ननु सति गुरुत्वे क्षिप्तस्य लोष्टादेः कथं न पतनमित्यत्राह नोदनबलादूर्ध्वादिगमनमिति ।

नोदनविशेषे हेतुमाह—

**९. प्रयत्नविशेषान्नोदनविशेषः ॥ (१९२)**

यद्दिगभिमुखं कर्म तोमरादावपेक्षितम्, तद्दिक्प्रत्यनीकदिगवच्छेदेन संयुक्तेन हस्तेन तद्वस्तु नुद्यते, तिर्यगिदं प्रेरयेयम्, ऊर्ध्वमिदं प्रेरयेयमिति वा प्रयत्नेनेति । नोदनविशेष इति विशेषपदेन प्रयत्नानधीनमपि नोदनमस्तीति ज्ञाप्यते ॥ ९ ॥

नन्वेवं प्रयत्नाधीननोदनायत्तं यत् ऊर्ध्वाभिमुखं कर्म, तत् किमुत्क्षेपणम्, आहो गमनम् ? तिर्यगभिमुखं तु कर्म गमनमेव, विभागान्तराप्रविष्टत्वादित्यत्राह——

**१०. नोदनविशेषादुदसनविशेषः ॥ (१९३)**

नोदनस्य विशेषात् प्रयत्नाधीनत्वरूपात् उदसनम् उत्क्षेपणं नाम विशेषो भवति । अयं भावः—वायुना प्रवाहेण च तिर्यगिव, अग्न्यादिना यत् ऊर्ध्वं कर्मोत्पाद्यते, तद् गमनमेव नोदनविशेषात् । अन्यादृशनोदनविशेषजन्यं पुनर्न गमनान्तर्भूतम् । किंतूत्क्षेपणमिति ॥ १० ॥

**११. हस्तकर्मणा दारककर्म व्याख्यातम् ॥ (१९४)**

दारको बालकः । यदा दारकोऽज्ञातक्रीडाविधिरपि गोलिकां गोलिकान्तराभिमुखं प्रेरयति, तदाऽपि प्रयत्नवदात्मसंयोगात् गोलिकायां भ्रमणरूपं कर्म । तदधीनसंस्कारात् गोलिकान्तराभिघातपर्यन्तं कर्मेति । एवं डोलिकायां शयानस्य शिशोर्हस्तपादादिचालनं तदधीनतत्संयुक्तद्रव्यचलनादिकञ्च द्रष्टव्यम् । तत्र प्रौढस्येव बालस्य तावान् विवेको

---

उप. सू. ११. बालकर्म न प्रयत्नपूर्वकम्, नापि पुण्यादिहेतुः ।

यद्यपि प्रयत्नहेतुर्न भवति, तथापि संमुग्धाकारः प्रयत्नोऽस्त्येवेत्यनेन विशेषेणैतत्सूत्रकरणम् ॥ ११ ॥

अवक्षिप्तस्य मुसलसलिलादेः अन्यत्राभिघातादिना उत्पतनं प्रवाहादौ तिर्यग्गमनञ्चासत्प्रत्ययं कर्म पृथ्वीजलकृतमुक्तप्रायम्। अथ प्रत्ययप्रसक्तिस्थलेषु अग्निवायुकृतमसत्प्रत्ययं कर्माह— अप्रत्ययं त्वनन्तराह्निकविषयः।

**१२. तथा दग्धस्य विस्फोटने ॥** (१९५)

पाकादौ प्रवृत्तः पुरुषोऽग्निमङ्गुल्यादिना स्पृशति। स्वाधिष्ठिते काष्ठे चाग्निं निक्षिपति। तत्र दाहाक्रान्तस्याङ्गुल्यादेः काष्ठादेश्च यद् विस्फोटनं ईषदवयवनिष्क्रमणं स्फोटाद्याकारेण, यद्वा विदारणम्, तत्राग्निसंयोगपर्यन्तं सत्प्रत्ययं कर्म, ततःपरमसत्प्रत्ययमेव साक्षात परम्परया वाऽऽत्माधिष्ठितगतमिति। एवमतिदृढोपलमणिवज्रादेः प्रयत्नेन दाहेपि द्रष्टव्यम् ॥ १२ ॥

**१३. यत्नाभावे प्रसुप्तस्य चलनम्** (१९६)

देहे यत्नपूर्वं चलनं सत्प्रत्ययं प्रसिद्धम्। प्रसुप्तस्य तु तदर्थप्रयत्नाभावे यच्चलनम्, तत् अन्तरूष्मरूपतेजोभिघाताद्वा आभ्यन्तरवायुसंयोगाद्वा भवतीति ॥ १३ ॥

वायोः शरीरचलनहेतुत्वे निर्विवादस्थलं दर्शयति—

**१४. तृणे कर्म वायुसंयोगात् ॥** (१९७)

तृणमपि हि चेतनाधिष्ठितत्वाच्छरीरमेव। एवमपि तत्र न कदापि चलनार्थः प्रयत्नः : ततस्तत्र वायुसंयोग एव चलनहेतुः। तथा प्रसुप्तदेहादावपीति ॥ १४ ॥

---

उप. सू. १२. आततायिना दग्धस्य पुरुषस्य विस्फोटने सति आततायिवधार्थं कर्म न पुण्यपापहेतुः।

ननु तस्करनिश्चयार्थमभिप्रहिताः मणयस्तस्करं गच्छन्ति अयस्कान्ताभिमुखं स्थापितश्चायः तमभिसर्पति। तथा तृणं तृणकान्ताभिमुखम्। तत्र सर्वत्र न हस्तादेर्वा भौतिकस्य वा नोदनादिकं लक्ष्यत इति किंकारणकं तदित्यत्राह—

१५. **मणिगमनं सूच्यभिसर्पणमित्यदृष्टकारणकम् ॥ (१९८)**

सूची अयश्शलाका। इतिशब्देनान्यदपि प्रथमत आत्माधिष्ठितं सत् अभिमुखं स्थापितं तृणादिकं गृह्यते। यत्तु कर्म सर्वथाऽनधिष्ठितनिष्ठम्, यथा अग्न्यूर्ध्वज्वलनादि, तत् उत्तराह्निकस्य विषयः। अदृष्टेति वस्तुस्वामिनः, तस्करादेर्वा कस्यचित् तत्तत्फलोपभोक्तुरदृष्टं पुण्यपापात्मकं गृह्यते ॥ १५ ॥

अतिदूरं गच्छति शरादौ प्रथमकर्मण्येव पुरुषकृतं नोदनं कारणम्। उत्तरकर्मसंतानन्तु न प्रयत्न–हस्तसंयोग–पुरुषादृष्टकारणकः, किन्त्वन्यकारणक इति वक्ष्यन् तत्र नोदनजन्यं प्रथमं कर्मैव आ लक्ष्यवेधमनुवर्तत इत्येककर्मव्यक्तिभ्रमं वारयति—

१६. **इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ॥ (१९९)**

अयुगपत्संयोगविशेषाः क्रमिकाः आकाशीयतत्तत्प्रभामण्डलप्रदेशानुयोगिकत्वरूपविशेषवत्तया विभिन्ना उत्तरसंयोगाः कर्मान्यत्वे कर्मणां भिन्नभिन्नत्वे हेतुर्लिङ्गम्। कर्मण उत्तरसंयोगनाश्यतया उत्तरदेशानाञ्च विभिन्नतया क्रमिकतत्तद्देशसंयोगनाश्यानि कर्माण्यनेकानि स्वीकार्याणि। इषुरालक्ष्यवेधमनेककर्मवान् विभिन्नक्रमिकोत्तरसंयोगवत्त्वादिति। संयोगजसंयोगस्य प्रथमसंयोगात्पश्चादुत्पत्तावपि न तस्य कर्मान्यत्वसाधकतेति विशेषपदम्। यद्यपि मुसलोत्पतनेऽप्यनेकं कर्मास्ति, अथाप्यतिदूरगामित्वात् इषौ तदुपपादनं सुकरमिति तदादरः ॥ १६ ॥

एवं स्थापितेषूत्तरकर्मसु यत् कारणम् , तदाह—

**१७. नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरञ्च ॥ (२००)**

संस्कारात् वेगाख्यात् इषुनिष्ठादसमवायिकारणात् उत्तरं द्वितीयं कर्म । तथोत्तरमुत्तरञ्चेत्यनेन, उत्तरसंयोगेन कर्मनाशसमये पुनरन्यत् कर्म पूर्वकर्मजनकेन तेनैव वेगेन क्रियत इत्यालक्ष्यवेधमेक एव वेग इति दर्श्यते । न्यायवार्तिका (२ - २ - ३०) दौ वेगभेद एवोक्तः— पूर्वपूर्वकर्मजनितवेग उत्तरोत्तरकर्मकारणमिति । मीमांसकास्तु गतिसंतानातिरिक्तं वेगं न मन्यन्ते (किर-४१)। सूत्रकारः, "कर्म कर्मसाध्यं न विद्यत" इत्युक्त्वा, "संयोगविभागवेगानां कर्म समानम्" इति वदन् प्रागेव कर्मापेक्षया वेगमतिरिक्तं व्युदपीपददिति ध्येयम् ॥ १७ ॥

ननु लक्ष्यप्रतिहतत्वात् इषुरुपरि न गच्छतीति भवतु तावत् । कदाचिन्मध्य एव शरपातः कथमित्यत्राह—

**१८. संस्काराभावे गुरुत्वात् पतनम् ॥ (२०१)**

यतो मध्ये पतति, अतः तावत्कालानुवृत्त एव वेगः तत्र जातः; तत एव मध्ये नष्ट इति कल्प्यते । एवञ्च प्रतिबन्धकाभावात् गुरुत्वं पतनं करोति । पूर्वं संयोगाभावात् पतनमुक्तम्; अत्र वेगाभावात् । कचित् प्रयत्नोऽपि पतनप्रतिबन्धकः—अथापि स तदाश्रयात्मसंयोगद्वारैव तथेति संयोगेत्यनेनैव तदुक्तिरिति भाव्यम् ॥ १८ ॥

कर्म प्रयत्नसंयोगगुरुत्वादृष्टवेगजम् ।
सदसत्प्रत्ययं प्राह लौकिके पञ्चमाद्यतः ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने
पञ्चमेऽध्याये प्रथममाह्निकम् ॥

## अथ पञ्चमाध्याये द्वितीयमाह्निकम्

अथ आत्मानधिष्ठितद्रव्यगतकर्मविचारः। तादृशेषु नवसु द्रव्येषु कुत्र कर्म, कथमिति विचार्यते। तत्राऽऽदौ पृथिव्यामाह—

**१. नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म ।** (२०२)

नोदनादभिघातादिति क्वचित्पृथक्पदतयाऽपि पाठोऽस्ति। ऐकपद्ये समाहारादेकवचनम्। तेन यथा नोदनस्याभिघातस्य च पृथक्पृथक् कारणत्वम्, तथा संभूयापीति ज्ञाप्यते। नोदनं नाम यः संयोगः संयोगिनोर्द्वयोर्मिथो विभागहेतुं कर्म न जनयति, यद्वा शब्दाहेतुः सः। तद्विपरीतोऽभिघातः। क्वचिद्वायुजलादिनोदनवशाज्जीर्णपर्णादौ कर्म, निष्ठुरे भूतले पततः फलादेः अभिघातात् कर्म, रोधोरूढे महत्यनोकहे प्रवाहकृतनोदनात् प्रभञ्जनाभिघाताच्च मिलितात् पतनरूपं कर्म। क्वचित् संयुक्तसंयोगात् यथा—रूप्यकस्यैकस्य फलकादौ निक्षिप्तस्यैकस्मिन् पार्श्वे संयोजितं पादरूप्यकादि तद्रूप्यकस्य पार्श्वान्तरे पादरूप्यकान्तराभिहन्यमाने पृथक् चलति; रूप्यकं तु न चलति। तथा गृहपटलप्रासादादौ वृक्षादिपतनवशादभिहते सति अन्तर्गृहं पटलप्रासादादितस्तृणशकलादिकं पततीति। चकारो यावत्संभवं संयुक्तसंयोगपरम्पराग्राहकः। पर्णतृणादिकं सर्वं पार्थिवमेवेति युक्तमेवैषामात्मानधिष्ठितानामिह पृथिवीकर्मविषयोदाहरणत्वम्। भाष्यकारास्तु स्फुटत्वात् पङ्करूपपृथिवीमुदाहृत्य नोदनादिवशात् कर्मोपपादयन्ति ॥ १ ॥

महापृथिव्यामपि कर्म दर्शयति—

२. तद् विशेषेणादृष्टकारितम् ॥ (२०३)

विशेषः आधिक्यम् । वैशिष्ट्ये तृतीया । विशेषविशिष्टम्—अतिशयितं तत् पृथिव्यां कर्म भूकम्पादि अदृष्टकारितम् । अदृष्टवदात्मसंयोगस्तत्रासमवायिकारणम् ॥ २ ॥

एवमचलायां कर्म दर्शितम् । चलेषु त्रिषु भूतेषु एकं निम्नगामि ; परमूर्ध्वगामि ; अन्यत् तिर्यग्गामि । तत्र प्रथममधिकृत्याह—

३. अपां संयोगाभावे गुरुत्वात् पतनम् ॥ (२०४)

धूमज्योतिस्सलिलमरुत्संनिपातरूपस्तनयित्नुगतानामपां वाय्वभिघातादिना स्तनयित्नुसंयोगस्याभावे आपनिते पतनं भवति । तत्र न जलगतमसाधारणं द्रवत्वं हेतुः । किंतु पार्थिव इव गुरुत्वमेव । तस्यैव पतनरूपे कर्मणि हेतुतायाः क्लृप्तत्वात्, सत्त्वाच्च ॥ ३ ॥

४. द्रवत्वात् स्यन्दनम् ॥ (२०५)

यत्तु पतितानामपां निम्नदेशाभिसर्पणरूपं स्यन्दनम्, तत् द्रवत्वादसमवायिकारणात् ॥ ४ ॥

नन्वपां स्यन्दनं चेत् स्वभावः, कथमारोहणम् । ग्रीष्मादौ तिग्मांशुगभस्तिद्वारा नभःस्थलं ह्यारोहन्त्यापः । आह च महाकविः, "सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः" (रघु. १०-५८,) इति । तत्राह—

* ५. नाड्यवायुसंयोगादारोहणम् ॥ (२०६)

नाडीषु सूर्यकिरणेषु संबद्धेन वायुना कृतात् नोदनादपां बाष्पभूतानामारोहणं भवति। 'नाड्यो वायुसंयोगादारोहण' मिति सूत्रपाठे कारयन्तीति शेषपूरणक्लेशात् पूर्वापरशैल्या च पूर्वनिर्दिष्टपाठो ज्यायान् ॥५॥

यत् पृथिव्यां प्रथमसूत्रोक्तम्, तदप्यत्र कचिदित्याह—

६. **नोदनापीडनात् संयुक्तसंयोगाच्च ॥ (२०७)**

आपीडनमभिघातः । कूपादावपां प्रस्रवणनोदनवशादारोहणम् । काष्ठपाषाणाद्यभिघातवशादाकाशं प्रति उत्पतनम् । तत्रैव साक्षात्प्रस्रवणादिसंयुक्तजलांशानां संयुक्तसंयोगादारोहणमिति ॥ ६ ॥

ननु वृक्षालवालेषु सिक्ता आपः न तावत् पुरुषैरिव वृक्षैः पीयन्ते । भूम्यन्तर्गच्छन्त्यश्च ता दृश्यन्ते । सेचनाभावे च वृक्षाणां शोचनात् अवश्यमपां मूलात्प्रभृति शाखाग्रं यावत् आरोहणं स्वीकार्यम् । न च वायुनैव तत्राप्यारोहणम्, तथा क्रियमाणेऽपि सेचने कतिपयवृक्षशोपदर्शनात् । वायोरारोपकत्वे च क्वचित्तद्भङ्गे मानाभावादित्यत्राह—

७. **वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥ (२०८)**

वृक्षलतावनस्पत्यादिष्वभितो व्यापनमपामदृष्टकारितम् । अनेन वृक्षेण एवंशाखापर्णफलादिमता एतावत्कालस्थायिना भाव्यमिति भोक्तॄणां वृक्षरूपचेतनस्य चादृष्टमुपजीव्य नियमः कृतोऽस्ति । अतस्तत्रादृष्टं कारणमिति । अत्र अदृष्टकृतमित्यप्रयुज्य अदृष्टकारितमिति प्रयोगात् अदृष्टमपि वृक्षगताभ्यन्तरवायुसंयोगेनैव भूम्यन्तर्गतरसानयनं कारयतीति ज्ञाप्यते । एवं पूर्वत्रापि । अस्ति चात्र इतिशब्दोऽपि । तस्य उक्तवायुसंयोगेनेत्यर्थः ॥ ७ ॥

ननु मेघादापो द्रवाः यथा धारारूपेण पतन्ति, तथा करकात्मनाऽपि । कथमिदं काठिन्यं सांसिद्धिकद्रवत्वानां तासाम् । न च करकाः नापः; भूमिपातसमनन्तरमेव द्रवीभावात् । कथञ्च कठिनानां द्रवत्वमपीति जिज्ञासायामाह—

उप.सू ६. सूर्यरश्मीनां जलोर्ध्वनेतृत्वं बलवद्वायुनोदनेनापीडनात्-आस्कन्दनात् अप्सु वायुसंयुक्तरश्मिसंयोगात् ।

८. **अपां संघातो विलयनञ्च तेजःसंयोगात् ॥** (२०९)

अत्र कन्दली—"हिमकरकादौ द्रवत्वानुत्पत्तिः तत्र दिव्येन तेजसा आप्यपरमाणूनां द्रवत्वप्रतिबन्धात् । तेजस्संयोगेन द्रवत्वं प्रतिबद्धमिति आप्यद्रव्यस्य लवणस्य वह्निसंयोगेन द्रवत्वप्रतिबन्धदर्शनादनुमितम् । विलयनं तु हिमकरकादेर्भौमाग्निसंयोगात् । यत् विलयनं कठिनद्रव्यस्य तद् वह्निसंयोगादवगतम्, यथा सुवर्णादीनाम्" इति । अत्र भौमस्याग्नेरेकस्य लवणे द्रवत्वप्रतिबन्धकत्वस्य, सुवर्णादौ विलयनहेतुत्वस्य च कथनात् तद्वत् दिव्यं तेज एकमेव किमपि वैलक्षण्यं प्राप्य उभयहेतुः स्यान्न वेति चिन्त्यमस्ति । अल्पं तेजः संघातहेतुः, बलवत्तु विलयनहेतुरित्यप्याहुः । इक्षुरसः शर्करीभवति । किञ्चित्तापे सति पात्रे लग्नो भवति । अधिकतापे द्रवीभवति । संघातपदेन, 'द्रवत्वप्रतिबन्धमात्रम्; न तु वस्तुतः पृथिवीवत् काठिन्य'मिति दर्श्यते ॥ ८ ॥

तत्र तेजस्संयोगे प्रमाणमाह—

९. **तत्र विस्फूर्जथुर्लिङ्गम् ॥** (२१०)

तत्र मेघतेजस्संयोगे विस्फूर्जथुः साधकप्रमाणम् । स्फूर्जथुर्वज्रनिर्घोषः अशनिशब्दः । अशनिरेवात्र विवक्ष्यते । शब्दस्तदविनाभूतः । विशिष्टः स्फूर्जथुर्विस्फूर्जथुः । वैशिष्ट्यमतिशयो वृक्षादिदाहापादकतेजस्साहित्यम् । मेघो दिव्यतेजाः विस्फूर्जथुहेतुत्वादित्यनुमीयते ॥ ९ ॥

१०. **वैदिकञ्च ॥** (२११)

'तत्र लिङ्ग' मित्यनुवर्तते । 'आपस्ता अग्निं गर्भमादधीरन्'इत्यादि ॥१०॥

ननु मेघान्तर्गतज्योतिरंश एवाशनिरिति कथं ज्ञायते ? कथञ्चाशनेस्ततो जन्म ? तत्राह—

**११. अपां संयोगाद्विभागाच्च स्तनयित्नोः ॥ (२१२)**

अशनावपां संयोगोऽनुभूयते, सह वर्षबिन्दूनामपि पातात् । उपरि मेघसद्भावदशायामेवाशनिपातात् स्तनयित्नोः मेघाद्विभागोऽप्यवसीयत इत्यशनिर्मेघतेजोंश एव । एवं स्तनयित्नुना सहापः संयुज्य वियुज्यन्ते वेगवद्वायुसंघट्टनवशादिति तदा तदन्तर्गताशनितेजो निष्क्रामतीति ॥११॥

एवमपां कर्म परीक्ष्य तेजोवायुकर्मनिरूपणप्रवृत्तः तत्र पृथिवी-कर्मरीतिमतिदिशति---

**१२. पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥ (२१३)**

सामान्यतो नोदनाभिघातसंयुक्तसंयोगाद्यायतं तत्रापि कर्म ; तद् विशेषेण चादृष्टकारितमिति ॥ १२ ॥

ननु नोदनादितः कर्म जायमानं कारणानुगुण्येनानियतदिक्कं स्यात् । तेजआदौ पुनरुत्सर्गत ऊर्ध्वाद्यभिमुखमेव कर्मेति कुत इति शङ्कायां तत्रादृष्टमेव हेतुरिति वदन्, लाघवात् अदृष्टजन्यमन्यदपि कर्म आत्मानधिष्ठितसर्वभूतनिष्ठमत्राऽऽह्निके वक्तव्यमेकस्मिन्नेव सूत्रे सौकर्याय घटयति---

*** १३. अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाऽऽद्यं कर्मेत्यदृष्टकारितानि ॥ (२१४)**

अणुः पार्थिवादिपरमाणुः । तस्य मनसश्च आद्यं सर्गारम्भ-कालिकं कर्म, तथा अग्निगतमूर्ध्वदेशप्राप्त्यनुकूलज्वलनं वायुगतं तिर्यग्ग-मनमितीमानि कर्माणि अदृष्टकारितानि । न दृष्टमदृष्टम् । पुण्यपापरूपं वा भगवदिच्छारूपं वाऽन्यादृशं वा तत् यथायथम् । यद्यपि मनोऽप्यणु,

उप. सू. १२. भूकम्पाख्येन कर्मणा दिग्दाहकतेजःकर्म वृक्षादिपातन-प्रभञ्जनकर्म च व्याख्यातम् ।

तथापि तदणुत्वस्येतःपरमेव वक्ष्यमाणत्वात् स्फुटं तद्ग्रहणं दर्शयितुम् अणुमनसोरित्युक्तम्। सर्गमध्ये परमाणुकर्म वाय्वादिनोदनात् प्रयत्नवदात्मसंयोगाच्च स्यात्; मृत्पिण्डान्तर्गतेषु परमाणुष्वपि तत्संभवात्। एवं मनसोऽपि प्रयत्नवशात् कर्म सशरीरतादशायामिति आद्यमिति विशेषणम् ॥ १३ ॥

भूतचतुष्टयनिरूपणानन्तरमाकाशादौ कर्म विचार्यम्। तत्र कर्माभावस्यैवोपरि वक्ष्यमाणत्वाद्वस्तुतो मन एव शिष्यते। अदृष्टाधीनकर्मवत्त्वात् मूर्तत्वाच्च मनःकर्माप्यत्र प्रसक्तम्। तत्र यत् सन्निग्रहे मनसि कर्म, तत् आत्मसंयोगप्रयत्नाभ्यां हस्त इव भवतीति पूर्वाह्निकविषय एवेदं कर्म, न त्वत्रेति दर्शयितुमाह—

**१४. हस्तकर्मणा मनसः कर्म व्याख्यातम् ॥ (२१५)**

मनसोऽतीन्द्रियत्वात् कथं प्रयत्नविषयत्वमिति चेत्—मनोवहनाडीनां त्वगिन्द्रियवेद्यत्वमस्तीति मनोवहनाडीविषयकः प्रयत्नः कथञ्चिन्मनोविषयकोऽपि स्वीक्रियते। प्रेर्यते किलातीन्द्रियमपि चक्षुः प्रयत्नेन १४

ननु किमिति मनःकर्म प्रयत्नेन निष्पाद्यत इत्यत्र तत्फलमाह—

**१५. आत्मेन्द्रियमनोर्थसंनिकर्षात् सुखदुःखे ॥ (२१६)**

आत्मा मनसा संयुज्यते, मनः इन्द्रियेण, इन्द्रियमर्थेनेति क्रमः। एवं स्थिते मनसः पश्चान्निर्देशः मनइन्द्रियेति प्रयोगे कर्मधारयभ्रान्तिः स्यादिति; एवं मनइन्द्रियार्थेति प्रयोगे, बाह्येन्द्रियबाह्यार्थसंनिकर्ष एव सुखदुःखहेतुरिति स्यात्, न त्वान्तरज्ञानादिसंनिकर्ष इति

उप. सू. १४. मनस आद्यं कर्म पूर्वसूत्र उक्तम्। अन्यत् तत्कर्माह।
उप. सू. १५. मनसि कर्मोत्पत्तौ प्रमाणमाह।

आत्मतद्गुणसंनिकर्षेऽपि सुखोत्पत्तिबोधनाय इन्द्रियमनोर्थेति क्रमादरणम्। प्रत्यक्ष इव सुखादिविषयेऽप्यन्वयव्यतिरेकाभ्यामर्थसन्निकर्षो हेतुरितीदं नैयायिकसंमतमपीति प्रत्यक्षसूत्रे द्रष्टव्यम्। ज्ञानं विहाय सुखदुःखयोरुक्तिः ज्ञानस्याप्यन्तत इह सुखदुःखार्थत्वात्। एवं सुखदुःखमात्रप्रयोगेऽपि साक्षात् परम्परया वा संनिकर्षाधीनाः सर्वेऽप्यात्मविशेषगुणा इह विवक्षिताः।

तथाच सुखदुःखयोरनुभाव्यतया तद्धेतुसंनिकर्षस्य कर्माधीनतया मनःकर्मणि पुरुषप्रवृत्तिरर्थवतीति। यद्यपि दुःखं संपादयितुं मनः कश्चिन्न प्रवर्तयेत्। किंतु अर्थसंनिकर्षायत्तदुःखपरिहार्थं मनोऽन्यत्र व्यापारयितुं यतेत——अथापि सुखकामनया संनिकर्षे कृते दुःखमप्यवर्जनीयमापततीति सुखदुःखे इति द्वंद्वनिर्देशतात्पर्यम्। यदि तु संनिकर्षात् सुखदुःखे इत्यस्य संनिकर्षाधीनज्ञानकृतक्रियासाध्ये सुखदुःखे इत्यर्थविवक्षा, तदा विहितप्रतिषिद्धकर्मकरणफलत्वात तयोर्न किञ्चिदनुपपन्नम्॥

एवं दुःखमिश्रत्वप्रतिबोधनेन सुखस्यापि हेयतामासूच्य सदेहदशायां मनःकर्मणः प्रयत्नाधीनत्वस्थितया संपन्नं सौकर्यमादरेण व्युत्पादयति——

**१६. तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः स योगः॥**

प्रयत्नवदात्मसंयोगाद्यायत्तार्थसंनिकर्षात् खलु सुखं तत, यदविनाभूतं दुःखम्। यदि तं संनिकर्षं पुरुषो नारभेत, तदा तदनारम्भे शरीरस्य दुःखाभाव.। सशरीरोऽपि दुःखं नानुभवतीत्यर्थः। षष्ठी

---

उप॰सू॰१६॰ **मनसश्चञ्चलत्वे योगमोक्षयोरयोग इत्यत्राह। तदनारम्भे-मनसि कर्मानारम्भे, सुखदुःखानारम्भे इति वा। दुःखाभावः—दुःखस्याभावो यत्र सः।**

अवच्छेद्यावच्छेदकभावसंबन्धपरा, शरीरावच्छेदेन दुःखाभाव इति ,' सन्निकर्षात् सुखदुःखे " इति प्रागुक्ततया संनिकर्षानारम्भे सुखदुःखाभाव इति वक्तव्ये दुःखाभाव इत्येव कथनम्, दुःखसंमिश्रतया सुखमपि दुःखं भावयता दुःखाभावाय विवेकिना तदनारम्भः कार्य इति ज्ञापनाय। 'सुखदुःखाभावः' इत्यपि पाठः। ननु सशरीरस्य मनः न कथमपि निर्विषयं भवितुमर्हति विना सुषुप्त्यादिदशाम्। तत्राह आत्मस्थे मनसीति। बाह्यविषयेभ्यो विनिवर्त्य मनः आत्मविषये स्थाप्यत इति न निर्विषयत्वमिति। यद्यस्मत्प्रयत्नवशं मनः स्यात, कथमिदं यथेच्छं नियन्तुमात्मनि स्थापयितुञ्च शक्येतेति प्रयत्नवशत्वसंपन्नमिदं परमं फलमिति भावः। बाह्याभ्यन्तरसंनिकर्षानारम्भकृतो योऽयं मनस आत्मस्थितिसहितो दुःखाभावः स योगः। अत्र हि दुःखपदं पूर्वसूत्र इव ज्ञानादिसर्वगुणपरमिति दुःखाभावो नाम चित्तवृत्तिनिरोधः। स च निरोध आत्मनि मनःस्थापनपर्यन्त एव योगशास्त्रसंमत इति आत्मस्थे मनसीत्यनेन दर्शितम्। तत्र वैराग्याद्बहिर्वृत्तिनिरोधः; अभ्यासादात्मनि निरन्तरस्थितिः; स चायं योगः प्रयत्नसाध्य इत्यादि योगानुशासनतो द्रष्टव्यम्। यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिरूपेषु योगाङ्गेष्वष्टसु प्रत्याहारादिचतुष्टयमत्र स्पष्टप्रतीतम्। प्रत्याहारः=इन्द्रियाणां विषयेभ्यो विनिवर्तनम्। धारणा आत्मरूपधारणीयविषयिणी आत्मस्थपददर्शिता। गतिनिवृत्तिवाचिना स्थाधातुना स्थैर्यं ज्ञानस्य निरन्तरप्रवृत्तत्वं बोध्यत इति ध्यानसिद्धिः। आत्मन्येव तिष्ठतीत्यात्मस्थमित्यवधारणबलात् तदनारम्भपदबलाच्च ज्ञान-

ज्ञात्रादिविषयकानुव्यवसायमपि विना आत्ममात्रनिर्भासत्वलाभात् समाधिरपि दर्शितो भवति । यमनियमादिकं षष्ठे वक्ष्यते ॥ १६ ॥

एवं मूर्तेषु कर्म दर्शितम् । आकाशकालदिगात्मसु कुतस्तन्न दर्शितमिति शङ्का, 'तत्र कर्म नास्ती'ति परिहर्तव्या । तमिमं परिहारम्, मनस इदानीं प्रस्तुततया तदव्यवहितपूर्वमुद्दिष्टमात्मानमारभ्याकाशपर्यन्तेषु व्युत्क्रमेण विवक्षन् आत्मविषये पूर्वमाह—

*** १७. कायकर्मणा आत्मकर्म व्याख्यातम् ॥ (२१८)**

एतदादिसूत्रत्रयमेव मनसिकृत्य सूत्रकारोपि वक्ष्यति षष्ठे, "आत्मकर्मसु मोक्षो व्याख्यातः" इति । तदर्थस्तत्र ज्ञातव्यः । अत्र आत्मपदेन, यस्य मोक्षः शास्त्रसिद्धः स एव गृह्यते; औचित्यात्, अवतरणोक्तयुक्तेश्च ।

अत्रैवं महर्षेर्गभीरा गतिरवधानमर्हति—दिक्कालादिवत् आत्मानमपि निष्क्रियमेव निश्चिन्वानोऽप्ययं न तथा स्पष्टमाह । किंतु दिक्कालादौ कर्मसत्ताया आनुभविकत्वाभावेऽपि आत्मनो देशान्तरलोकान्तरगतागतानुभवस्य सर्वस्वीकृतत्वात्, अतएवाऽऽत्मनोऽणुत्वस्यापि कैश्चिदास्थितत्वात् सहसा निष्क्रियत्वकथनं दुष्करम् । आत्मज्ञानस्य मोक्षोपयुक्तत्वेऽपि तदणुत्वविभुत्वान्यतरनिर्धारणं नातीवोपयुक्तम् । विभुत्वमहत्त्वे चात्मनः परिमाणप्रकरणे दर्शयिष्येते । अत इह तदविज्ञायाऽऽत्मकर्म-

१७. सूत्रमिदमुपस्कारग्रन्थे क्वचिदेव मुद्रितम् । एतत्सूत्राभावे चोपस्कारवाक्यानि अनन्वितानि अस्य सूत्रस्य प्रामाणिकत्वं दृढं दर्शयन्ति । उप. आत्मकर्म —प्राणकर्म प्राणवहनाडीकर्मणा जीवनयोनियत्नवदात्मसंयोगाच्च भवति ।

विषयकशङ्कायां गूढं किञ्चित् लोकानुभवोपपादकं वक्तव्यम् । आन्तरमाशयं तु पश्चाद्विवेकी विवेचयिष्यत इति मन्यते। अत एवं गूढं किञ्चिदाह—कायकर्मव्याख्यानेनात्मकर्म व्याख्यातं भवतीति ।

यस्य मते आत्मा क्रियावान्, तद्दृष्ट्या सूत्रस्यायमर्थः—'आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्मे'ति प्रागुक्तं हि । आत्मकायसंयोगः प्रयत्नश्च कायकर्मकारणमिति तत्र दर्शितम् । अविशेषादात्मकर्मकारणमपि तदेव । तथाच प्रयत्नात् कायसंयोगाच्चात्मनि कर्मेति । आत्मनिष्क्रियत्वतत्त्वज्ञस्य तु दृष्ट्याऽयमर्थः—कायकर्मणा आत्मकर्म व्याख्यातम् । नात्मनः कर्मेति किञ्चिदस्ति । कायकर्मैवात्मकर्मत्वेन व्यवह्रियते। देशान्तरलोकान्तरगतागतानामन्वयव्यतिरेकाभ्यां कायकर्मत्वावधारणात् । अत्र मनःकर्मसूत्रादाविव हस्तकर्मणेत्यनुक्त्वा कायकर्मणेति वदन् कायकर्मविचारकं सूत्रमपि ग्राहयति । तच्च सूत्रम्, "देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः" (३. २.) इति । तेन च गमनस्यात्मन्यभावात् शरीरलाक्षणिकं देवदत्तपदमिति दर्शितम् । अतः सिद्धं शरीरकर्मैवात्मनि व्यवह्रियते; परमार्थत आत्मा निष्क्रिय इति ।

एवं मननध्यानप्राणायामादीन्यप्यात्मकर्माणि मन्तव्यानि ॥ १७॥

मुख्यमौपचारिकं वा आत्मकर्म पूर्वाह्निकविषयीभावार्हमिव प्रकृताह्निकविषयत्वार्हमपि किञ्चिदस्तीत्याह—

१८. अपसर्पणमुपसर्पणमशित पीतसंयोगाः कार्यान्तरसंयोगाश्चादृष्टात् ॥ (२१९) कारितानि

अपसर्पणं समनस्कस्यात्मनो मरणकाले शरीरान्निष्क्रमणम् । उपसर्पणं निष्क्रान्तस्याऽऽतिवाहिकशरीरद्वारा स्वर्गं नरकमन्यद्वा प्राप्य

तत्र स्वार्थक्लृप्तशरीरसंयोगहेतुः कर्म । अशितपीतसंयोगाः कर्मप्रकरणात् आत्मसंयुक्तानामात्मानुभाव्यानामशितपीतानां नानाजात्यनुरूपाणां नानाप्रकाराणां निष्पत्त्युपयोगीनि गृहक्षेत्रादिस्थिताशितपीतारम्भकावयवकर्माणि । कार्यान्तरसंयोगाः अभ्यवहारातिरिक्तविहारादिक्रियोपयोगिभोग्यभोगोपकरणानामशितपीतोपकरणादीनाञ्च नानादेस्थितानामारम्भाद्यर्थानि तत्तदवयवादिगतानि कर्माणि । यद्वा अशितपीतसंयोगाः भुक्तपीतपरिणामौपचिकोदर्यतेजःप्रभृतिगता व्यापराः । कार्यान्तरसंयोगाः प्राणापानादीनामिन्द्रियाणाञ्च यथायथं शरीरप्रदेशेषु संसर्गानुगुणा व्यापाराः । इतिशब्दः मलमूत्रवियोगाद्यनुकूलकर्मसंग्राहकः । सर्वाणीमानि अदृष्टकारितानि । आत्मानधिष्ठितद्रव्यगतकर्मनिरूपणाह्निके अपसर्पणादिकथनात् यथावस्थितमधिष्ठानं तदा नास्तीति ज्ञाप्यते । अपसर्पणादीनि कर्माणि यद्यप्यात्मकर्मत्वेन व्यवह्रियन्ते—अथापि प्राप्ताप्राप्तविवेके कृते मनआदावेव तदावसानमित्येव सूत्रकृद्दाशयः ॥

मनःकर्मप्रस्तावे मनसा करणेनात्मने साध्यं मुख्यं योग इत्युक्त्वा संप्रत्यात्मकर्मप्रकरणे आत्मना लब्धव्यं परमं फलमाह—

*** १९. तदभावे संयोगाभावोऽप्रादुर्भावः स मोक्षः ॥ (२२०)**

तदभावे तस्यादृष्टस्याभावे संयोगाभावः अशितपीतसंयोगाभावः । उदर्यादेः शान्त्या स्थितशरीरस्यैव विनाश इति यावत् । एवमदृष्टाभावे अप्रादुर्भावः । आत्मा न पुनः प्रादुर्भवति, न जायते । लब्धशरीरस्य स्थापकादृष्टाभावान्नाशः शरीरान्तरारम्भकादृष्टाभावाच्च शरीरान्तरानारम्भश्चेति । स मोक्ष इति । अयमदृष्टाभावसाध्यः शरीर-

नाशविशिष्टशरीरान्तरानुत्पादो मोक्ष इत्यर्थः। सूत्रे चकारपाठो नोपस्कारसंमतः; किंतु स इति तत्पदमेव तत्स्थाने, पूर्व "स योग" इतिवत्। नन्वनादिसंसारसंचितैरदृष्टैरेतावत्पर्यन्तमिव इतः परमपि शरीरारम्भः संभवति। तत् कथमारम्भकादृष्टाभाव इति चेत्- अत्र पूर्वोक्तं योगसूत्रमेव समाधायकम्। योगेनात्मस्थता हि प्रागुक्ता। तेन सकलधर्माधर्मविशिष्टात्मसाक्षात्कारो भवति। तस्मिंश्च सति येन योगोपायेन यस्ययस्यादृष्टस्य क्षपणं सुशकं भोगेन प्रायश्चित्तेन वा, तत्तदुपायानुष्ठाने त्वरते। सुखदुःखोपयोगीन्द्रियार्थसन्निकर्षाद्यनारम्भाच्च नापूर्वधर्माधर्मप्रसक्तिरिति सिद्धोऽदृष्टाभावः। इदमधिकृत्य षष्ठेऽपि किञ्चिद्वक्ष्यति। अत्र शरीरनाशविशिष्टशरीरान्तरानारम्भमात्रस्यापसर्पणोपसर्पणमध्ये यद्वा प्रलयेऽपि सत्त्वात् तद्दशाया वारणाय तदभाव इत्यधिकमुक्तम्। प्रलयादौ हि सत्यप्यदृष्टे तस्य फलजननाय कालान्तरप्रतीक्षतया तदानीं शरीराप्रादुर्भावः। इह त्वदृष्टस्यैवाभावादप्रादुर्भाव इति। अन्ततः अदृष्टाभावोऽपवर्गः इत्येतावदेव सुवचम्। अविशेषात् सकलात्मविशेषगुणविरहोऽपवर्ग इति नव्याः। "तदत्यन्तविमोक्षोऽपवर्गः" इति दुःखाभावमपवर्गमाह न्यायसूत्रकारः। जन्मनो दुःखत्वेन भावनात् दुःखाभावो नाम जन्माभाव इति न्यायभाष्यसरणिः। तथाच न्यायसूत्रकथितद्वादशविधप्रमेयान्तर्गतसर्वहेयवर्गाभावो मोक्ष इत्युक्तं भवतीति तद्व्याख्यानेऽस्माभिर्दर्शितम्। जन्माभाव एवात्राप्रादुर्भावपदेनोच्यते। "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति वदतो महर्षेर्गौतमस्य दुःखजन्मप्रवृत्तिदोष-

मिथ्याज्ञानानामपायोऽपवर्ग इत्याशयः संभाव्यते । संसाराभाव एव मोक्षः ; संसारश्चैतत्समुदायात्मक इति । अन्ततोऽत्र न्यायवैशेषिकयोरैकरस्यमेव । ईदृशाभावातिरिक्तं सुखानुभवादिकं तु मुक्तौ नैषोऽपि स्वीकरोति ; आत्मादिसंनिकर्षायत्ततायाः सुखदुःखसामान्ये प्रागुक्तत्वादित्यलम् ॥ १९ ॥

एवं यत्रयत्र द्रव्ये कर्मप्रतीतिः, तत्रतत्र तदुत्पत्तिसामग्री विचारिता । अत्र का सामग्री तमोद्रव्ये कर्म जनयति । न हि किञ्चिद्द्रव्यं सर्वदा सर्वत्रादृष्टादेव कर्मवद्भवर्तीति दृष्टमिति शङ्कां तमसि कर्मैव नास्तीति प्रतिबोधनेन परिजिहीर्षुः तत्स्वरूपमुपदिशति---

* २०. द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भाऽभावस्तमः ॥ (२२१)

तमसो द्रव्यनिष्पत्तिवैधर्म्यात् तत्र प्रतीयमानयोर्गुणकर्मणोरन्यत्रप्रतीतगुणकर्मनिष्पत्तिवैधर्म्याच्च तमः प्रभाप्रतियोगिकाभाव एवेत्यर्थः । निष्प्रभसुवर्णादिसत्त्वेऽपि तमोऽसत्त्वात् तेजोऽभाव इत्यनुक्त्वा भाऽभावइत्युक्तम् । तमो द्रव्यञ्चेत् , अनित्यं सावयवञ्च स्वीकार्यम् । तच्च न पार्थिवाद्यवयवनिष्पाद्यम्—अस्पर्शोद्भूतरूपत्वात् । न चान्यदेवेदं द्रव्यम्—तदापि प्रदीपनिर्वाणसमनन्तरक्षण एव समन्तात् समीक्ष्यमाणोऽन्धकारः किमत्रैवावयवक्रमेणोत्पन्नः, उत देशान्तरादागतः । नाऽऽद्यः, अत्र प्रदीपकाले प्रागनवस्थानात् । नान्त्यः, संनिकृष्टदेशेषु परितः प्रदीपभासुरेष्वप्यनुपलब्धतया तद्द्वारा आगमनायोगात् । न च क्षणमात्रेणेदृशं महत् द्रव्यं किञ्चिदुत्पद्यमानं दृष्टम् । 'अस्तु नित्यमेव तमः सर्वदा सर्वव्यापि । प्रदीपादिप्रकाशाभिभूतत्वात्तु तदग्रहणमात्रम्'इति चेन्न—एवं तर्हि तमसि

चलनप्रतीतेरमुख्यत्वापत्तेः, सावयवस्य नित्यत्वायोगाच्च। तत्सर्वापलापे वरं तद्द्रव्यापलाप एव; कादाचित्कोपलम्भाभासनिर्वाहाय नित्यस्थित्यादिकल्पने गौरवात्। अतो द्रव्यनिष्पत्तिवैधर्म्यात् तमो न द्रव्यम्। एतेन तमसि प्रतीतं नीलरूपमपि न रूपमिति सिद्धम्। ईदृशद्रव्योत्पत्तेरेवासिद्धौ अवयवगुणद्वारा ईदृशरूपोत्पत्तेः सुतरामयोगात्। कर्म तु तत्र कथं भवतीति शङ्कैव विमृष्टम्। अतो वस्तुतः कर्मापि तत्र नेति साधु। न च प्रागदृष्टैरेवावयवैर्झटिति महाग्न्युत्पत्तिवत् तमस उत्पत्तिरस्तु। अस्तु च तमोऽभावस्तेज इति वाच्यम्—औष्ण्याश्रयत्वादिना तेजसोऽवश्याभ्युपेयत्वात्। कारणानुरूपक्रमिकाभिवृद्धिदर्शनेन तत्र वियदादिविततपवनाकाशानीतसूक्ष्मावयवसंघातोपपत्तेश्च। अतोऽन्यद्रव्यगुणकर्मनिष्पत्तिसाधर्म्यस्य तमोद्रव्यगुणकर्मनिष्पत्तिषु दुर्वचतया तमो न भाव इति।

यद्यपि तमो न द्रव्यम्—अथापि आरोपितं नीलरूपं तम इति कन्दलीकारः। 'द्रव्यस्य रूपस्य वा आलोकसहकारेणैव चक्षुर्ग्राह्यत्वात् आलोकाभाव एव तमः। तस्य च प्रत्यक्षे नालोकापेक्षा। प्रतियोग्यतिरिक्तप्रतियोगिग्राहकसामग्री हि अभावग्रहे कारणम्। न चालोकग्रहे आलोकान्तरं प्रतियोग्यतिरिक्तमपेक्षितमस्ति। अतस्तदभावोऽप्यालोकं विनैव गृह्यत' इति किरणावलीकारः। तमःप्रतीतिर्न निर्विषया, किंतु द्रव्यगुणकर्मविषयिणीति न्यायवार्तिकोक्तम्। तत्र तु, यतो गुणकर्मविशिष्टप्रभाद्रव्याभावरूपं तमः, अतस्तमःप्रतीतौ प्रतियोगिकोटौ द्रव्यगुणकर्मणां भानं भवतीति भावो वर्णनीयः। सूत्राक्षराणि तु अभावत्वपक्षमेव दर्शयन्ति। कन्दलीकृता हि भाऽभावस्तम इत्यस्य भाभावे

सति यत् प्रतीयते, तद् रूपं तम इति क्लिष्टोऽर्थ आश्रीयत इति। तमो न द्रव्यम्, न गुणः, न कर्मेत्यपि पञ्चम्यन्तपदेन ज्ञायते ॥ २० ॥

ननु तर्हि नीलं तमश्चलतीति नैल्यचलनयोः कथं निर्वाहः। किञ्च तमो द्रव्यगुणकर्मरूपं मा भूत्। नापि सामान्यादिरूपम्; अनित्यत्वात्। अथापि भाप्रतियोगिकाभाव एवेति कथम्; तत्राह—

२१. **तेजसो द्रव्यान्तरेणावरणाच्च ॥** (२२२)

तेजस्तमसोर्विरोधानुभवात् तमः तेजोऽभाव इति सिद्ध्यति। किञ्च पूर्वं प्रदीपप्रभापरीतो यो देशः; तद्देशप्रदीपयोर्मध्ये यदा कश्चित् पुरुषस्तिष्ठति, तदा तेन प्रदीप आव्रियते; तदा च तमः प्रतीयते। अतः तेजसः प्रदीपादेः आवारकद्रव्येणाऽऽवरणात् प्रभाप्रसरप्रतिरोधात् प्रभाऽभावो यस्सिद्धः, तदेव तम इति। द्रष्टुं प्रवृत्तः पुरुषो यदि दर्शने सहकारिणमालोकं न पश्यति, तदा तम इति मन्यत इति चालोकाभाव एव तमः। एवं नैल्यप्रतीतिरपि नैल्यात्मना शौक्ल्याभावविषयिणी। तेजसो हि रूपं भास्वरशुक्लम्। प्रभाप्रसरकाले च तत्प्रतीतिरासीत्। संप्रति तेजस आवृतत्वात् तत्र शुक्लरूपाभाव एवं प्रतीयते। न च पीतरूपात्मनैव किं न प्रतीयत इति शंक्यम्—अनुभवानुसारेण शौक्ल्यकार्ष्ण्ययोरेवात्यन्तप्रतिभटत्वस्वीकरात्। अत एव सितान्यत्वस्य पीतादिसाधारण्येऽपि असितपदं सितविरोधीत्यर्थे कृष्णरूप एवानुशिष्यते। याऽपि चलतीति प्रतीतिः, साऽप्यारोपरूपा। प्रदीपावारके पुरुषे प्रसर्पति योयो देशः पुरुषेणाऽऽव्रियते, तत्तत्र तमः क्रमेण भवति। पुरुषे च गतिक्रियाऽस्ति। यथा गतिमद्वस्तुनः पूर्व-

देशानुपलब्धत्वविशिष्टोत्तरदेशोपलब्धत्वम् , तथा तमसोऽप्यत्रेति तत्साजात्यात् तमसि गतिरारोपिता। यथा सुवेगं शकटमारूढः स्वयमुपविष्टोऽपि शकटगतिबलात् विभिन्नान् वृक्षगुल्मादीन् पश्यन् स्वयं साक्षाद्गत्यभाववत्त्वात् क्षणमुपलब्धत्वे सति पश्चादनुपलभ्यमानत्वमात्रेण वृक्षादीन् गतिमतो मन्यते—तद्वत् । तत् सिद्धम्—तमसि कर्मप्रतीतेः सर्वथा भ्रान्तिरूपतया तत्कारणविमर्शो व्यर्थ इति ॥ २१ ॥

एवं मनसः कर्मनिरूपणानन्तरं व्युत्क्रमेण आत्मदिक्कालाकाशानां मध्ये कर्मसंभावनार्हे आत्मनि कर्म विचार्य अनन्तरमारोपितकर्मणि तमसि औचित्यात् कर्मविचारं विधाय अथ दिगादिषु कस्यापि पुंसः कर्मवत्त्वप्रत्ययाभावात् निष्क्रियत्वं निर्विशङ्कमित्याशयेनाह—

**२२ . दिक्कालावाकाशञ्च क्रियावद्वैधर्म्यान्निष्क्रियाणि ॥ (२२३)**

दिक्कालौ नाकाशतुल्यौ । तयोरक्रियत्वेऽपि क्रियाकारणत्वस्य वक्ष्यमाणत्वात; आकाशे तस्याप्यभावादिति विशेषं मनसिकृत्य तयोरेव समासादरणम् । क्रियावद्वैधर्म्यं क्रियावत्त्वेनाननुभूयमानत्वम् । यद्वा क्रियावतां मूर्तत्वं दृष्टम् । तदेव क्रियाप्रयोजकम् । अतः तद्वैधर्म्यममूर्तत्वमिति यथाभाष्यं ग्राह्यम् । न च नित्यविभोरपि स्वस्थान एव नित्यभ्रमणवत्त्वे कथं विभुत्वक्षतिरिति वाच्यम्—अननुभूताकारणकनिष्प्रयोजनक्रियाङ्गीकारे मानाभावाद् गौरवाच्च ॥ २२ ॥

कुत्रकुत्र कर्मेति विचारे प्रवृत्तेन द्रव्ये तच्छोधनं कृतम्। अथ गुणकर्मणोरपि तत् कुरुते—

**२३, एतेन कर्माणि गुणाश्च व्याख्याताः ॥ (२२४)**

एतेन=परिच्छिन्नपरिमाणवत्त्वाभावेन । अत्र परिमाणरूपविशेष्याभावाद्विशिष्टाभावः । यद्वा एतेन निरुपाधिकक्रियावत्त्वानुभवाभावेन ।

व्याख्याताः; निष्क्रियत्वेनेति शेषः । गुणकर्मणां धात्वर्थरूपक्रियाविशेषवत्त्वसंभवेऽपि नोक्तविधकर्मवत्त्वमिति भावः ।

ननु कर्माणीत्यपि विशेष्यसत्त्वात्, व्याख्यातानि च व्याख्याताश्चेत्येकशेषे व्याख्यातानीति भाव्यम्; व्याख्यातमिति वा, 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इत्यनुशासनात । तत्कथं व्याख्याताः इति । उच्यते—गुणा इत्येतदनुसारेणैवं प्रयोगः । कर्माणीत्यत्र व्याख्यातानीति विपरणम्यानुषञ्जनीयम् । यद्वा कर्मगुणा इति द्वन्द्वे कथं विशेषणं निर्देष्टव्यम्? व्याख्याताः इत्येवेति चेत्—कुतः? द्वन्द्वविशेषणत्वादिति चेत्—तर्हि तद्वदेव लोकाश्रयत्वाल्लिङ्गस्येहाप्येवं प्रयोग उपपन्नः । एतदुक्तं भवति—भिन्नप्रवृत्तिनिमित्तकाक्षादिशब्दविषय एवैकशेषानुशासनमिति पक्षे नात्र व्याख्यातपदे एकशेषस्य प्रसक्तिः; अत एव न नपुंसकसूत्रस्यापि । अभिन्नप्रवृत्तिनिमित्तकघटादिपदविषयेऽप्येकशेषप्रवृत्तिपक्षेऽप्युच्यते । "चार्थे द्वन्द्वः" इति सूत्रस्वारस्यात् इतरेतरयोगरूपचार्थस्य बोधविषयत्वविवक्षायां द्वन्द्वस्तदपवाद एकशेषश्च । अक्षादिशब्दे एकशेषं विना प्रयोगायोगेऽपि घटादिशब्दे इतरेतरयोगरूपचार्थबोध्यत्वाविवक्षायां द्वन्द्वतदपवादैकशेषप्रसक्त्यभावात् प्रकृत्या घटत्वादिना अपेक्षितयावद्घटादिविवक्षया औजसादिप्रत्ययविधानं वृत्ति-

1. 'तत्गुणास्तु विधीयेरन् अविभागाद्विधानार्थे न चेदन्येन शिष्टाः' (1-4- ) इति जैमिनिसूत्रे शिष्टपदेन यागादिकर्मणोऽपि ग्रहणमिति वार्तिकस्वरसपक्षे तदितिं कर्मपदस्य क्लीबत्वात् एवमेवोपपत्तिः । तथा श्रीभाष्ये समन्वयाधिकरणे "प्रयोक्तव्याः" इति, गीताभाष्ये च (13, 2) "निर्देश्यौ" इति । भट्टपराशरपादैश्च, "प्रत्यासत्तेरिमौ न विविच्यते" इति । एवं तन्त्रवार्तिकेऽन्यत्र च तत्रतत्र द्रष्टव्यम् ॥

निरपेक्षमेव भवितुमर्हति, 'द्व्येकयोर्द्विवचनैकवचने,' 'बहुषु बहुवचन'-मित्येतद्बलात्। यथा पचतः, पचन्तीत्यादितिङन्तस्थले, तद्वत्। एवञ्चैकशेषमूलकद्विवचनबहुवचनप्रयोगे तदुपजीविनपुंसकसूत्रप्रवृत्तिः। वृत्तिनिरपेक्षं प्रत्यययोजने तु न स नियमः। तदत्रैकप्रवृत्तिनिमित्तमुखेन पुंनपुंसकविशेषणभूतार्थबोधने, विशेष्याणाञ्च, कर्माणि गुणाश्चेति रीत्या व्यस्तत्वे यथेच्छं विशेषणलिङ्गप्रयोगः। यद्वा प्रामाणिकभूरिप्रयोगदर्शनानुसारेण समास इव व्यासेऽपि चरमश्रुतविशेष्यानुसारिलिङ्गनिर्देशः, उपस्थितप्रयोगे औचित्यात्। अत एव पूर्वसूत्रे क्लीबनिर्देशः। अत्र च पूर्वसूत्र इव उभयविशेषणमपि व्याख्याता इति पुंल्लिङ्गमिति ॥ २६ ॥

एवं निष्क्रियत्वेऽपि तेषु केषाञ्चित् क्रियाकारणत्वं परमस्तीति विवक्षुः तद्गतकारणत्वविवेकार्थमाह----

**२४. निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः ॥ (२२५)**

निष्क्रियाणां दिगादिद्रव्यगुणकर्मणां समवायसंबन्धः कर्मभ्यः कर्मतः—कर्मप्रतियोगिक इति यावत्—निषिद्धः। निष्क्रियानुयोगिकसमवायः कर्मनिरूपितो न भवतीति यावत्। तथाच क्रियासमवायित्वाभावात् क्रियां प्रति समवायिकारणत्वं तन्मध्ये कस्यापि न प्रसक्तमिति भावः २४

तर्हि अत्राध्याये संयोगादिगुणेषु, ततः प्रागन्यत्र च कर्मकारणत्वमिष्टं किंरूपमित्यत्र सूत्रत्रयम्---

**२५. कारणं त्वसमवायिनो गुणाः ॥ (२२६)**

संयोगादयः केचिद्गुणाः कारणानि भवन्तः असमवायिकारणान्येव कर्मविषये भवन्तीत्यर्थः। अत्र समवायिकारणत्वनिषेध एव

तुशब्दाभिप्रेतः ; निमित्तकारणत्वस्य प्रयत्नादाविष्टत्वात् । असमवायिन इत्यस्य कार्यसमवायिभिन्नास्सन्तः इति वाऽर्थः । तथाच द्रव्यसमवेततया कारणत्वम् , न तु समवायानुयोगितयेति ॥ २५ ॥

द्रव्येषु दिक्कालयोः कर्मनिमित्तकारणत्वं दर्शयति—

* २६. **गुणैर्दि (गुणेन दि) ग् व्याख्याता ॥** (२२७)

कारणमित्यनुषज्यते । गुणैः आदित्यसंयोगविशेषरूपोपाधिभिः— तद्वत्त्वेनेति यावत्— दिक् कारणतया व्याख्याता । पूर्वस्यां दिशि कर्म, उत्तरस्यामित्येवमुपाध्यवच्छिन्ने कर्मोत्पत्त्यनुभवात् उपाधिविशिष्टतया दिक् कारणं भवतीति । प्राचीनैः कालस्येव दिशोऽपि सर्वकारणत्वमिष्टम् ॥ २६ ॥

२७. **कारणेन कालः ॥** (२२८)

कारणमित्यनुषज्यते ; व्याख्यात इति च विपरिणम्य । कारणेन कारणवत्त्वेन । कालनिरूपणप्रकरणोक्तरीत्या सूर्यपरिस्पन्दादिरूपकारणात्मकोपाधिमत्तया कालोऽपि कारणमिति व्याख्यातः । अत्र कारणपदप्रयोगात् दिगुपाधीनामकारणत्वं गम्यते । एवमेषां क्रियाकारणत्वं परमस्ति, न तु सक्रियत्वमपीति निरूपितमिहाध्याये लौकिकं कर्मेति ॥

पञ्चमान्त्येऽब्रवीत् कर्म क्रमान्मूर्तेष्वथाऽऽत्मनि ।
व्यमृशत् सह मुक्त्याऽथ तमस्येवं दिगादिषु ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने पञ्चमे द्वितीयमाह्निकम् ।

इति पञ्चमोऽध्यायः ॥

---

## अथ षष्ठोध्यायः

अथ वैदिकं कर्म । तच्च योगप्रवृत्तं प्रति यमनियमात्मना द्वेधा विभज्योच्यते । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । अत्र प्राग्यो यमनिरूपणं प्रथमाह्निके करिष्यन् वैदिकस्य कर्मणो वेदप्रामाण्यायत्तानुष्ठानकतया सर्वोपोद्घातरूपेण वेदप्रामाण्यं कतिभिश्चन सूत्रैः स्थापयति—

१. बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ (२२९)

अयमाशयः–नित्यत्वात् निर्दोषत्वाच्च वेदः प्रमाणमिति मीमांसकाः । तत्र नित्यत्वं प्रामाण्यं प्रति न साक्षात् प्रयोजकम् । नित्यत्वादप्रमाणमिति वा किं नोच्येत ? न च प्रत्यक्षादिषु प्रामाण्यं नित्यत्वाधीनं दृष्टम् । अतः, 'निर्दोषत्वात् प्रामाण्यम्; निर्दोषत्वञ्च नित्यत्वात् पौरुषेयत्वाभावात् पुरुषदोषाधीनत्वप्रसक्त्यभावात् सिद्धम्' इति वक्तव्यम् । तत्र लौकिकाप्तवाक्यानामिव वेदवाक्यानामप्यनित्यत्वे सत्येव निर्दोषत्वोपपादनसंभवे अत्यन्तादृष्टनित्यत्वकल्पनया तत्समर्थनप्रयासो व्यर्थः । किञ्च वक्तृपुरुषगुणवत्तायत्तमेव वचनप्रामाण्यं लोकदृष्टमिति दोषाभावमात्रेण प्रामाण्यमपि न क्लृप्तम् । घुणाक्षरवाक्यादौ प्रामाण्याभावात् । अतः वेदवाक्यानि बुद्धिमत्कृतानि प्रमाणवाक्यत्वात् लौकिकप्रमाणवाक्यवदिति पौरुषेयत्वानुमानेन प्रामाण्यं समर्थनीयम् । अत्र साध्या बुद्धिश्च वाक्यार्थविषयकयथार्थज्ञानमिति ।

नन्विदमनुमानं वेदे प्रमाणत्वसिध्यनन्तरमेवावतरेत्, अन्यथा स्वरूपासिद्धेः। न च प्रमाणत्वरूपविशेषणत्यागेन वाक्यत्वमात्रं हेतुरुच्यत-

इति वाच्यम्—अप्रमाणशब्दसमुदायसाधारण्येन हेतुकथने तावता वक्तृयथार्थज्ञानरूपविवक्षितगुणसिध्ययोगात् । एवञ्च प्रमाणत्वं प्रागेव निर्धार्यम् । कथं निर्धार्येत इति चेत्—वेदः प्रमाणं महाजनपरिगृहीतत्वादित्यनुमानेन ।—एवञ्च सिद्धे प्रामाण्ये बुद्धिपूर्वत्वानुमानं किमर्थं क्रियत इति चेन्न—महाजनपरिगृहीतत्वं हि प्रामाण्यस्य स्थितस्य ज्ञापकम्, न तु कारकम् । प्रामाण्यमेव कथं निष्पन्नमिति तत्कारकाकांक्षायां बुद्धिमत्पुरुषकृतत्वाद्वाक्यस्य तत्प्रामाण्यं तद्बुद्धिकृतमिति कारकोपदेशोऽत्र क्रियते । अन्यथा कारकाभावान्निवर्तमानं प्रामाण्यं ज्ञापकत्वेनाभिमतो हेतुः कथं स्थापयेदिति । सूत्रे वाक्यपदं वाक्यत्वहेतुस्फोरणाय । वक्तृबुद्ध्यभावे च पदार्थयोः संसर्गविशेषे न किञ्चित् प्रमाणमिति ।

किं नाम वेदत्वमिति चेत्—किं नाम भारतत्वरामायणत्वादि । दृश्यतां वा न्यायकुसुमाञ्जलिपञ्चमस्तबक इति ॥ १ ॥

न केवलं वाक्यम्, वेदगतं प्रत्येकपदमपि यथार्थज्ञानसाधकं भवतीत्याह—

२. **ब्राह्मणे संज्ञाकर्मसिद्धिलिङ्गम् ॥** (२३०)

ब्राह्मणे मन्त्रब्राह्मणात्मकभागद्वयरूपवेदगतब्राह्मणभागे संज्ञाकर्म कर्मणां कर्माराध्यदेवतानाञ्च नामकरणं सिद्धौ बुद्धौ लिङ्गमिति । ईदृशाकारविशिष्टस्येदं नामेति लोके यथा, तथा ईदृशाङ्गोपाङ्गसंपन्नस्यैएतादृशफलसाधनस्य कर्मण इदमुद्भिदादिकं नामधेयमिति तत्तत्कर्मरहस्यं कृत्स्नं विद्वान् हि तत्तन्नाम कुर्यात । सत्सु वागिन्द्रादितत्तद्देवता-

उप. सू. २. प्रकारान्तरेण बुद्धिपूर्वकत्वमनेकसूत्रैराह—'सोऽरोदीत्' इति रोदनकर्तृत्वाद्यर्थविवक्षया रुद्रादिनामकरणं ज्ञाने लिङ्गमित्येतत्सूत्रार्थः ।

वाचकेषु बहुषु पदेषु विशिष्य किञ्चिन्नाम्नः तत्रतत्र देवताप्रतिपादनाय स्थापनं हि, 'तत्तच्छब्दसङ्कीर्तनपुरस्सरं कृतमेव कर्म फलति, न तु पर्यायशब्दान्तरप्रयोगे' इति तत्तत्कर्मणः तत्तद्देवतानाम्नश्च स्थितं सौहार्दं विवेचितवतैव सुकरम् । तथा च ब्राह्मणे रुद्रेन्द्रोद्भिद्विश्वजिदाद्यन्वर्थसंज्ञा दृश्यमाना कर्मसिद्धेः तत्तद्धात्वर्थस्य तत्तत्कर्मणः सफलत्वस्य च लिङ्गमिति । अनेन सूत्रेण मन्त्रब्राह्मणात्मनि वेदे ब्राह्मणं परमनीश्वरकर्तृकमप्रमाणञ्चेति मतिरप्यपास्यते ।

संज्ञाकर्म मन्त्ररूपवेदेष्वस्पष्टं दृष्टानां सम्यग्ज्ञानौपयिकरचनेति वाऽर्थः । श्रूयते हि—"मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा संततानि' इति । त्रेता—अग्नित्रयम् ।

यद्वा पूर्वोत्तरवत् अत्र बुद्धिपदं विहाय सिद्धिपदप्रयोगादेवमर्थः—ब्राह्मणे संज्ञाकर्म अर्वाचीनानेकनामोल्लेखः, काठककालापकादिसमाख्याकरणञ्च सिद्धौ वेदनिष्पत्तौ लिङ्गम् । साधितं हि समाख्यया वेदस्य सकर्तृकत्वं न्यायकुसुमाञ्जलौ ॥ २ ॥

ननु स्वयमर्थसंपादनोपायान्वेषणप्रवृत्तैः कैश्चित् परवञ्चनया दानशास्त्राण्युच्चावचानि प्रणीतानि स्युः । अतः तदप्रामाण्ये, तत्सामान्यादितरेषु तथात्वमिति न्यायात् सर्वाप्रामाण्यमित्यत्राह—

३. **बुद्धिपूर्वो ददातिः ॥** (२३१)

'स्वर्गकामो गां दद्यात्', 'श्रोत्रियाय कुटुम्बिने दरिद्राय दद्यात्' इत्यादिना, देयमिदम्, संप्रदानमिदम्, दानमित्थम्भूतम्, दानफलमिदमिति श्रेयःसाधनदानस्वरूपम् अनुमानागोचरत्वात् प्रत्यक्षेण

दृष्टवत्तैव दानविधयः प्रवर्तिता इति ददातिशब्दघटितवाक्यानि बुद्धिमत्कृतानीति । न खलु परवञ्चकाः स्वात्मानमपि विप्रलभन्ते । दानञ्च यथाशक्ति सर्वकर्तव्यमेवानुशिष्यते ; स्वकीयपरकीयविभागमन्तरेण पात्रभूतसर्वोद्देश्यकञ्च । प्रतिगृह्णन्तोऽपि बहुप्रकारे दान एव तदुपयोजयन्ति । यागहोमाद्यपि हि दानमेव । देवतोद्देश्यकद्रव्यदानं प्रक्षेपाङ्गक यागः ; प्रक्षेपसमप्रधानकं तदेव होम इति सावधानं विमृश्यम् । तथाच वैदिको ददातिशब्दो बुद्धिपूर्वकः ददातिशब्दत्वात् लौकिकददातिशब्दवदिति किरणावल्यामुक्तम् । कथं क्रियायाः कालान्तरभाविफलजनकत्वमिति चेत्—अनुभवस्य संस्कारद्वारा स्मृतिजनकत्ववत् अपूर्वद्वारा जनकत्वं कल्प्यमिति ॥ ३ ॥

ननु याजनाध्यापनप्रतिग्रहेषु ब्राह्मणानामेवाधिकारवर्णनात् अर्थग्रहणविधिरूपाः प्रतिग्रहविषयो वर्णविशेषाभिमानमूलाः अनाप्तकल्पिता इत्यवसीयत इत्यत्राह—

४. **तथा प्रतिग्रहः** ॥ (२३२)

तथेत्यस्य बुद्धिपूर्व इत्यर्थः । प्रतिग्रहविधिरपि बुद्धिपूर्व एव । अयं भावः—लोके तत्तत्कर्मज्ञानशक्तितारतम्येन तेते स्वानुरूपामुच्चावचां भृतिं विन्दन्ति । ये हि भृतिनिरपेक्षाः समुत्कृष्टज्ञानादिसंपदेकपराः साध्वाचाराः सत्तयापि लोकक्षेमहेतवः, तेषां भृतिस्थानीयोऽयं प्रतिग्रह इति मत्वापि संतोष्टुमुचितम् । न च ब्राह्मणवर्णः सर्वः प्रतिग्रहमर्हति । किंतु गृहस्थः । सोऽपि न सर्वः ; यतो गृहस्थाश्चतुर्विधाः । तथा च व्योमवती, "ते चतुर्विधाः, वार्तावृत्तयः,

शालीनवृत्तयः, यायावराः, घोरसांन्यासिकाश्चेति । अनिन्दित-कृष्यादिपराः आदिमाः। यजन्तो याजयन्तो ददतः प्रतिगृह्णन्तो द्वितीयाः। तृतीयास्तु यजन्तो न याजयन्तः, ददतो न प्रतिगृह्णन्तः। प्रतिदिनमा-हृतोञ्छवृत्तयश्चतुर्थाः। अन्यत्र किञ्चिदन्यथा विवेचितमिदम्। अस्तु यथा तथा। अपिच, प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्" इति शास्त्रम्। अतः कार्यान्तरेष्वधिकमात्मानमविनियुज्य जपतपः-प्रभृतिभिः परिपूताः प्रजानुग्रहपराः प्रतिग्रहदोषजरणप्रवीणाः प्रकृष्टदरिद्रा एव प्रतिग्रहाधिकारिण इति कृतमनेन। तथाच प्रतिग्रहविधिर्वैदिको बुद्धिपूर्वकः प्रतिग्रहविधित्वात् लौकिकप्रतिग्रहविधिवदित्यनुमानम् ॥४॥

ननु दानक्रियानिष्पत्तये संप्रदानस्वरूपविवेचनाय प्रतिग्रहाधि-कारिविवेचकशास्त्रस्योपयोगात् सर्वं दानधर्मशेषभूतमिति किं पृथक् प्रतिग्रहविधिकल्पनेन। अतः प्रतिग्रहस्य किञ्चिददृष्टजनकत्वमेव नाङ्गी-कर्तव्यम्। अदृष्टजनकत्वेऽपि दानधर्मजन्यदातृपरमापूर्वोपयोगित्वाय दातृगतादृष्टजनकत्वमेव। यदि तु प्रतिग्रहीत्रा स्वकृतप्रतिग्रहानुगुणं किञ्चित् सुखं दुःखं वा भोक्तव्यम्, तदपि प्रतिग्रहविषयभूतद्रव्यदान-जनिताद् दातृगतादृष्टादेव भवतु। तत्राह—

*** ५. आत्मान्तरगुणानामान्तरगुणेष्वकारणत्वात्॥ (२३३)**

किं दातृगतमदृष्टं प्रतिग्रहीतर्यदृष्टं जनयति, किं वा सुखदुःखा-दिकम्। उभयमपि न युक्तम्। आत्मान्तरसवेतगुणस्यान्यत्रात्मनि गुणजनकत्वाभावत्। न खलु चैत्रसमवेतात् सुखादितो मैत्रे सुखाद्युत्प-

उप. सू. ५. एकात्मगतपुण्यपापानामात्मान्तरे ये सुखदुःखे तयोरकारण-त्वात्। अतः शास्त्रदेशितं फलमनुष्ठातरि।

त्तिर्दृष्टा । न च प्रिययोर्द्वयोर्मध्ये एकगतात् सुखादितोऽन्यस्य सुखादिक भवत्येवेति वाच्यम्—तत्राप्येकगतसुखविषयकमन्यगतं यत् ज्ञानम्, तद् विना तस्य सुखाद्यनुत्पत्तेः। एवमेकगतादनुभवादितोऽन्यस्य स्मृत्यादिकमपि न जायते । अतो दातृगतादृष्टात् प्रतिग्रहीतरि गुणोत्पत्तिर्न भवतीति प्रतिग्रहविधयः पृथगेव तत्रादृष्टं जनयन्ति । अत एव, "शास्त्रदेशितं फलमनुष्ठातरि" इति जैमिनीया अपि । प्रतिग्रहस्य दानशेषत्वं तु दृष्टविधया द्रव्ये स्वत्वजननमात्रेण भवितुमर्हति । यद्यपि प्रतिग्रहविधिना, 'वृत्त्यन्तरहीनस्य प्रतिग्रहतो दोषाभावमात्रं बोध्यते इति नादृष्टहेतुत्वं प्रतिग्रहस्यावश्यकम्—अथापि निमन्त्रणविष्णुनिर्माल्यग्रहणादौ कचिदकरणे प्रत्यवायश्रवणात् नित्यकर्मवत् प्रतिग्रहविशेषस्य धर्मजनकत्वमप्यस्तीति युक्तम् । सन्ति च स्वयं निरपेक्षाः दानसाफल्यसंपत्तये परं प्रतिग्रहीतारः परमकारुणिकाः । ततश्च तेषां श्रेयोऽपि ।

ननु, "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इति विहिता पुत्रेष्टिः पितृकृता पुत्रे तेजस्वित्वादि जनयति, एवं पुत्रकृतं श्राद्धं पितरि तृप्तिमिति आत्मान्तरगुणस्यात्मान्तरगुणकारणत्वमेषितव्यमिति चेन्न—तत्र पुत्रेष्टिपितृश्राद्धादावपि फलानुभाविन्येव अपूर्वोत्पत्तेः स्वीकारादन्यसमवेतादृष्टात् अन्यत्र फलोत्पत्त्यभावात् । अथ कर्तरि पित्रादौ कथं नापूर्वम्, कृत्यपूर्वयोः सामानाधिकरण्यस्यावश्यकत्वादिति चेन्न—यागादौ ऋत्विगादीनां कर्तृत्वेऽपि स्वामिन्येवापूर्वोत्पत्तेः तद्वदेवोपपत्तेरिति ।

अनेन सूत्रेण जैनसंमतः भूतगतमदृष्टमिति पक्षोऽप्यर्थान्निरस्तो भवति । तन्निरासप्रकारश्च न्यायभाष्ये, विस्तरेण न्यायकुसुमाञ्जलौ, च द्रष्टव्यः ॥ ५ ॥

६. तद् दुष्टभोजने न विद्यते ॥ (२३४)

यदर्थं वैदिकविधिप्रवृत्तिः, तत् फलम्, लिङाद्यर्थभूतेष्टसाधनत्वरूपमात्मगुणकारणत्वं वा दुष्टभोजने न विद्यते। दुष्टानां भोजनं दुष्टभोजनम्। संबन्धसामान्ये षष्ठी। भोजनमभ्यवहारानुकूलव्यापारः। णिजन्ताल्ल्युट्। तत् दुष्टकर्तृके दुष्टपुरुषोद्देश्यके दुष्टवस्तु-कर्मके च भोजने न विद्यत इत्यर्थः। किमिति भोजनं विशिष्योपादीयते? दानानां मध्ये अन्नदानस्य सर्वसाधारण्यप्रसक्त्यतिशयात्, आयुरारोग्यैश्वर्यविज्ञानादिवहत्वाच्च। यद्वा भोजनमभ्यवहार एव। श्राद्धादौ दुष्टभोजने फलं न भवतीति। स्वयं जात्याश्रयनिमित्तदुष्टवस्तुभोजनेऽपि अविवेकान्न फलमिति च कणभक्षोपदेशः ॥ ६ ॥

किं दुष्टम्? तत्राह—

७. दुष्टं हिंसायाम् ॥ (२३५)

दुष्टश्च दुष्टश्च दुष्टश्च दुष्टम्। तथाच हिंसाकर्ता हिंसाकर्तुद्देशेन हिंसार्जितमन्नं दीयते चेत्—यत्र क्वापि हिंसासंबन्धेऽपि तद् भोजनं दुष्टभोजनमेवेति। इदं पातकसामान्योपलक्षणम्। स्तेयसुरापानपरदारगमनादावपि जीवोपद्रवसद्भावात् कथमपि सर्वत्र हिंसाप्रसक्तिरिति तस्याः प्राधान्येन निर्देशः। हिंसा हि परवेदनामात्रफलो व्यापार इति ॥७॥

न केवलं भोजननैष्फल्यमात्रम्, अपित्वसंसृज्यसंसर्गवशात् प्रत्यवायोऽपीत्याह—

८. तस्य समभिव्याहारतो दोषः ॥ (२३६)

समभिव्याहारोऽत्र संव्यवहारः=साहित्यम्। तच्च "संवत्सरेण

---

उप० सू. ७. निषिद्धे कर्मणि प्रवृत्तं पुरुषं दुष्टं विजानीयात्।

पतति पतितेन सहाऽऽचरन् " इति नानाप्रकारं धर्मशास्त्रतोऽवगन्तव्यम् । ॥ ८ ॥

अदुष्टभोजनेऽपि फलतारतम्यं वक्ष्यन्, 'तस्य समभिव्याहारतो दोषः' इत्युक्तस्य दोषस्याभावः परं तत्र सर्वत्राविशिष्टः; न तु तत्रापि तारतम्यमित्याविष्कर्तुमाह—

**९. तददुष्टे न विद्यते ॥** (२३७)

तत् दुष्टसाहित्यप्रयुक्तदोषसत्त्वं कर्तरि, उद्देश्ये, कर्मणि च सर्वस्मिन्नदुष्टे न विद्यत इति ॥ ९ ॥

अथ फलतारतम्यं दर्शयितुं सूत्राणि—

**१०. पुनर्विशिष्टे प्रवृत्तिः ॥** (२३८)

विशिष्टे अतिशयिते गुणशालिनि पात्रविशेषे, वस्तुविशेषे च पुनः प्रवृत्तिर्विधेया । तेन भोजनफलं प्रकृष्टम् । पुनश्शब्दः त्वर्थे । परंतु इत्यर्थः । एवं दोषाभावस्याविशिष्टत्वेऽपीति यावत् ॥ १० ॥

**११. समे हीने वा प्रवृत्तिः ॥** (२३९)

तदलाभे समे स्वानुरूपे, तस्याप्यलाभे अधमे, परंत्वदुष्टे प्रवृत्तिः । तेन मध्यमं निकृष्टञ्च क्रमेण फलम् ॥ ११ ॥

एवं भोजनानुबन्धेन अहिंसारूपं यमं प्रस्तुत्य, हिंसायामित्येतत् स्तेयस्याप्युपलक्षणमिति कृत्वा, अस्तेयरूपं यमं मनसि निधाय तदपवादं दर्शयति—

**१२. एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्यातम् ॥**

अत्र हीनादिपदं न वस्तुपरम्, किंतु पुरुषमात्रपरमिति धार्मिक-

---

उप. सू. १०. पूर्वनिमन्त्रितान् दुष्टान् परिहृत्य सत्पात्रलाभे तद्ग्रहणे प्रवर्तेत ।

पदेन सिद्धम् । विशिष्टसमहीनेत्यनुक्त्वा हीनसमविशिष्टेत्युक्त्या हीनात् परस्वादनं मुख्यम् , समात् मध्यमम् , विशिष्टादधममिति ज्ञाप्यते । अत एव परस्वादानपदेन न प्रतिग्रह उच्यते ; हीनात् प्रतिग्रहस्यैवाधमत्वा-दुक्तार्थज्ञापनासंभवात् । अत एव प्रतिग्रहपदं पूर्वं प्रयुक्तमुपेक्ष्य परस्वादानेति प्रयोगः । तेन च आदानानन्तरमपि तत् परस्वमेवेति ज्ञाप्यते । अस्तेयमित्यत्र स्तेयं परस्वादानमिति च योगसूत्रव्याख्या । अतः प्राचीनवृत्त्युक्तरीत्या स्तेयमेव परस्वादानम् । तथा च एतेन भोजनविषये शिष्टसमादिषु तारतम्यस्यावधेयत्वकथनेन ततस्ततश्चौर्यमपि यथार्हमुत्तममध्यमादिरूपेण व्याख्यातमित्यर्थः । यदि दरिद्रः स्वं वा परं वा भोजनीयं भोजयितुमलब्धार्थः स्यात् , तदा प्रतिग्राहयितुरभावे हीनादितः क्रमेण स्तेयमपि कुर्यात् , तावता न भङ्गः । "शूद्रात् सप्तमे, वैश्याद्दशमे, क्षत्रियात् पञ्चदशे, ब्राह्मणात् प्राणसंशये" इति चाहुः । अस्तेये हि मुख्यस्य योगस्यैव लोपः स्यात् । "गुणलोपे च मुख्यः स्यात्" इति न्यायेन मुख्ययोगाद्यलोपाय द्रव्यार्जनरूपाङ्ग-वैकल्यस्य सोढव्यत्वादिति ॥ १२ ॥

अथ अपरिग्रहादिरूपाणि यमान्तराण्यपि संगृह्णाति—

**१३. तथा विरुद्धानां त्यागः ॥ (२४१)**

तथेति पूर्वोक्तसमुच्चये । विरुद्धानां शास्त्रनिषिद्धानां योगादि-विरुद्धानाञ्चोपकरणानां त्यागः अपरिग्रहः कार्यः । परकीयस्य स्तेयं न कुर्यादित्येव न ; विरुद्धं यदि स्वकीयमेव किञ्चित् स्यात् , तदपि

उप. सू. १२. परस्वादानं प्रतिग्रहः । वृत्तिकृतस्तु स्तेयमित्याहुरिति ।
उप. सू. १३. अपहर्तुं ये न प्रयच्छन्ति, तेषां वधोऽपि ।

त्याज्यमिति । अत्र विरुद्धानामिति बहुवचनम् अनृतवदनाब्रह्मचर्यरूपयोर्धर्मविरोधिनोरपि संग्रहाय। तेन अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहरूपयमान्तर्गतौ सत्यब्रह्मचर्यरूपौ यमावपि यमान्तरवत् सप्रतियोगिकौ ग्रहीतुमुचिताविति सूच्यते। सत्यं ह्यनृतवदनाभावः ; ब्रह्मचर्यञ्च अकाम इति। नात्रोत्तरसूत्र इव त्यागो वधः ; सूत्रवैयर्थ्यापातात्। शेषमन्ते॥१३॥

त्यागप्रस्तावात् पूर्वनिषिद्धहिंसापवादभूतं हिंसारूपं त्यागमप्याह—

**१४. हीने परे त्यागः ॥ (२४२)**

"सर्वथैवात्मानं गोपायेत्" इति शास्त्रात् कदाचित् परहिंसां विना स्वात्मानं गोपायितुमपारयन् हिंसायां प्रवर्तेत। तदाऽपि परे स्वापेक्षया हीने निकृष्टे सत्येव तस्य त्यागः वियोजनं=वधो युज्यते। वक्ष्यमाणानुसारस्तदौचित्याच्च त्यागोऽयं परत्याग इति सिद्ध्यति। तथा च हीने परे परत्याग इति ॥ १४ ॥

**१५. समे आत्मत्यागः परत्यागो वा ॥ (२४३)**

परे इत्यनुवर्तते। परे समे सति आत्मत्यागं कुर्यात्। आत्मन्युत्कटाद्रे परत्यागं वा ॥ १५ ॥

**१६. विशिष्टे आत्मत्याग इति ॥ (२४४)**

स्वापेक्षया परे अतिशयिते सति न तस्य हिंसया स्वात्मरक्षणमुचितमिति स्वात्महानिं स्वयमुपनिपतितां सहेतैवेत्यर्थः। अत्र इतिशब्दः आह्निकसमाप्तावित्याहुः। सर्वेष्वाह्निकेष्वेवमभावेऽप्यत्र स्थितस्यैवं गतिः। यदि तु, 'तथा विरुद्धानां त्यागः' इत्युक्तार्थस्योपपादिका उपरि त्रिसूत्रीति उपपादनोपसंहारपरतया इतिशब्द-

निर्वाहः, तदा प्रथमसूत्रस्यैवमर्थः—विरुद्धानां प्राणधारणोपयोगिद्रव्य-हरणे विरोधिनां जनानां त्यागः वध इति। किमविशेषात् सर्वेषां वध इत्यत्र विशेषकथनायोपरि त्रिसूत्रीति भाव्यम्। परंतु प्रथमसूत्रस्य पश्चान्नैरर्थक्यम्; उत्तरत एव सर्वसिद्धेः। अतः योगसूत्रोक्तसकलयमसङ्ग्रहपरत्वौचित्यात् पूर्वोक्त एवार्थोऽस्तु। एवञ्च इतिशब्दः वक्तव्यप्रकारविशेषसत्ताप्रदर्शक-इति भाव्यम्। स चैवम्—कथं नु स्वात्मानं स्वयं हन्यात्, स्वर-क्षणार्थं परहननवत् स्वहननेन रक्षणीयस्याभावात्, उद्बन्धनादौ दोषाच्च। तत्राह—इतीति। नावश्यमुपायप्रयोगेण स्ववधः संपाद्य इत्युच्यते। स्वस्य रक्षणाशक्तया प्राप्तां हानिं सहेतेत्येतावदेव। तथास्थितिमसहमानस्तु विर-क्ताग्रेसरो धर्माविरुद्धेन शास्त्रीयेण केनचिदुपायेन स्वहानिमपि कुर्यात्। विशिष्टं तु परं न हन्यादिति। नन्वेवं हिंसारूपत्यागपराणि त्रीणामानि सूत्राणि परस्वादानसूत्रात् प्रागेव निवेश्यानि। हिंसरूपार्थैक्यात्। सत्यम्। यमविचारस्य तस्मिन्नेवाह्नि उपदेशसमापनायास्तेयादि संगृह्य, अथावकाश-लाभात् तेन हिंसाविषय एव किञ्चित् प्रस्तुतम्। एवञ्च विरुद्धानां त्याग इति सूत्रमपरिग्रहाद्यर्थपरमेव सत् विरोधिहिंसारूपत्यागमपि संगृह्णाति। तदा तथेति हीनसममात्रग्रहणम्; तदंशविवरणञ्चोपरि। अपरिग्रहादि-विषये विशेषविवरणस्यावकाशालाभादुपेक्षेति ॥ १६ ॥

वेदस्य बुद्धिपूर्वत्वमदुष्टात् कर्मणः फलम्।
यमेऽपि जातु स्तेयादिस्थितिं षष्ठादिमेऽब्रवीत् ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने षष्ठे प्रथममाह्निकम्।

## अथ षष्ठे द्वितीयमाह्निकम्

उक्ताः सापवादाः यमाः। अथ नियमा वक्तव्याः। तत्र यमानां किञ्चिदभावरूपत्वात् तादृशाभावरक्षणे तत्प्रतियोगिभूतक्रियाचरणप्रयुक्त-प्रत्यवायाभावमात्रं सिध्यति; न तु धर्मोऽपि कश्चिदुत्पद्यते। यद्यपि अहिंसादिपदैः अहिंसादिसङ्कल्पपर्यन्तविवक्षायाम्, 'नेक्षेतोद्यन्तमादित्यम्' इत्यादाविव धर्मत्वं भवितुमर्हति। अत एव यमानां षष्ठाध्याय-निरूप्यवैदिककर्मत्वम्—अथापि तावदविवक्षया हिंसाद्यभावपरिपालन-मात्रमपि यम इष्यते। तदपवादे तु क्रियैव। नियमेषु पुनर्विधिविधेयेषु भावरूपेषु धर्महेतुत्वं दृढमस्तीत्यभिप्रेत्य तत्र विशेषमाह—

**१. दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय॥ (२४५)**

दृष्टादृष्टप्रयोजनानां दृष्टादृष्टफलकानां वैदिकानां दानहोमादीनां कर्मणां दृष्टाभावे दृष्टरूपफलाभावे प्रयोजनं प्रयोगः अनुष्ठानम्, विधि-कृतमनुष्ठापनं वा अभ्युदयाय भवतीति। अदृष्टद्वारकं फलमभ्युदयः। कर्मणां फलद्वयमस्ति दृष्टमदृष्टञ्च। दृष्टं लाभपूजाख्यातिरूपम्। तदनुद्देशेन केवलमदृष्टार्थतया यदि कर्म क्रियते, तर्हि तत्फलं भविष्यतीत्यर्थः।

तथाच धर्माधिकारे भाष्यम्—, "दृष्टं प्रयोजनमनुद्दिश्यैव एतानि साधनानि; भावप्रसादञ्चापेक्ष्य आत्ममनस्संयोगाद्धर्मोत्पत्तिः" इति। "दृष्टं लाभपूजादिरूपम्" इति च तत्र कन्दली। अहिंसादीनां यमानां

---

उप. सू. १. 'यतोभ्युदये' ति द्वितीयसूत्रव्याख्यानमत्र। दृष्टप्रयोजना-भावे अदृष्टं प्रयोजनं कल्पनीयम्। तच्चाभ्युदयाय—तत्त्वज्ञानाय स्वर्गाय वा। अभ्युदयायेति चतुर्थी प्रथमार्थे।

स्वरूपं तु लाभपूजाद्यर्थत्वेऽपि नातीव हीयते, यदा तेषामभावरूपत्वम् । नियमेषु पुनर्नैवमिति च भावः । अनेन सूत्रेण, 'कर्मणां लाभपूजाख्यातिरूपदृष्टार्थत्वमेवास्तु ' इति शङ्कापि परास्ता ।

अस्य सूत्रस्यैवमर्थः स्यात्— वैदिककर्मणां मध्ये कानिचित दृष्टपश्वाद्यर्थानि, अदृष्टस्वर्गाद्यर्थानि चान्यानि । तत्र येषु दृष्टं फलं नास्ति, तत्रादृष्टमिति । एवं सति—दृष्टप्रयोजने कर्मणि दृष्टाभावकथनं कथमुपपद्यते ; अदृष्टप्रयोजने कर्मणि दृष्टप्रसक्तिकल्पना च कथमिति शङ्का स्यात् । यदि फलार्थानामपि कर्मणां फलानुद्देशेनानुष्ठाने तत्त्वज्ञानं फलमिति सूत्रार्थः, तर्हि अदृष्टस्वर्गादिफलस्यापि त्यागात् दृष्टादृष्टाभावे इति वक्तव्यम् । अदृष्टप्रयोजने हि कर्मणि दृष्टपश्वादिफलाभावकथनमप्रसक्तप्रतिषेधः स्यात् । एवं त्विदं युक्तम्—दृष्टादृष्टप्रयोजनानाम् ऐहिकामुष्मिकोभयरूपपुत्रादिफलानां कर्मणां दृष्टाभावे इह जन्मनि पुत्राद्यभावे जन्मान्तरे पुत्रादिकमदृष्टमेष्टव्यमिति । वास्तवोऽर्थस्तु प्रागुक्त एव ; असङ्कोचात् ॥ १ ॥

अथ नियमनिरूपणप्रवृत्तः वर्णाश्रमसाधारणान् असाधारणांश्च कतिचिदंशानाह—

**२. अभिषेचनोपवासब्रह्मचर्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्चादृष्टाय ॥ (२५६)**

शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः योगशास्त्रोक्ताः । न्यायभाष्ये (४-२-२६) 'यमः समानमाश्रमिणां धर्म-

---

उप. सू. २. अदृष्टफलानि परिगणयति—

साधनम्; नियमस्तु विशिष्टम्' इत्युक्तम्। पूर्वाह्निके निषिद्ध-निवृत्तेर्धमरूपतायाः प्रतीतत्वात् कर्तव्यं सर्वं नियमशब्दाभिमतं महर्षेः कणादस्य स्यात्। अभिषेचनं यथावत् स्नानम्। अनेन शौच-सामान्यमुपलक्ष्यते। उपवासः एकादशीव्रतादिः। अनेन चान्द्रा-यणादेरप्युपलक्षणात् तपस्सामान्यं उक्तं भवति। ब्रह्मचर्यम् अध्ययनम्, स्वाध्यायः। ब्रह्म वेदः। ब्रह्मणि परमात्मनि चर्येत्यर्थविवक्षया ईश्वर-प्रणिधानञ्च। "स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च" इत्युक्ताष्टविधमैथुननिवृत्तिरूपब्रह्मचर्यं तु यमः पूर्वाह्निकविषयः। अथ योगसूत्रोक्तः सन्तोष एव शिष्यते। स च अलंबुद्धिरूपः। पूर्वाह्निके, 'विरुद्धानां त्यागः' इत्यपरिग्रहोक्त्या अलंबुद्धिरुक्तप्राया। किञ्च सा अपरिग्रहोपयोगिनी नादृष्टार्थेति पृथगनुक्तिः। गुरुकुलवासः नैष्ठिकब्रह्मचर्यम्। यावदायुषं गुरुकुल-स्थितिः। वानप्रस्थम् वनं प्रति प्रस्थितस्याश्रमः। गार्हस्थ्यसंन्यासयोः प्रसिद्धत्वात् नैष्ठिकब्रह्मचर्यवानप्रस्थाश्रमयोरेव विरलत्वात् तयोर्विशिष्य प्रदर्शनम्। यज्ञाः—पञ्च महायज्ञाः, पाकयज्ञसंस्थाः हविर्यज्ञसंस्थाः सोमयज्ञसंस्थाश्च। दानं गवान्नविद्यादीनाम्। प्रोक्षणम् समन्त्रक उदकबिन्दुभिस्सेकः। कर्म द्विविधं सामान्यधर्मभूतं विशेषधर्मभूतञ्च। आद्यमभिषेचनेत्यादिना, द्वितीयं गुरुकुलवासेत्यादिना चोक्तम्। पुनः कर्म द्विविधम् अर्थकर्म गुणकर्म चेति। आद्यं यज्ञादि, प्रोक्षणेत्यनेन द्रव्यादिसंस्कारकं गुणकर्म सर्वमुपलक्ष्यते। न केवलं कर्मैवादृष्ट-साधनम्, किंतु अकर्मापीत्याह दिगित्यादिना। दिङ्नक्षत्रमन्त्र-

कालेति द्वन्द्वः । तेषां नियमाः । भोजनादिषु दृष्टफलार्थेष्वविहितेष्वपि कर्मसु प्राङ्मुखत्वादिनियमाः शास्त्रसिद्धाः । तत्राङ्गानाम् अङ्गिना फले जननीये उपकारकत्वात् प्रागादिदिङ्नियमाभावेऽपि भोजनादिना तृप्त्यादिरूपफलसिद्धेरीदृशनियमविधानं व्यर्थमिति न शङ्कनीयम्— शास्त्रबलात् नियमांशस्य पुरुषर्थतया पृथक्फलस्वीकारात् । देहधारणादीनामपि सर्वेश्वराराधनशेषत्वाध्यवसाये च नियमादृष्टफलं सुलभमिति भावेन एतदुक्तिः ॥ २ ॥

उक्तेषु कर्मस्ववश्यज्ञेयं विवेकं दर्शयति—

**३. चातुराश्रम्यमुपधा अनुपधाश्च ॥ (२४७)**

चत्वार आश्रमाश्चातुराश्रम्यम् । स्वार्थे ष्यञ् । आश्रमचतुष्टयसंबन्धीति वाऽर्थः । चातुराश्रम्यमदृष्टाय । न केवलं बाह्यं कर्म ; किंतु आत्मगुणरूपा उपधाः अनुपधाश्चादृष्टाय । उपधानां पापरूपादृष्टार्थत्वं मन्तव्यम् । पूर्वं गुरुकुलवासवानप्रस्थयोरुक्तत्वेऽपि सर्वग्रहणाय चातुराश्रम्यमित्युक्तम् । यद्वा उपधानुपधापदयोश्चातुराश्रम्यसामानाधिकरण्यमभिमतम् । उपधा—भावदोषः, अनुपधा चादोष इति वक्ष्यति । तथाचाश्रमचतुष्टयमपि दोषादोषात्मकम् । सर्वत्राश्रमे भावदोषोऽदोषश्चास्तीत्यर्थः । चतुर्ष्वाश्रमेषु स्थितं साधारणमसाधारणञ्च कर्म भावदुष्टमदुष्टञ्चेति द्विविधमस्तीति यावत् । तत्र दुष्टं राजसं तामसञ्च ; अदुष्टं सात्त्विकम् । भगवद्गीतास्वष्टादशेऽध्यायेऽस्य

---

उप० सू० ३. अधर्मसाधनवचनार्थं सूत्रम् । आश्रमचतुष्टयसाधारणं धर्मसाधनमुक्तं पूर्वसूत्रेण । उपधानुपधा अपि यथास्वं धर्माधर्मसाधनानि । उपपधापदमधर्मसाधनसामान्योपलक्षकम् ।

विस्तरो (श्लो :—२०-२८) द्रष्टव्यः । एवञ्च यस्मिन् कस्मिन्नप्याश्रमे स्थितेन विरक्तेन योगोपयोगितया फलाभिसंधिरहितमेव सर्वं कर्म अनुष्ठेयमित्युपदिष्टं भवति ॥ ३ ॥

उपधाशब्दः परवञ्चनेच्छायां प्रसिद्धः । अत एव भाष्यमिच्छाधिकारे, ' परवञ्चनेच्छा उपधा 'इति । अत्र तु रागद्वेषादिरूपदोषविवक्षेति दर्शयति—

**४. भावदोष उपधा अदोषोऽनुपधा ॥ (२४८)**

भावो मनः, अभिसंधिर्वा । तद्दोषः भगवत्प्रीत्यर्थमिदं कर्मेत्याकारं विहाय नानाविधकामडम्भद्वेषादिकरम्बितत्वम् । अनुपधाशब्दघटकोपधाशब्दोऽपि न प्रसिद्धार्थमात्रपर इति दर्शयितुम् , अदोषोऽनुपधेति ॥ ४ ॥

अथोक्तानां नियमानां यमापेक्षत्वं पूर्वाह्निकाभिहितशुचिभोजनरूपोदाहरणमुखेन विवेचयिष्यन्, तत्र शुचिशब्दार्थमाह—

**५. यद्दिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितञ्च तच्छुचि ॥ (२४९)**

अनेन सूत्रेण पूर्वमभिषेचनपदोपलक्षितं शौचमपि द्रव्यविशेषे उदाहरणरूपेण दर्शितं भवति । दृष्टाः शास्त्रसम्मताः, स्वस्य च प्रियाः रूपरसगन्धस्पर्शाः यस्य तत् । तेन श्वेतवार्ताकादिव्यावृत्तिः । रूपादिकं यथासंभवं समुच्चितमसमुच्चितञ्च ग्राह्यम् । प्रोक्षितम् समन्त्रकमीषदुदकबिन्दुसिक्तम् । अभ्युक्षितम् अभित उदकसिक्तम् । केषाञ्चित् प्रोक्षणमात्रं पर्याप्तम् , यथा प्रायः काष्ठगुडतण्डुलादीनाम् । केषाञ्चित् क्षालनमपि, यथा शाकपत्रादीनाम । शास्त्रासम्मतरूपादिकं वस्तु;

प्रोक्षणादिसंस्कृतमपि शुचि न भवतीति वक्तुम् इष्टेत्यादिपदम् । इष्टेत्यनेनैव भावदोषराहित्यमपि ज्ञापितं भवति ॥ ५ ॥

एवमशुचिद्रव्यं न ग्राह्यमिति सिद्धम् । तत्राशुचिपदेन शुचिप्रत्यनीकं दुष्टं शुचित्वप्रत्यनीकदोषवदिति वा, शुचिभिन्नमित्येतावदेव वा न विवक्षितम् । किंतु निर्दिष्टद्रव्यस्यापि प्रोक्षणाद्यभावे कार्यानर्हतया शुचित्वाभावविशिष्टमित्येव विवक्षितमित्याह—

**६. अशुचीति शुचिप्रतिषेधः ॥ (२५०)**

अशुचीतिपदस्य शुचित्वाभावः प्रवृत्तिनिमित्तम् । स च शुचिद्रव्येऽपि प्रोक्षणाद्यभावकाले भवति । शुचिभिन्नत्वरूपः पर्युदासस्तु भेदस्य व्याप्यवृत्तित्वान्न तत्र भवेदिति ॥ ६ ॥

तर्हि दुष्टानां कलञ्जादीनामशुचिपदेन ग्रहणं कथमित्यत्र, शुचित्वस्य कदाचिदपि तत्राप्रसक्तया शुचित्वाभावस्तत्राप्यक्षत एवेत्याशयेनाह—

**७. अर्थान्तरञ्च ॥ (२५१)**

यत् शुचिद्रव्याद्भिन्नम् , तदपि शुचित्वाभाववदित्यर्थविवक्षायां न वार्यते । संसर्गाभावस्य प्रागभावात्यन्ताभावसाधारण्यादिति भावः । अशुचीति शुचिप्रतिषेधोऽर्थान्तरञ्चेति ऐकसूत्र्यानादरणञ्चात एव सङ्गतम् । अर्थान्तरस्य शुचिप्रतिषेधभिन्नत्वाभावात् तत एवास्य क्रोडीकरणात् ॥ ७ ॥

एवं शुचिपदार्थं शोधयित्वा शुचिभोजनविषये विवक्षितमुपपादयति—

---

उप. सू. ६. पूर्वोक्तशुचिभिन्नमशुचि ।

उप. सू. ७. एतद्भिन्नं वाग्दुष्टं भावदुष्टञ्चाशुचि ।

**८. अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावात्‌ विद्यते वाऽर्थान्तरत्वाद्‌ यमस्य ॥ (२५२)**

अतिथिभोजनाख्यदानरूपो नियमोऽभ्युदयार्थ इति प्रागेवोक्तम्‌। परंत्वयमभ्युदयः अयतस्य यमरहितस्य न विद्यते। कुतः? नियमाभावात्‌। यतकर्तृकं कर्मैव नियमशब्दाभिधेयम्‌। तस्मादयतकर्तृककर्मस्थले नियमो नास्तीति। पक्षान्तरमाह विद्यते वेत्यादिना। अभ्युदयो विद्यते; यमस्य नियमादन्यत्वात्‌ यमाभावेऽपि नियमसत्त्वादिति॥ कथं मिथो विरुद्धमुच्यत इति चेन्न—अविरोधात्‌। वाशब्दो हि व्यवस्थितविकल्पार्थः। एतदुक्तं भवति—अहिंसाऽस्तेयब्रह्मचर्यापरिग्रहादीनां प्रतियोगिनः केचित्‌ ब्रह्महत्यास्वर्णस्तेयगुरुतल्पगमनपातकिसंसर्गादिरूपाः कर्मानधिकारापादकाः सन्ति। तद्वत्तया पुरुषस्यायतत्वे तु अनधिकारिकृतत्वान्नियम एव न भवतीति नास्त्यभ्युदयः। ये पुनः हिंसादयः कर्मानधिकारानापादकाः, तद्वत्त्वेन पुरुषस्यायतत्वेऽपि नियमाधिकारानपायात्‌ तत्र यमस्य नियमबहिर्भूतत्वात्‌ नियमादभ्युदय इति॥ ८॥

ननु सत्यपि यमे नियमाः क्वचिन्न भवन्ति। विधेर्निषेधो बलीयानितिहेतोः नियमासमर्थेनापि यमपरिपालनात्‌। अतो यमः स्वप्रतियोगिभूतहिंसादिनिषिद्धकर्मजनितप्रत्यवायभियैव परिपाल्यत इति कथं तस्य नियमार्थत्वम्‌? तत्राह—

---

उप॰ सू॰ ८. धर्माधर्मयोः सहकारिकारणमाह—यमरहितस्य शुचिभोजनादभ्युदयो न, नियमस्य यत्‌ सहकारि तदभावात्‌। यमसत्त्वे तु विद्यते। नियमसहकारिणो यमस्यार्थान्तरस्य सत्त्वात्‌।

उप.सू.९. न यममात्रादभ्युदयः, भोजनमप्यपेक्षितम्‌। असति भोजने अभावात्‌।

९. असति चाभावात् ॥ (२५३)

यथा क्वचित् यमे सति नियमस्याभावः, तथा यमेऽसति नियमस्य, नियमे चासति यमस्य तत्रतत्र भावान्न यमस्य नियमार्थत्वसंभव इति। अयं भावः—निषेधरूपो यमो द्विविधः पुरुषार्थः क्रत्वर्थश्च। पुरुषार्थः कर्मानधिकारापादकानापादकहिंसादिप्रतियोगिकतया द्विविधः। तत्र आद्यः ब्रह्महत्यादिनिवृत्तिरूपो नियमे उपयुज्यते; यमे तस्मिन्नसति नियमाभावात्। अनधिकारिकृतस्य कर्मणो नियमत्वाभावात्। तथा क्रत्वर्थयमोऽपि, न भुञ्जीत, न स्त्रियमुपेयादित्यादिः क्रतुप्रकरणावगतो नियमार्थः, असति नियमेऽङ्गिभूते तदभावात्। अङ्ग्यर्थमेव तत्परिपालनादिति। अत्र सर्वत्रोपस्कारगतिरन्या ॥ ९ ॥

एवं यमनियमौ निरूप्य तयोरेव त्यागात्, फलाभिसन्धिपूर्वकपरिग्रहाच्च पुरुषः संसारावर्ते परिभ्रमतीति वक्तुमारभते—

१०. सुखात् रागः ॥ (२५४)

'अनेन मे सुखं साध्यते' इत्यनुभवविषयभूतात् सुखात् तज्जातीयसुखे तत्साधने च रागो भवतीत्यर्थः ॥ १० ॥

रागे हेत्वन्तराण्यप्याह—

११. तन्मयत्वाच्च ॥ (२५५)

यत्र विषये रागः, तन्मयत्वात्—पुंसस्तत्प्रचुरत्वात् तद्विषयाभ्यासाधीनसंस्कारप्राचुर्यात् रागो भवतीति ॥ ११ ॥

१२. अदृष्टाच्च ॥ (२५६)

अस्मिन् जन्मनि प्रागननुभूतेषु कामिन्यादिषु यौवने यो रागः, तथाऽत्यन्तविजातीयतया सुखसाधनत्वेनानिश्चितेऽपि विषयसौन्दर्यादिवशात् अन्यथा वा यो रागः, तत्रादृष्टमेव साक्षात् कारणमिति ॥ १२ ॥

---

उप. सू. १०. दोषरूपः सहकारी उच्यते सुखादित्यादिना।

१३. **जातिविशेषाच्च** ॥ (२५७)

एतानि सूत्राणि व्याचक्षाणेन वात्स्यायनेन (न्या. ३. १.) जातिविशेषलाभप्रयोजकप्राचीनकर्मवशात् राग इति एतदर्थो दर्शितः। तथाच नरमृगादीनां स्वानुरूपान्नतृणादिषु रागः तत्तज्जातिसम्भवप्रयोजककर्मायत्त इति। रागप्रतिपादकानीमानि द्वेषोपलक्षकाणि। तथाच दुःखात् द्वेषः, तन्मयत्वाच्च, अदृष्टाच्च, जातिविशेषाच्चेति ॥ १३ ॥

अथोक्तेच्छाद्वेषकार्यमाह—

१४. **इच्छाद्वेषपूर्विका धर्माधर्मयोः प्रवृत्तिः** ॥ (२५८)

स्वर्गपुत्रपश्वादिषु रागाद् यागादौ धर्मे प्रवृत्तिः। शत्रुप्रभृतिषु दुःखहेतुषु द्वेषात् तद्वधादिरूपेऽधर्मे प्रवृत्तिः। 'नात्र यथासङ्ख्यमन्वयः; न हि सर्वत्राधर्मे द्वेष एव हेतुः; सुरापानादौ रागादेव प्रवृत्तेः। अतः प्रवृत्तिसामान्ये इच्छैव कारणम्। क्वचित्तु शत्रुवधादौ वधेच्छां प्रति शत्रुगोचरद्वेष एव हेतुरिति प्रदर्शनाय द्वेषकथनम्। निवृत्तिप्रयत्ने पुनस्सर्वत्र द्वेष एव कारणम्, प्रवृत्तिप्रयत्न इव रागः इति। अत्र, 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः'(१-१-१९; १-१-२) इति न्यायसूत्रभाष्यमनुसन्धेयम् १४

एवं 'पूर्वजन्मार्जितधर्माधर्माधीनादृष्टकारितरागद्वेषाधीना धर्माधर्मप्रवृत्तिरित्युपपादनेन जननमरणप्रबन्धः सिद्ध इत्याशयेनाह—

१५. **तत् संयोगो विभागः** ॥ (२५९)

तत् तस्मात् पुनस्सम्पादितधर्माधर्मप्रवृत्तिबलात् आत्मनः संयोगो देहेन्द्रियादिभिः, विभागः तद्वियोगश्च क्रियासमभिहारेण भवतीति।

---

उप. सू. १४. दोषाणां धर्माधर्मकारणत्वं प्रवृत्तिद्वारेत्याह।

उप. सू. १५. ताभ्यां धर्माधर्माभ्यां संयोगो जन्म; विभागो मरणम्। प्रेत्यभाव इति यावत्।

जननं मरणमित्युनुक्त्वा संयोगो विभाग इति कथनमात्मनि उत्पत्ति-विलयविरहस्य विस्पष्टत्वाय । एवमेष संसारावर्ते परिभ्रमतोति ॥१५॥

एवं तावत् जन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरबलेन पूर्व-पूर्वनिष्पत्तिरिति दर्शितम् । अथ, कथमस्य विमोचनमित्यत्राह—

**१६. आत्मकर्मसु मोक्षो व्याख्यातः ॥ (२६०)**

"कायकर्मणाऽऽत्मकर्म व्याख्यातम्" इत्यारभ्य आत्मकर्म-प्रतिपादनार्थं कृतेषु त्रिषु पूर्वाह्णिकसूत्रेषु मोक्षो व्याख्यातः । मनः-कर्मप्रकरणे खलु योग उक्तः । तथाच उपधायुक्तानां सुखदुःखोप-योगिनां कर्मणां करणेनैव जननमरणप्रबन्धानुवृत्तिरिति सुखदुःख-हेत्वात्मेन्द्रियमनःसन्निकर्षानारम्भे, योगे च निष्पन्ने, तत्कृतात्मसाक्षा-त्कारबलेन संशमितसकलमिथ्याज्ञानेन सञ्चितान् धर्माधर्मान् सर्वानप्य-नुभूय अदृष्टाभावे आत्मनि संपादिते, स्थितस्य देहादिबन्धस्य तत एव विच्छेदे, पुनः प्रादुर्भावाभावः संपद्यते । सोऽयं जन्मप्रवृत्तिदोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापाय एव मोक्ष इति । एवं पञ्चमषष्ठाभ्यां कर्म निरूपितमिति ॥ १६ ॥

शास्त्रीयनियमादृष्टं यमस्य नियमार्थताम् ।
भवप्रबन्धहेतुश्च षष्ठस्यान्त्ये व्यवेचयत् ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने षष्ठे द्वितीयमाह्णिकम् ।

इति षष्ठोध्यायः ॥

---

उप. सू. १६. आत्मकर्मसु—श्रवणमनननिदिध्यासनादिषु सत्सु मोक्षो भवतीत्यर्थः । षट्पदार्थीतत्त्वज्ञानमाद्यमात्मकर्म ।

श्रीः

## सप्तमोऽध्यायः

अथ विशेषतो निरूपयितव्येषु द्रव्यगुणकर्मसु द्रव्यकर्मणो- र्निरूपणे वृत्ते चतुर्भिरध्यायैर्गुणनिरूपणमारभ्यते । कर्मालङ्घनेन कर्म- निरूपणस्य कृतत्वात् गुणेषु शिष्यजिज्ञासां नेतुं स्मारयति—

**१. उक्ता गुणाः ॥ (२६१)**

उक्ताः उद्दिष्टाः, तत्तद्द्रव्यवृत्तितया प्रत्यक्षतया च सामान्यतः कथिताश्चेत्यर्थः । अत्रानात्मगुणनिरूपणं सप्तमार्थः । एकद्रव्यकमात्र- वृत्तिविभागसूत्रोक्तविभाजकधर्मवद्गुणनिरूपणमाद्याह्निककृत्यम् ॥ १ ॥

*** २. पृथिव्यादिरूपरसगन्धस्पर्शाः द्रव्यानित्यत्वादनित्या अग्निसंयोगाच्च ॥ (२६२)**

अग्निसंयोगादिति पदाभावे सूत्रे श्रूयमाणचकारवैयर्थ्यात् व्योमवत्यनुसाराच्चैवं सूत्रोल्लेखः । व्योमवत्यां पृथिव्यादीति न पठ्यते । अबादिषु तद्विचारस्योपरि करिष्यमाणतयाऽत्र पृथिव्युल्लेखमात्रं पर्याप्त- मिति 'पृथिव्याम्' इति पाठः स्यात् । पृथिव्यादीति पाठे पृथिवी च तस्या आदयश्च पृथिव्यादयः तेषामित्यर्थः । पृथिवीपदमिह कार्य- पृथिवीपरम् । आदिपदं तत्कारणपरमाणुपरम् । द्रव्यानित्यत्वाग्नि- संयोगरूपहेतुद्वयस्य तत्र क्रमेण संबन्धोऽभिमतः । यद्वा पृथिवी आदिः कारणं येषां रूपादीनां ते पृथिव्यादयः इत्यर्थः । पृथिव्यां परमाणुष्वपि गुणा जन्या एवेति । व्यणुकादिगता आश्रयभूतद्रव्या-

---

उपं. सू. २. 'पृथिव्यादिरूपरसगन्धस्पर्शाः द्रव्यानित्यत्वादनित्याश्च' पृथिव्यादीनां वाय्वन्तानां रूपादयो गुणाः आश्रयनाशात् नश्यन्ति ।

नित्यत्वात् अनित्याः विनाशिनः ; परमाणुगताश्चाग्निसंयोगाद्विनाशिन इति सूत्रार्थः ॥ २ ॥

अवयविगतानामेव रूपादीनां क्वचिदाश्रयनाशादिव क्वचिदग्नि-संयोगान्नाश इति पिठरपाकपरत्वभ्रान्तिव्युदासायाह—

* ३. **एतेन नित्येष्वनित्यत्वमुक्तम्** ॥ (२६३)

अनित्यत्वमिति पाठ एव व्योमवतीदृष्टः, यो वृत्तिदृष्टत्वेनोपस्कार एव दर्शितः । एतेन द्रव्यानित्यत्वादिवाग्निसंयोगादपि रूपादीनां नाशवचनेन नित्येषु पृथिवीपरमाणुष्वेव रूपादीनामनित्यत्वमुक्तम् ; न त्ववयविषु रूपादीनामिति । ननु परमाणोर्नित्यतया किमिति तद्गुणानामपि नित्यत्वं नेष्यते इति चेत्—उच्यते—कुलालकृते श्यामे घटादौ आपाकनिक्षिप्ते सति पश्चात् रक्तरूपदर्शनात् अवयविनो रूपान्तरवत्त्वं निर्बाधम् । न च—अवयवभूतानां परमाणूनां श्याम-रूपवत्त्वम् , अवयविन्येव रूपान्तरमिति—युक्तम् । अवयवगुणानुकारस्यावयविगुणे अनुभवसिद्धत्वात् । न हि कपालं श्यामम् , घटस्तु रक्त इति भवितुमर्हति । पिठरपाकवादिनामपि अवयविमात्रे पाकवशाद्रूपादिनाशेऽपि परमाणौ प्राचीनमेव रूपमास्तामिति प्रश्ने एवमेव समाधानम् । अत एव पृथिव्याः कृष्णरूपत्वश्रुत्यनुसारेण पृथिवीपरमाणुः सर्वोपि नित्यकृष्णरूप एव ; अर्जुनादिरूपता पुनरनित्ये-ष्वेव पाकवशादिति न कल्प्यते ; अवयवावयविनोर्वैरूप्यायोगात् । किञ्च आपाकनिक्षिप्तघटादौ रूपान्तरदर्शनादन्वयव्यतिरेकाभ्यामग्निसंयोगस्य

---

उप. सू. ३. 'एतेन नित्येषु नित्यत्वमुक्तम्' । नित्येष्वाश्रयेषु वर्तमानानां रूपादीनां नित्यत्वम् ।

रूपनाशकत्वं रूपान्तरोत्पादकत्वञ्च स्वीकार्यम् । तत्रावयविगतरूपादिविषयेऽग्निसंयोगो न समर्थः, किंतु परमाणुरूपादावेवेति समनन्तरमेव वक्ष्यत इति नित्येष्वेवानित्यत्वं रूपादीनामग्निसंयोगादिति ॥ ३ ॥

अबादिषु पृथिवीवैलक्षण्यं दर्शयति—

**४. अप्सु तेजसि वायौ च नित्याः द्रव्यनित्यत्वात् ॥ (२६४)**

रूपरसस्पर्शा इति नित्येष्विति च अनुवर्तते । अबादौ रूपादेर्यथार्हं संबन्धः । रूपरसगन्धस्पर्शनाशं प्रति आश्रयनाशोऽग्निसंयोगो वा कारणमिति, तत्र च पार्थिवनित्यगतरूपादिनाशं प्रत्येवाग्निसंयोगः कारणमिति स्थितम् । अबादौ एकरूपाणामेव रूपरसस्पर्शानामिष्टत्वात् तत्र पाकाधीनो भेदो हि दुर्वचः । यद्यपि पृथिव्यामपि अनुष्णाशीतस्पर्श एक एव—अथापि त्वगिन्द्रियग्राह्यमृदुत्वकठिनत्वादिसामानाधिकरण्यरूपं वैलक्षण्यं तत्रास्ति । तथा च अबादिगतरूपादिषु पाकाप्रसक्त्या आश्रयनाश एव हेतुरवशिष्यते । स चाबादिपरमाणुरूपादौ दुर्वचः । अतो नित्याबादिरूपादयः नाशाप्रतियोगिनः अग्निसंयोगानाश्यत्वे सति नित्यवृत्तिरूपादित्वादिति ॥ ४ ॥

नन्वग्नितप्तजलादावुष्णादिस्पर्शः सत्यप्याश्रये नश्यति । नैवम् । तस्यौपाधिकस्य तत्र प्रतीतिमात्रम् । न तत्र स जायते, नश्यति वेति । तस्मादनित्येष्वबादिषु अनित्यपृथिवीसाम्यमर्थसिद्धमित्याह—

**५. अनित्येष्वनित्याः द्रव्यानित्यत्वात् ॥ (२६५)**

अप्सु तेजसि वायौ चेत्यनुवर्तते, द्रव्यानित्यत्वादिति कारकहेतुः ज्ञापकहेतुश्च ।

---

उप. सू. ४. पृथिव्यां नित्यवृत्तिरूपादीनां नित्यत्वं नेत्यतो विशिनष्टि ।

उप. सू. ५. पूर्वं पृथिवीमन्तर्भाव्य सर्वत्रानित्येषु अनित्यत्वमुक्तमेव । अबादिषु पुनः विशिष्योच्यते ।

ननु आश्रयनाशादेवानित्यपृथिव्यां रूपादिनाश इत्यनुपपन्नम्। आपाकनिक्षिप्ते हि घटादौ रूपाद्यन्तरदर्शनात् पूर्वरूपादिनाशोऽवश्यं स्वीकर्तव्य एव। स आश्रयनाशादित्यनुपपन्नम्। पक्वापक्वघटादेरैक्यप्रत्यभिज्ञानात्। घटादेस्तत्र नष्टत्वे पुनर्घटाद्युत्पादकदण्डचक्रकुलालादिसामग्र्यभावेन तदुत्पत्त्ययोगाच्च। यावन्तो घटशरावादयो यादृशरेखोपरेखाद्याकारविशिष्टा आपाकनिक्षिप्ताः, तावन्तस्तादृशाकारा एव पुनः प्राप्यन्ते। अदृष्टवदात्मसंयोगबलादेव चेत् तत्र घटाद्युत्पत्तिः, किमिति च सङ्ख्यामानादौ अन्यथाभावः कदापि न भवेत्? अदृष्टवशादेव परमाणुष्वपि रूपाद्युत्पत्तिर्भविष्यतीति आपाकनिक्षेपोऽप्यनपेक्षितः स्यात्। तस्मात् अवयविपृथिव्यां पाकादेव रूपादयो जायन्त इति तादृशावयविनाशाभावात् पूर्वरूपादीनां नाशः पाकादेव स्वीकार्यः—तत्राह—

**६. कारणगुणपूर्वकाः पृथिव्यां पाकजाः॥** (२६६)

अवयविपृथिव्यां साक्षात् परम्परया वा पाकजत्वेन सम्मताः रूपादयः कारणगुणपूर्वका एव। कारणगुणतः कार्ये गुणोत्पत्तिश्च कार्यद्रव्योत्पत्तिद्वितीयक्षण एवानुभाविकीति आपाके कार्यद्रव्योत्पत्तिरपि सिद्ध्यति। अवयवेषु पूर्वद्रव्ये सति द्रव्यान्तरोत्पत्त्ययोगात् पूर्वद्रव्यनाशोऽपि स्वीकार्य इति आश्रयनाशावश्यम्भावात् तत एव गुणनाश इति भावः। अत्र पाकजा इति पदप्रयोगः अपाकनिक्षेपानन्तरभाविपाकजगुणमात्रं पक्ष इति ज्ञापनाय। तथा पाकजत्वादेव कारणगुणपूर्वकत्वं युक्तमिति सूचनात् हेतुगर्भविशेषणमपि। तथा हि—तण्डुलादयः शाकादयश्च पात्रेषु पच्यमानाः स्थूलाद्यात्मकं परिमाणान्तरं

उप.सू.६. **अवयविपृथिव्या रूपादयो नाग्निसंयोगजन्योत्पत्तिनाशवन्तः।**

प्राप्नुवन्तीति तत्र आश्रयनाश एव कारणम् । तत्र च वेगवत्तेजोद्रव्यकृतोऽभिघातादिः शाकाद्यवयवेषु क्रियामुत्पाद्य मिथोऽवयवविभागमवयवसंयोगरूपासमवायिकारणनाशञ्च विधाय अवयवि नाशयति । तत्र का कथा बहलज्वालाजालाभिहतेष्वापाकनिविष्टेषु घटादिषु । एवञ्च यथा तत्रैक्यप्रत्यभिज्ञानस्य, तण्डुलाद्युत्पादकक्षेत्रादिसामग्र्यभावेऽपि कार्योत्पत्तेः, सङ्ख्यारेखोपरेखादेश्च निर्वाहः, तथैव घटादिष्वपीति । एवमपाकजेषु सूच्यादिना मनाग् विद्धेषु खण्डघटादिष्वपि क्लृप्तसामग्रीनिरपेक्षकार्योत्पत्तिः ऐक्यप्रत्यभिज्ञानादि च प्रदर्शयितव्यम् ॥ ६ ॥

एवं पाकजपदबलेनैव पिठरपाकवादिषु नैयायिका निरस्ताः । प्राभाकरास्तु अवयविद्रव्ये द्रव्यनाशं विनैव परिमाणभेदमाशेरते । तन्मते एकस्मिन्नेव द्रव्ये पूर्वमस्थौल्यस्य, पश्चात् स्थौल्यस्य च शाकादिपाके उपपन्नतया तत्रापि नावयविनाशः । कर-कमलादेः सङ्कोचविकासदशाभेदेन परिमाणभेदवत् सर्वत्रोपपत्तिरिति तदाशयः । अतस्तन्निरासाय (पाकजपदं पक्षमात्रपरमस्त्वित्याकलय्य) तन्मतसाधारण्येन कारणगुणपूर्वकत्वसाधकं समुचितं हेतुमाह—

७. **एकद्रव्यत्वात्** ॥ (२६७)

एकमेव द्रव्यं येषां ते एकद्रव्याः तत्त्वात् । कार्यगतगुणानामेव प्रस्तुतत्वात् अत्र द्रव्यपदेन कार्यद्रव्यविवक्षणमर्थसिद्धम् । तथाच कार्यवृत्तिपाकजगुणाः कारणगुणपूर्वकाः एकमात्रकार्यद्रव्यवृत्तिगुणत्वात्

उप. सू. ७. अवयविपृथिवीरूपादिकं कारणगुणपूर्वकमित्युक्तम् । परमाणुपृथिवीरूपादिकं संयोगकारणकं कार्यगुणत्वे सति नित्यानिष्ठ- अद्विष्ठगुणत्वात् शब्दबुद्ध्यादिवदित्यनुमानेनाग्निसंयोगासमवायिकारणकत्वं परमाणुरूपादौ साध्यत इति ।

कारणगुणपूर्वकत्वेन सुनिश्चितपटजलादिरूपरसैकत्वपरिमाणवत्। द्वित्वसंयोगादिवारणाय एकमात्रेति। नित्यद्रव्यगतगुणवारणाय कार्येति। कर्मवारणाय गुणेति। यद्यपि परत्वापरत्वयोरेकमात्रद्रव्यवृत्तित्वात् साध्याभावाद् व्यभिचारः---अथाप्येकद्रव्येत्यनेन एकमात्रद्रव्यनिरूपणीयेत्यर्थविवक्षणान्न दोषः। परत्वादेः इदमेतस्मात् परमिति द्रव्यद्वयमन्तरा निरूप्यत्वाभावात्। द्व्यणुकपरिमाणमपि परमाणुगतद्वित्वसङ्ख्यारूपकारणगुणपूर्वकमेवेति।

यद्वा एकद्रव्यत्वात् समानद्रव्यकत्वात्। एकजातीयद्रव्यवृत्तित्वादिति यावत्। तथाच पाकजो रूपादिः कारणगुणपूर्वकः घटरूपादित्वात् प्रथमघटरूपादिवदिति, अवयविगतपाकजरूपादिः कारणगुणपूर्वकः अवयविगतरूपादित्वादिति वा प्रयोगः। न चाप्रयोजकशङ्का। यदि कारणगुणपूर्वकं रूपं न स्यात्, पूर्वावयविनि पाकाद्रूपोत्पत्त्ययोगेन अवयविगतत्वमेव न स्यादित्यनुकूलतर्कसद्भावात्। कथं तत्र पाकात् रूपोत्पत्त्ययोग इति चेत्---एकदेशावच्छेदेनाग्निसंयोगे घटेप्येकप्रदेश एव रूपोत्पत्त्यापत्तेः। असमवायिकारणस्य संयोगस्य प्रादेशिककार्योत्पादकताया एव दर्शनात्। यथा भेर्याकाशसंयोगादेस्तत्प्रदेश एव शब्दजनकत्वम्। एवञ्च तदंशावच्छेदेनैव घटे पूर्वरूपनाशः सम्मन्तव्यः। स च न शक्यः स्वीकर्तुम्। रूपस्य पूर्वस्थितस्यैकतया स नष्टोऽनष्टश्चेति कथनायोगात्। सर्वांशेन नाशे च घटस्यान्यांशावच्छेदेन नीरूपत्वप्रसङ्गः। एवं घटे एकदा श्यामरक्तरूपद्वयस्वीकारापत्तिः। रूपस्याव्याप्यवृत्तित्वापत्तिश्चा व्याप्यवृत्तित्वमेव चानुभविकम्। अत एकत्रानेकविशेषगुणायोगान्नाग्निसंयोगात् घटे रूपोत्पत्तिः।

ननु कथमनेकविशेषगुणायोग एकत्र । रूपरसगन्धादीनामेकत्रैवाङ्गीकारादिति चेन्न–समानेन्द्रियग्राह्यानेकविशेषगुणायोगस्याभिमतत्वात् । व्योमवत्यामेतदर्थकमेकं सूत्रं पृथिवीभाष्यव्याख्यानावसरे समुदाहारि, सम्यग् व्याख्यायि च । तदत्र एकद्रव्यत्वादिति प्रकृतहेतूपष्टम्भकतया निविष्टं स्यात् । तच्च सूत्रम्—

**८. अविभुनि द्रव्ये समानेन्द्रियग्राह्याणां विशेषगुणानामसंभवात् ॥**

उक्तोऽर्थः । न च पाकाच्चित्ररूपोत्पत्तिः । अवयवगतनानारूपाणामेव चित्रहेतुत्वात् । न च घटे यदवयवावच्छेदेनाग्निसंयोगः तद्भिन्नावयवे स्थितं पूर्वरूपम्, अग्निसंयोगवत्यवयवे च रूपान्तरमिति तद्बलाच्चित्ररूपमिति वाच्यम्—तर्हि पाकस्थलेऽप्यवयविनि अवयवरूपत एव रूपोत्पत्तेरस्मदिष्टाया एव सिद्धेः ।

किञ्च अग्निसंयोगाद्रूपोत्पत्तिः किं क्वचिदवयविमात्रे, किंवाऽवयवेष्वपि । आद्ये, अवयवरूपानाशात् अवयवः श्यामः, अवयवि रक्तमिति महद् वैघट्यम् । अन्त्ये, तदुत्पादितावयवरूपत एवावयविरूपोत्पत्तौ पाकस्यावयविरूपकारणत्वं पृथङ् न कल्प्यम् । अतः परमाणावेव रूपोत्पादकोऽग्निसंयोगः ।

नन्वथापि अग्निसंयोग एवावयवावयविषु सर्वत्र रूपनाशकोऽस्तु । ततश्च पाकेन परमाणौ रूपे कारणगुणक्रमेणैव कार्यगुण उत्पद्यताम् । एवञ्च पूर्वावयविविनाशानङ्गीकाराल्लाघवमिति चेन्न—पाककालविनाश्यमवयविरूपमाश्रयनाशनाश्यम् अवयविरूपत्वात् दग्धपटरूपादिवदिति तत्राप्यनुमानात् । अवश्यञ्च संसृष्टावयवमध्ये प्रविशता पावकेन स्वसंयोगबलेन तदवयवविश्लेषणेनैव प्रवेष्टव्यम् । तथाचावयवसंयोगरूपासम-

वायिकारणनाशोऽवयव्यनाशः कथमिति । एवं तर्हि अम्भस्संभरणादार्द्रे कुम्भेऽप्यम्भःप्रवेशोऽवयववियोजनमन्तरा न भवतीति निरम्भःकुम्भोऽन्यः स्यादिति चेत्—स्यादेवोपचितापचितदेहवत् तत्रापि भेदः । इदमवयविरूपत्वहेतुना आश्रयनाशनाश्यत्वानुमानं कारणगुणपूर्वकत्वानुमानञ्च किरणावल्यामुक्तम् ।

उपस्कारे तु, एकद्रव्यत्वादिति सूत्रं परमाणुरूपादेः संयोगासमवायिकारणकत्वसाधनार्थमित्युक्तम् । यद्यपि विभागजशब्दे व्यभिचारात् संयोगासमवायिकारणकत्वं न साध्यम्; किंतु संयोगजन्यत्वमात्रम् । शब्दसामान्ये वायुसंयोगस्य कारणत्वान्न व्यभिचारः—अथापि संयोगासमवायिकारणकत्वमिष्टार्थात् सिद्ध्यतीति—तावताऽप्यदृष्टवदात्मसंयोगेनार्थान्तरात् तेजस्संयोगासमवायिकारणकत्वं न सिध्यति । अन्वयव्यतिरेकाभ्यां तत्सिद्धिरिति चेत्—तर्हि तत एवैतदनुमानवैयर्थ्यम् । पूर्वसूत्रकथितसाध्यसाधकहेतुपरत्वञ्चास्य असद्व्याख्याने ॥

यद्यपि सूत्रस्वारस्यपर्यालोचने एवं भाति—प्रथमसूत्रेण अवयविपृथिव्यामाश्रयनाशादिव अग्निसंयोगादपि क्वचित् रूपनाशोऽभिमतः । द्वितीयेन परमाणुषु अग्निसंयोगादेव नाशोऽतिदिष्टः । अथ नित्याबादिष्वनाश उक्तः । ततः, 'कार्याबादिषु द्रव्यानित्यत्वादेवानित्यत्वम्; न तु कार्यपृथिव्यामिवाग्निसंयोगादपि तत्' इत्युक्तम् । एवमग्निसंयोगादवयविनि रूपादिनाशसत्त्वेऽपि अवयविरूपाद्युत्पत्तिः पाकस्थलेऽपि कारणगुणपूर्विकैव, एकद्रव्यत्वात् । पाकात्पूर्वं यत्र द्रव्ये रूपमासीत्, तत्रैव द्रव्ये पुना रूपोत्पत्तेः पूर्वरूपवत् उत्तरस्यापि कारणगुणपूर्वकत्वोपपत्तेः । अतः एकद्रव्यत्वादित्यन्तसूत्रस्वारस्यात् आपाकनिक्षिप्तघटा-

दिनाशघटान्तराद्युत्पत्तिकल्पनमसौत्रमप्रामाणिकम्, परिमाणभेदस्याभावादिति—अथापि भाष्यादिविरोधादसाम्प्रदायिकमिदम् । तत्राग्निप्रवेशस्यावयवविनाशकत्वादेरुपपादितत्वात् । नैयायिका एव खलु अग्निप्रवेशानुगुणच्छिद्रसद्भावात् अवयविनाशौपयिकोऽसमवायिकारणनाशो न भवतीत्याहुः । तथा च सति छिद्रमात्रे प्रवेशात् पक्वतण्डुलादौ प्रथिमानुपपत्तिः । तत्रावयवि भिद्यत एवेति चेत्—कुत्र वा न भवेत् । यतोऽग्रेगोलकोऽप्यग्निनिष्टप्तः स्थूलतरो भवति । एवं न्यूपरिमाणमपि स्यात्, अग्निसंबन्धादार्द्रभावापनयात् । अपां संबन्धादपि फलकादिकं पृथु भवतीति वर्षासु कतिपयकवाटादौ द्रष्टव्यम् ।

ननु कियता कालेनावयविपरम्पराक्रमेण पक्वघटतद्रूपोत्पत्तिरिति चेत्—अवयवानन्त्यात् अतिवेगभाविन्यपि घटादौ क्षणेयत्ता दुर्वचेति । द्व्यणुकतद्रूपोत्पत्तौ परं क्षणप्रक्रिया नानाप्रकारसंभाविता सुवचा । तथा हि—कन्दुकनिक्षिप्ते घटादौ अग्निज्वालावलीढे सति क्रमेण—

[1]अणुस्पन्द[2]विश्लेष[3]संयोगनाश[4]द्व्यणुप्रक्षया[5]णुस्थरूपादिनाशाः ।
[6]अणौ रूप[7]मस्मिन् क्रिया त[10]त्तुरीयक्षणे संगमोऽन्वो[11]द्व्यणु[12]स्तत्र रूपम्

इत्येतानि भवन्तीति आपातत एव निश्चीयते । अथापि विभागजविभागाङ्गीकारात् क्रियानाशो विलम्बेन भवति । एतदुक्तं भवति—अणौ द्व्यणुकनाशकक्रियोत्पत्तिकाले अग्नौ अणुगतरूपनाशप्रयोजिका क्रिया । तदनन्तरक्षणे अणौ रूपान्तरोत्पत्तिप्रयोजिका अग्न्यन्तरे क्रिया । इमाश्च क्रियाः क्रमेण विभागपूर्वसंयोगनाशोत्तरसंयोगान् जनयन्ति । अणौ उत्तरसंयोगोत्पत्तिकाले द्व्यणुकनाशः । तत्काले अग्निसंयोगोऽणौ अग्निक्रियाजन्यः । अग्निक्रियां विनैव वा परमाणुक्रियाजन्यः अग्नि-

रूपोत्तरदेशसंयोगः । अनन्तरक्षणे रूपनाशः । तत्क्षणजातादणावग्न्यन्तरसंयोगादुत्तरक्षणे रूपान्तरोत्पत्तिः । सर्वमिदं विभागजविभागाङ्गीकारे अनङ्गीकारे च समानम् । द्व्यणुकनाशकक्रिया परमाणावुत्पन्ना यावन्तं कालमस्ति, तावन्तं तत्र द्व्यणुकारम्भकक्रिया न जायते; कर्मवति कर्मानुत्पत्तेरिति विभागजविभागाभावपक्षे परमाणौ रूपान्तरोत्पत्त्यनन्तरमेव क्रियान्तरोत्पत्तिः । अन्यदा तु द्व्यणुकनाश—विभागजविभाग—पूर्वसंयोगनाश-उत्तरसंयोगानन्तरं क्रियानाशात् ततः पश्चादेव द्व्यणुकारम्भकक्रिया । तथा चोत्पन्नायाः क्रियायाः अष्टमक्षण एव नाशात् ततः क्रियान्तरोत्पत्तिः । तथाच विभागजविभागाभावे द्व्यणुकनाशकक्रियातः द्वादशे, द्व्यणुकनाशान्नवमे क्षणे द्व्यणुके रूपान्तरजन्म । विभाजविभागसत्त्वे प्रथमक्रियातश्चतुर्दशे, द्व्यणुकनाशादेकादशे क्षणे तज्जन्म । तदेवं धार्यम्—

[1]आदौ कर्म[2]ततो विभाग उदिते[3]प्राग्देशसंयोगवि-
ध्वंसोऽ[4]थोत्तरदेशयोगजननं[5]कर्मक्षयोऽथ क्वचित् ।
[1]कर्म[2]कांशविभाग[3]योगविलय[4]द्रव्यक्षयानन्तरं
[5]वैभागप्रविभाग[6]योगलय[7]संयोगक्रमात्[8]तत्क्षयः.॥

एवञ्च—विभागनिष्पाद्यविभागसत्त्वात् क्रियाक्षयादूर्ध्वमणौ क्रियेष्टधा ।
एकादशे तु द्व्यणुकप्रणाशात् क्षणे जनिः स्याद् द्व्यणुके गुणानाम् ॥
यदि क्रियायाः क्षयकाल एव क्रिया, तदा ते दशमे क्षणे स्युः ।
विभागजश्चेत् द्व्यणुनाशकाले क्षणे द्व्यणौ ते नवमेऽपि च स्युः ॥

नवीनैकदेशिनस्तु विभागसमनन्तरक्षण एव विभागजविभागं समर्थयन्ते । (न च तर्हि विभागनिरपेक्षकारणत्वरूपकर्मलक्षणं विभागे-

ऽतिव्याप्तमिति वाच्यम्—संयोगविभागोभयनिरूपितकारणत्वस्यैव तल्लक्षणत्वात् । अत एव हस्तपुस्तकसंयोगसमनन्तरं कायपुस्तकसंयोगस्य, हस्तपुस्तकविभागानन्तरं तद्विभागस्य चोत्पत्तावपि उभयनिरूपितकारणत्वाभावादेव संयोगे विभागे वा नातिव्याप्तिः । न च एवमुभयनिरूपितकारणत्वे लक्षणत्वेनोच्यमाने विभागादावतिव्याप्त्यभावात् तत्र सूत्रे निरपेक्षपदं व्यर्थमिति वाच्यम्—उभयं प्रति समवायिकारणे द्रव्येऽतिव्याप्तिवारणाय तदावश्यकत्वादिति तदाशयात् ।) तदा पुनः अष्टमेऽपि क्षणे द्व्यणुके पाकजगुणा भवेयुः । न च निर्गुणद्रव्ये क्रियानङ्गीकारात् परमाणौ रूपाद्युत्पत्त्यनन्तरमेव द्व्यणुकारम्भकक्रिया वाच्या । रूपाद्युत्पत्तिश्च द्व्यणुकनाशतृतीयक्षणे इति चतुर्थक्षण एव क्रियोत्पत्त्या नवमक्षण एव द्व्यणुके पाकजगुणा इति वाच्यम्—क्रियानाशकाले क्रियाया इव, पूर्वरूपनाशकाल एव पाकजरूपस्य परमाणावुत्पत्तेरुपगमे द्व्यणुकनाशतृतीयक्षण एव क्रियोत्पत्तिसंभवात् ।

सर्वमिदं द्व्यणुकनाशकक्रिया यत्र परमाणौ, तत्रैव पश्चात् द्व्यणुकारम्भकक्रियासंभवस्थले । परमाण्वन्तरक्रियावशात् द्व्यणुकनाशश्यामनाशरक्तोत्पत्तीनां क्रमे चतुर्थक्षणेऽपि द्व्यणुकरूपसंभवः । सुतरां तु षष्ठादौ । श्यामनाशरक्तोत्पादयोर्यौगपद्ये तु चतुर्थक्षणेऽपि । इतोऽपि प्राक् उत्पत्तिस्तु दुर्वचेति ॥ व्यर्थोऽयं पाकजप्रक्रियाविचार इति जयन्तभट्टः । एवञ्च

"द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे ।
यस्य न स्खलिता बुद्धिः, तं वै वैशेषिकं विदुः ॥"

इति वचनं श्लाघनं गर्हणं वेति विमृश्यम् ॥७-८॥

ननु परमाणूनामपि रूपादिमत्त्वे कथं तदनुपलब्धिरित्यत्र पूर्वोक्तं स्मारयति—

९. **अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥ (२६९)**

अनुपलब्धिश्चोपलब्धिश्चोपलब्ध्यनुपलब्धी। अल्पाच्तरस्य पूर्वनिपातः। नित्ये नित्यप्रतिपादकचतुर्थाध्याये। तत्र अणोरनुपलब्धिः महत उपलब्धिश्च विवृता। अतो महत्त्वाख्यकारणाभावात् परमाणूनामनुपलब्धिः। एवं तद्वर्तिगुणादिप्रत्यक्षे तद्द्वारा महत्त्वादिसंबन्ध आवश्यक इति तदभावात् रूपादिकमपि नोपलभ्यते। अथापि तदस्त्येवेति ॥९॥

एवमणुमहतोः प्रस्तुतत्वात् तत्प्रसंगेन परमाणौ महत्त्वाभावोपपादनव्याजेन परिमाणं निरूपयितुमारभते—किञ्च परिमाणं रूपादिवत् एकद्रव्यनिरूप्यम्। एकत्वसंख्यायास्तथात्वेऽपि संख्यासामान्यं न एकद्रव्यनिरूप्यम्। परत्वादेरेकद्रव्यकत्वेपि एकमात्रद्रव्यनिरूप्यत्वं नास्ति। अतो रूपाद्यनन्तरं परिमाणनिरूपणं प्राप्तकालमपि। अतः परिमाणसूत्राणामेवाधिक्यात् संख्यातःप्राक् तत्कथने सूचीकटाहन्यायोगेपि न क्षतिः; प्रसक्तत्वात्।

१०. **कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च महत् ॥ (२७०)**

अनूदितमिदं सूत्रं शाङ्करभाष्ये (२-२-सू-११)। तन्तुबहुत्वात् पटे महत्त्वम्। कपालद्वयगतमहत्त्वात् घटे महत्त्वम्। प्रचयविशेषो नाम अवान्तरावयवशिथिलसंयोगसहितो महापिण्डारम्भकावयवसंयोगः। एतस्मात् तूलपिण्डद्वयगतात् महातूलपिण्डे महत्त्वम्।

---

उप.सू.९. सूचीकटाहन्यायेन संख्यामुल्लंघ्य परिमाणपरीक्षामारभते अणोरिति।

उप. सू. १०. 'कारणबहुत्वाच्च'। चकारो महत्त्वप्रचयौ समुच्चिनोति।

एषाञ्च कारणानां यथायथं समावेशः पार्थक्यञ्च । यथा—त्र्यणुके द्व्यणुकबहुत्वमात्रात् महत्त्वम् ; घटे कपालद्वयगतमहत्त्वमात्रात् ; तूलपिण्डद्वयारब्धे केवलं प्रचयस्य दुर्वचत्वेऽपि अप्रचिततूलपिण्डद्वयारब्धात् प्रचिततूलपिण्डद्वयारब्धेऽवयविनि महत्त्वातिशयदर्शनात् अन्वयव्यतिरेकबलात् प्रचयस्यापि कारणत्वमिति । महदादिशब्दः नीलादिशब्दवत् गुणे गुणिनि च यथार्हं प्रयुज्यते ॥ १० ॥

**११. अतो विपरीतमणु(तद्विपरीतमणु) ॥ (२७१)**

उक्तकारणकमहत्त्वप्रत्यनीकमणुत्वम् ; न तु दीर्घत्वप्रत्यनीकम् । विपरीतत्वञ्च महत्त्वासामानाधिकरण्यात् ; महत्त्वकारणविलक्षणकारणकत्वाच्च । द्व्यणुकपरिमाणं ह्यणुत्वं कारणद्वित्वादुत्पद्यते ; न महत्त्ववद् बहुत्वादेरिति । अणुत्वमणुद्वित्वपर्याप्त्यधिकरणपर्याप्तेऽवयविन्युत्पद्यत इति पूर्वसूत्रे जन्यमहत्त्ववत् अत्रापि जन्यमेवाणुत्वमुक्तं मन्तव्यम् ॥ ११ ॥

ननु बहुत्वादणुत्वजन्मदर्शनात् अणुत्वमहत्त्वयोः सामानाधिकरण्यदर्शनाच्च कथम्, 'अतो विपरीतमणु' इत्युच्यते । दृश्यते हि कुवले (बदरीफले)बह्ववयवजन्ये महत्त्वम्, अणुत्वञ्च आमलकापेक्षया तत्राह—

**१२. अणु महदिति तस्मिन् विशेषभावाद्विशेषाभावाच्च ॥ (२७२)**

तस्मिन् महति कुवलादौ अण्विति महदिति च व्यवहारे यथाक्रमम् अवधिनिर्देशसापेक्षत्वरूपविशेषस्य सत्त्वादसत्त्वाच्च न तुल्यत्वमिति । अयमाशयः—यत्परिमाणव्यवहारः प्रतियोगिनिराकांक्षः, तत् परिमाणं

---

उप.सू.१२. कुवलादौ अणुव्यवहारो भाक्तः, महत्त्वरूपविशेषस्यैव भावात् । तत् कुत इति चेत् अणुत्वरूपविशेषस्याभावात् । महत्त्वकारणस्य सत्त्वात् अणुत्वकारणाभावाच्चेति वा ।

तत्र मुख्यम् । यत्र तु प्रतियोग्याकांक्षा, तत्र अमुख्यं कल्पितम् । कुवलादौ, इदं महदिति निरपेक्षव्यवहारोऽप्यस्ति । अणुव्यवहारस्तु इदमस्मादण्विति सापेक्षतयैवेति ॥ १२ ॥

ननु वेष्टितविस्तृतवस्त्रादौ अणुत्वमहत्त्ववत् कुवलादौ द्वयमपि स्वाभाविकमस्तु । न च प्रतियोगिसाकांक्षत्वमात्रेण गौणता, परत्वापरत्वयोरिव किञ्चिदवधिकत्वस्वभावसंभवात् इत्यत्राह—

१३. **एककालत्वात्** ॥ (२७३)

वस्त्रे हि वेष्टितत्वदशायाम् अण्विति, विस्तृतत्वदशायां महदिति च प्रत्ययः ; न तथाऽत्र ; एककालत्वात्, 'इदं कुवलं महत्', 'आमलकापेक्षया अणु'इति व्यवहारयोः । वस्तुतो वस्त्रोदाहरणमपि न युक्तम् ; तत्रापि वेष्टनदशायामपि महति अणुव्यवहारस्यापेक्षिकत्वात् । तथा परत्वापरत्वयोर्नित्यसापेक्षत्वात् स एव स्वभावः । महादेति प्रत्ययश्च निरपेक्षो भवतीति महत्त्वं तत्प्रत्यनीकमणुत्वञ्च निरपेक्षमेव । तथाच सापेक्षव्यवहारस्य निरपेक्षव्यवहारैककालिकत्वात् न मुख्यत्वमिति । वस्तुतः आमलकात् इदमणु, इदं महदित्यत्र अणुशब्दो निकृष्टपरिमाणे लाक्षणिकः, महच्छब्दश्च प्रकृष्टपरिमाणे तथेति ॥ १३ ॥

१४. **दृष्टान्ताच्च** ॥ (२७४)

यथा एकमेव शुक्लरूपं शङ्खगतं पटापेक्षया शुक्लतरमिति, स्फटिकापेक्षया च निकृष्टशुक्लमिति व्यवह्रियते, तथा एकमेव परिमाणं महत्त्वं तथा तथेति ॥ १४ ॥

रूपादिषु रूपादिमत्त्वाभावः अप्रसक्तप्रतिषेधस्य वैयर्थ्यान्न व्युत्पादितः । अणुत्वादौ तत्प्रसक्तिरस्तीति तत्र व्युत्पादयति—

---

**उप.सू.१३. कुवलादौ अणुत्वमहत्त्वोभयप्रतीतेरेककालत्वादेकैव प्रतीतिर्मुख्या ।**

१५. **अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः** (२७५)

अत्रैवमाशङ्का भाव्या—अणोः कारणं परमाण्विति, महाण्विति व्यवहारार्हमिति अणुत्वे महत्त्वं सिद्ध्यति । तस्य महाणुत्वे च द्व्यणुकम् अण्वणु भवतीति सिद्धमणुत्वेऽप्यणुत्वम् । एवं घटाद्यपेक्षया गिरिगगनादिर्महामहान्; घटादिश्चाणुमहानिति महत्त्वेप्यणुत्वमहत्त्वसिद्धिरिति । इयमिह परिह्रियते—अणुत्वे महत्त्वे च प्रत्येकमणुत्वमहत्त्वयोर्द्वयोरभावः कर्मगुणैरुपपादितो भवतीति । विषयेण विषयिनिर्देशनशीलो महर्षिः कर्मगुणैरित्यनेन कर्मगुणप्रतिपादकसूत्रैरित्यभिप्रैति॥१५॥

ननु तेषु सूत्रेषु कुत्राणुत्वमहत्त्वप्रस्तावः, अनुपलम्भादित्यत्र विशदयति—

१६. **कर्मभिः कर्माणि गुणैश्च गुणाः व्याख्याताः ॥** (२७६)

कर्माणि यथाभूतानि, तथाभूतानि कर्मभिः कर्मविषयकसूत्रैर्व्याख्यातानि । गुणाश्च यथाभूताः, गुणविषयकसूत्रैः । 'द्रव्याश्रय्यगुणवान्,' 'एकद्रव्यमगुणम्,' 'गुणकर्मसु च भावान्न कर्म न गुणः,' 'क्रियावद्वैधर्म्यान्निष्क्रियाणि,' 'एतेन कर्माणि गुणाश्च व्याख्याताः' इति हि गुणकर्मणां सामान्यतो गुणे कर्मराहित्यमुक्तम् । तेन तदन्तर्गतयोरणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावोऽपि व्याख्यात एवेति । तथाच अण्वणु महाणु इत्यादौ अणुमहच्छब्दौ निकर्षप्रकर्षार्थकौ गौणौ, न तु परिमाणार्थावित्युक्तं भवति । सूत्रे व्याख्याता इति पुँल्लिङ्गनिर्देशश्च (५-२-२३) विचारितचरः ॥ १६ ॥

ननु कर्मगुणानां रूपादिगुणान्तरानाश्रयत्वेऽपि अणुत्वमहत्त्वाश्रयत्वमावश्यकम् । अणूनि कर्माणि, महान्ति कर्माणि, अणुः शब्दः, महान् शब्दः इत्यादिप्रत्ययादित्यत्राह—

**१७. अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥ (२७७)**

अणुत्वमहत्त्वविषयकेण तत्र तदभावप्रतिपादकेन, ' अणुत्व-महत्त्वयोरणुत्वमहत्त्वाभावः ' इति सूत्रेण कर्मगुणा अपि अणुत्व-महत्त्वरहिततया व्याख्याताः । यथाऽणुत्वादावणुत्वादिकमौपचारिकं निकर्षादिरूपम् , तथैवाणूनि कर्माणीत्यादावपीति ॥ १७ ॥

' अणोर्महतश्चे ' ति अणुत्वमहत्त्वयोः प्रस्तुततया तद्विषये कृतं कारणनिरूपणमधिकरणशोधनञ्चान्यत्रापि परिमाणद्वयेऽतिदिशति—

**१८. एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥ (२७८)**

एतेन अणुत्वमहत्त्वयोः कारणाधिकरणवर्णनेन दीर्घत्वह्रस्वत्वे कारणविशेषाधिकरणविशेषवत्तया व्याख्याते । महत्त्ववत् दीर्घत्वमपि कारणबहुत्वादिभिरुत्पद्यते, तद्विपरीतं ह्रस्वत्वम् । न तु महत्त्वप्रत्यनीकं ह्रस्वत्वम् , तथा व्यवहाराभावात् । कारणद्वित्वाच्च ह्रस्वत्वोत्पत्तिः । तच्च द्व्यणुके । समिदिक्षुवंशादिष्वञ्जसा दीर्घेष्वपि ह्रस्वव्यवहारः निकृष्टपरिमाणकत्वविवक्षया भाक्तः । ह्रस्वत्वदीर्घत्वयोरपि न ह्रस्वत्व-दीर्घत्वाधिकरणत्वम् , कर्मगुणन्यायादित्युक्तं भवति ॥ ह्रस्वत्वदीर्घत्वे कार्याणुत्वमहत्त्वसमानाधिकरणे एव ; न तु परमाणोर्ह्रस्वत्वम् , न गगनादेश्च दीर्घत्वमिति भाष्यस्वारस्यदर्शिनः । ('महद्दीर्घवद्वा ह्रस्व-परिमण्डलाभ्याम् ' इति ब्रह्मसूत्रे द्व्यणुके परं ह्रस्वपदप्रयोगः परमाणौ ह्रस्वत्वाभावपक्षपोषकः स्यात् ।) परमह्रस्वत्वं परमदीर्घत्वञ्च क्रमेण तत्र निराबाधमिति किरणावलीकारनिर्वाहः । तदा च सूत्रमिदम् उक्त-कार्यमहत्त्वाणुत्ववक्ष्यमाणनित्याणुत्वमहत्त्वसर्वसाम्यातिदेशपरं मन्तव्यम् ।

नन्वेकैकवस्तुनि परिमाणद्वयाङ्गीकारो व्यर्थः । एकैकस्यैव अणु-ह्रस्वपदाभ्यां महद्दीर्घपदाभ्याञ्च व्यवहारसंभवात्। महत्त्वादिकंप्रति कारणादेव दीर्घत्वाद्युत्पत्तेरिह दर्शिततया कारणवैलक्षण्याभावादपि कार्यैक्यमेवावसीयत इति चेत्—न; लोके, महत्सु दीर्घमानीयताम्, दीर्घेषु महदानीयताम् इत्यादिव्यवहारविशेषेण तेषां भेदप्रतीतेः। न च महद्दीर्घ-पदयोरणुह्रस्वपदयोश्च पर्यायत्वं कश्चिद् वक्तुमर्हति। तर्हि परिमाणभेदे कारणवैलक्षण्यमप्यावश्यकमिति चेत्—अस्तु तदपि। यथा—साक्षादवयवानां तदवयवानां वा एकदिक्कानां बहुत्वे दीर्घत्वम्; अनियतदिक्कानां तेषां बहुत्वे महत्त्वम्; प्रथमाभावे ह्रस्वत्वम्, द्वितीयाभावेऽणुत्वमिति। एवञ्च त्र्यणुके दीर्घत्वमहत्त्वयोस्सिद्धिरविकला। एकस्यामेव दिशि पङ्क्त्या निविष्टैः द्व्यणुकैस्त्र्यणुकजनने दीर्घत्वं निर्विवादम्। द्वयोर्द्व्यणुकयोः पार्श्वे द्व्यणुकान्तरसंगमेऽपि द्व्यणुकद्वयान्तर्गतपरमाणु-रूपावयवबहुत्वाद्दीर्घत्वोपपत्तिः। एवं पूर्वत्र्यणुके महत्त्वमपि भाव्यम्।

एतदेव मनसिकृत्य भाष्ये, 'परमाणुद्व्यणुकेषु बहुत्वसंख्या—कार्यद्रव्ये त्र्यणुकादिलक्षणे—महत्त्वं दीर्घत्वञ्च करोतीति परमाणुपद-प्रयोग इति ध्येयम्। द्व्यणुके च दीर्घत्वमहत्त्वनियामकस्य द्विविधस्यापि बहुत्वस्य परमाण्ववृत्तितया तत्तदभावरूपसहकारिविशिष्टा परमाणुद्वित्व-संख्या ह्रस्वत्वाणुत्वोत्पादिकेति।

ननु व्यवहार एव पदार्थव्यवस्थापकः। लोके च कुवलादौ आपेक्षिकतया अण्विति, महदिति च व्यपदेशो भवति। तथाचाणुमह-च्छब्दौ निकृष्टोत्कृष्टपरिमाणविषय एव मुख्यौ। एकैकस्यापि परिमाणस्य किञ्चिदपेक्षया निकर्षस्य, अन्यापेक्षया प्रकर्षस्य च सद्भावात् व्यवहार-

द्वयं मुख्यमेवोपपन्नम्। एवञ्चाणुत्वत्वमहत्त्वत्वयोः संकीर्णत्वात् अणु महदिति पृथग्विभाग एवानुपपन्नः। एवं ह्रस्वदीर्घविभागोऽपि। परमाणुमारभ्य परममहत्पर्यन्ते च परिमाणतारतम्यं सर्वसंप्रतिपन्नम्। त्र्युणकात् द्व्यणुकमपकृष्टम्, ततः परमाण्वपकृष्टमिति च बहुलं शास्त्रे व्यवह्रियते। न चैवं द्व्यणुकस्यापि महत्त्वापत्तिः, परमाण्वपेक्षया प्रकृष्टपरिमाणत्वादिति शङ्क्यम्—इष्टापत्तेः। तर्हि तत्प्रत्यक्षापत्तिः, प्रत्यक्षे महत्त्वस्य कारणत्वादिति चेत्—अनेकद्रव्यवत्त्वं हि प्रत्यक्षकारणम्। तत् तत्र नास्तीति। प्रकृष्टमहत्त्वत्य वा प्रत्यक्षकारणत्वस्वीकारात् तदापत्तिपरिहारः सुकरः। न च द्व्यणुकस्य अतिशयितपरिमाणत्वे अणोरणुतरत्वप्रसंगः; अणुत्वमतिशयितमित्यनुक्तेः; सामान्यतः परिमाणमतिशयितमित्येवोक्तेरिति चेत्—उच्यते। घटपटादिषु मदद्दीर्घव्यवहारवत् अणुह्रस्वव्यवहारस्याविशेषेण सर्वत्र स्वरसतोऽनुपलब्धेः, उक्तरीत्या अणुमहच्छदयोर्निकृष्टप्रकृष्टपरिमाणमात्रार्थकत्वे तादृशव्यवहारस्याविशेषेणाऽऽपत्तेः अणुह्रस्वव्यवहारो भाक्त इत्यवसीयते। तच्च यादृशाणुत्वमहत्त्वस्वीकारे उपपद्यते, तादृशमेव तत् अण्वादिपदमुख्यार्थो भवितुमर्हतीति विमृश्यैवं विभागः कृत इति निरवद्यम्। परिमाणगतप्रकर्षयोरवधिसापेक्षत्वेऽपि परिमाणस्वरूपमवधिनिरपेक्षमिति तस्य नामविशेषः अणुमहदादिरिति ॥१८॥

चतुर्विधमपीदं परिमाणं द्रव्यनाशादेव नश्यतीत्याह—

१९. **अनित्येऽनित्यम्॥** (२७९)

अनित्य इत्यनेन द्रव्यानित्यत्वस्य हेतुत्वं सूचितम्॥१९॥

नित्यगतं परिमाणं पार्थिवपरमाणुरूपादिवत् अन्यस्मात् कारणान्नश्यतीति न मन्तव्यमित्याह—

२०. नित्ये नित्यम् ॥ (२८०)

द्रव्यस्य नित्यत्वे आश्रयनाशरूपकारणाभावान्न नाश इत्यर्थः ॥२०॥

परमाणोः दीर्घत्वादेर्न प्रसक्तिरिति ज्ञापयितु संज्ञां काञ्चित् परिभाषते—

२१. नित्यं परिमण्डलम् ॥ (२८१)

ब्रह्मसूत्रे २-२-१० परमाणौ परिमण्डलपदप्रयोगात्, (४-२-२३) न्यायभाष्यवार्तिकादावपि तथैव दर्शनात्, 'परमाणोः परिमण्डलत्वात्' इति कन्दल्यादिव्यवहाराच्च परिमण्डलमिति परमाणोःसंज्ञेत्यवसायात् नित्यपदमत्र प्रस्तुतकार्यद्रव्यकारणत्वेन प्रस्तुतपरमाणुद्रव्यपरम्। तत् परिमण्डलम्। तदीयपरिमाणं तु पारिमाण्डल्यम्। तथाच प्रशस्तपादभाष्यम् "कारणत्वञ्चान्यत्र पारिमण्डल्यादिभ्यः" इति। परिमण्डलस्य भावः पारिमाण्डल्यमिति। अन्यथा पुनः परिमण्डलपदमेव महदादिपदवत् परिमाणे तदाश्रये च प्रयुज्यत इति स्वीकर्तव्यम् ॥२१॥

ननु नित्ये परिमाणाङ्गीकारे किं प्रमाणम्? न तावत् कार्यपरिमाणम्, तस्य द्वित्वसंख्ययैव जन्यत्वात्। न च प्रत्यक्षमस्ति। अतो महत्त्वाभावमात्रेणाणुव्यवहार इत्यत्राह—

२२. अविद्या च विद्यालिङ्गम् ॥ (२८)

अविद्या भ्रमः विद्यायाः प्रमाया लिङ्गम्। शुक्तौ रजतभ्रमो हि वास्तवरजतज्ञानाधीनरजतसंस्कारबलाद्भवति। तथा कुवलादिषु अणुत्वभ्रमः क्वचिदणुत्वप्रमासापेक्षः। प्रमा च वस्तुसाधिकेति क्वचिद्वस्तुतोऽणुत्वं स्वीकार्यम्। तच्चाणु नित्यद्रव्यमेवेति। ननु कुवलादावापेक्षि-

---

उप. सू. २१. परमाणुपरिमाणे परिमण्डलमिति वैशेषिकसंज्ञा। परिमण्डलमेव पारिमाण्डल्यम्।

काणुत्वज्ञानं सर्वजनसाधारणम्। सा चेद् भ्रान्तिः, तर्हि प्रमाधीना वाच्या। न च परमाणुः केनापि प्रत्यक्ष्यते। न च पामरैरनुमीयते। न चान्यदीयप्रमा अन्यस्य भ्रान्तये उपयुज्यते। अतः कथं भ्रान्तिरिति चेत्—उच्यते। आदिसृष्टौ योगिभिः परमाणूनां प्रत्यक्षितत्वात् परीक्षकैश्चानुमितत्वात् तत्कृतमणुशब्दस्यौपचारिकं प्रयोगमुपजीव्यार्थ-विशेषमाकलयन्तस्सर्वे तथा प्रयोगमनुकुर्वते। तत्परिशीलने च महत्त्व-प्रकर्षाभावमात्रादयममुख्यः प्रयोगः, इदमेव मुख्यमणुत्वमिति चैषां भ्रान्तिरित्यवसीयत इति नानुपपत्तिरिति॥ सूत्रे चकारो हेत्वन्तरस-मुच्चयार्थः। तथाच द्रव्ये न महत्त्वाभावमात्रादणुव्यवहारः, किन्तु तत्र सत्याणुत्वप्रमैवेत्ययेदमणुत्वप्रमायामन्यदपि लिङ्गम्, नित्यं परि-माणवत् द्रव्यत्वादित्यनुमानात्। तथा नित्यं परिमाणवत् द्व्यणुका-द्यपेक्षयाऽपकृष्टत्वादिति। न ह्यपकर्षो महत्त्वाभावनिष्ठस्तुवचः, अभावे उत्कर्षापकर्षायोगादिति॥ २२॥

एवं द्रव्यसमवायिकारणेषु परमाणुषु परिमाणमुपपाद्य अन्यादृश-नित्येष्वाकाशादिष्वपि तदाह—

**२३. विभवान्महानाकाशः, तथा चात्मा॥ (२८३)**

सर्वत्रशब्दहेतोराकाशस्य सर्वमूर्तद्रव्यसंयोगित्वरूपं विभुत्वं सिद्धमिति तत एव महत्परिमाणमपि सिद्ध्यति। अतः परममहान् आकाशः। शब्दस्य सर्वदेशावच्छेदेनोत्पत्तावपि ज्ञानादेः शरीरावच्छे-देनैवोत्पादात् आत्मनो महत्त्वं विभुत्वञ्च नास्तीति मतिं वारयि-तुमाह—तथाचात्मेति। आत्मापि विभवाधीनमहत्त्ववानित्यर्थः। 'आकाश आत्मा चेति वक्तव्ये तथाचात्मेति निर्देशः विशेषप्रयत्न

प्रदर्शनेन वेदान्तिमतानङ्गीकारार्थः । वेदान्तिनो ह्यात्मानमणुमातिष्ठन्ते । एवं तर्हि कथं तदधीनकार्योत्पादः सौभर्यादिभिरनेकेषु देशेषु युगपदनेकशरीरपरिग्रहात् इति चेत्—तदणुत्वेपि तदीयधर्मभूतज्ञानस्य सर्वतो व्यापनशीलत्वात्तदुपपत्तिरिति ते समादधते । तत्रास्यारुचिः । अवश्यं विभुत्वमेष्टव्यम् । तत् साक्षादेवात्मनि मन्यताम्, आकाशादिवत् ; किमिति धर्मभूतज्ञानद्वारा तत्कल्पना । ज्ञानमपि हि रूपादिवत् आगन्तुकं गुणभूतमिति न तस्य विभुत्वं सुवचम् । एवञ्च तत्तदात्मार्थकार्याणामनुकूलप्रतिकूलरूपाणां सर्वदेशभाविनामप्यदृष्टवदात्मसंयोगादुपपत्तिः सुवचा । अत आत्मा विभुर्महानिति ॥२३॥

नन्वात्मनो विभुत्वे विभुना मनसा तस्य संयोगः कथमिति शङ्कां परिहर्तुम् आत्मानन्तरनिर्दिष्टस्य तदुपकरणस्य मनसः परिमाणमाह—

२४. **तदभावादणु मनः** ॥ (२८४)

मीमांसका आत्मवत् मनसोऽपि विभुत्वमाकलयन्ति । विभुद्वयसंयोगं स्वीकृत्य तस्य ज्ञानकरणत्वमुपपादयन्ति । तन्न युक्तम् । तथा च तदभावात् विभवाभावात् मनोऽणुपरिमाणमिति । कथं तदाभावसिद्धिरिति चेत्—यस्य हि युगपद्ज्ञानानुत्पत्तिबलेनाध्यात्मिकेन्द्रियद्वयसंयोगोऽपि युगपन्न भवतीति स्थितम्, तस्य कथङ्कारं सर्वमूर्तसंयोगरूपो विभव इति । यद्यपि विभवाभावो घटादावपीति न ततोऽणुत्वं सिद्ध्येत्—अथापि नित्यद्रव्यप्रकरणान्नित्यत्वमप्युपस्थितं हेतुघटकमिति, सिद्ध्यति—मनः अणु नित्यत्वे सति अविभुत्वात् पार्थिवादिपरमाणुवदिति ॥ २४ ॥

ननु किमिति कालदिशोरुपेक्षया तदनन्तरस्यात्मनो ग्रहणमित्यत्राह—

२५. गुणैर्दिग् व्याख्याता ॥ (२८५)

विभुत्वादाकाशस्य महत्त्वमुक्तञ्चेत्, तन्न्यायेन दिक्कालयोरपि तत् निराबाधम्। आत्मनि पुनर्विभुत्वमेव केषाञ्चिन्नेष्टमिति तस्य विशेषत उक्तिरिति। यद्वा स्वगतशब्दज्ञानरूपविशेषगुणार्थमाकाशात्मनोर्विभुत्वादिकमिति तत् एकसूत्रेणोक्त्वा परगतपरत्वाद्यर्थविभुत्वादिमन्तौ दिक्कालाविति तत् ततः परमाहेति ध्येयम्। पूर्वत्वपश्चिमत्वोत्तरत्वदक्षिणत्वादिभिः सर्वदेशगतैर्हि गुणैर्दिग् विभुतया व्याख्यातेति। पञ्चमाध्यायस्थस्य सूत्रस्य तथैव पाठात् तत्रोक्तमपि स्मारयति। तत्स्मारणार्थञ्च तत्रैवात्रापि क्रमलङ्घनम्। तथा च दिक्कालयोर्निष्क्रियत्वं सर्वदेशवृत्तिक्रियाकारणत्वञ्च तत्रोक्तम्। ताभ्यामपि धर्माभ्यां पूर्वत्वादिभ्य इव दिग् विभुत्वेन व्याख्यातेति ॥ २५ ॥

२६. कारणे कालाख्या ॥ (२८६)

सर्वकार्यकारणे कालाख्या च प्रागेव व्याख्यातेति सोपि विभुरेव। तत् सिद्धं तयोरपि परममहत्त्वमिति। तदेवं रूपरसगन्धस्पर्शपरिमाणानि निरूपितानि ॥

रूपादीनां पाकजत्वमाह नित्यादिकां विधाम्।
परिमाणे च तां भेदमाधारं सप्तमादिमे ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने सप्तमे प्रथममाह्निकम् ॥

श्रीः

## अथ सप्तमे द्वितीयमाह्निकम्

अथात्र द्वितीये अनेकद्रव्यनिरूप्यगुणजातीयनिरूपणम्। एक-

---

उप. सू. २६. परापरव्यतिकरादिकारणे काल इति समाख्या।

त्वस्यानेकद्रव्यनिरूप्यत्वाभावेऽपि तथानिरूप्य द्वित्वादीनां सङ्ख्यात्वेन साजात्यादत्र निरूपणं युक्तम् । एकपृथक्त्वस्य तु एकमात्रसमवेतस्यापि अनेकनिरूप्यत्वमस्ति, इदमस्मात् पृथगित्येव व्यवहारात् । तथा परत्वापरत्वयोरपि । द्वित्वादेः संयोगविभागयोश्च तत् व्यासज्यवृत्तित्वात् । तद्धि मिथस्सापेक्षवृत्तिकत्वम् , युगपदेवानेकवृत्तित्वमिति । नव्यास्तु—अनेकपर्याप्तत्वमेव व्यासज्यवृत्तित्वम् । तच्च न संयोगादौ । तद्धि अनेकमात्रविशेष्यकधीप्रकारत्वम् । द्वित्वादि हि न एकविशेष्यकधीप्रकारः, इदं द्वे इति बुद्ध्यभावात् । नैवं संयोगादि इत्याहुः । तत्राऽऽदौ सङ्ख्यां निरूपयति—

**१. रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥ (२८६)**

रूपरसगन्धस्पर्शानां व्यतिरेकात् एकव्यवहारविषयीभूते आकाशादावभावात् । एकत्वं यथा प्रत्येकवृत्ति, तथा रूपादिकमपि प्रत्येकवृत्ति । एवञ्च ' रूपरसगन्धस्पर्शाः ' इत्युक्त्वा तदधिकतया ' सङ्ख्याः ' इति विभागसूत्रे कथनमनुपपन्नमिति शङ्का । सेह परिहृता । रूपाद्यभावेऽपि आकाशादौ एकव्यवहारात् न रूपादिरूपं तदिति । उपलक्षणमिदं परिमाणादिषु मध्ये किञ्चिदेवैकत्वं स्यादिति शङ्कापरिहारस्यापि । यद्यप्येकत्वं न घटादिकं भवेत् । धर्मधर्मिभावात् । नापि घटत्वादिरूपम्—अयमयञ्च घट इतिवत् अयमयञ्चैक इति प्रत्ययाभावात्—अथापि प्रत्येकवृत्तिपरिमाणरूपं स्यादिति चेन्न—एको महानिति सहप्रयोगेण परिमाणातिरिक्तत्वसिद्धेरिति । एवं द्वित्वादेरप्यतिरिक्तत्वं भाव्यम् । दर्शितञ्च तत् आदावेव, " द्वित्वप्रभृतयः संख्याः—" इति ॥ १ ॥

पृथक्त्वस्य संख्यानुविधायित्वात् सहैव तदपि निरूपयति—

**२. तथा पृथक्त्वम्॥ (२८७)**

तथा रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरम्। गगनं घटात् पृथगिति गगनादावपि तत्प्रतीतेः। एवं पृथक्त्वमेकत्वादिरूपमपि न भवति, अवधिसापेक्षव्यवहारविषयत्वात्। इदमस्मात् पृथगिति हि व्यवहारः। नाप्येतत् परत्वादिरूपम्, सन्निकर्षविप्रकर्षादिनिरपेक्षत्वात्। नाप्यन्योन्याभावः, प्रतीतिवैलक्षण्यात्। इदमिदं न भवतीति हि अन्योन्याभावग्रहः। न तत्र पञ्चमीप्रयोगः। 'अन्यत्' 'अर्थान्तरम्' भिन्नम्' इत्यादिकञ्च पृथक्पदपर्यायभूतं नान्योन्याभावार्थकमिति।

ननु पञ्चमीनिर्देशः पृथगादिशब्दस्वाभाव्यायत्तः; न त्वर्थभेदः; पुष्पाणि कामयते, पुष्पेभ्यः स्पृहयतीतिवत् इति चेन्न—'अन्यारात्—" इति सूत्रेऽन्यपदस्यार्थपरताया एव शाब्दिकसंमततया पृथक्त्वान्योन्याभावयोरैक्ये घटाद् भेद इतिवत् घटो न पट इत्यत्रापि पञ्चम्यापत्तेः।

इदञ्च पृथक्त्वम् एकपृथक्त्वादिभेदेन नाना, एकैकैकत्वसमनियतं पृथक्त्वम् अयमस्मात् पृथगित्यनुभवसिद्धम्। द्वित्वादितुल्यपर्याप्तिकं द्विपृथक्त्वादि च इमावस्मात् पृथगित्याद्यनुभवसिद्धम्। तत्र एकत्वत्वद्वित्वत्वादिर्जातिः। पृथक्त्वत्वमेकैव जातिस्संख्यात्ववत् व्यापिका। एकपृथक्त्वत्वद्विपृथक्त्वत्वादिकं तु एकत्वद्वित्वादिवैशिष्ट्यबलाद्भिन्नमिति न वस्तुतोऽनेकमिति भाष्यस्वरसगतिः। व्याख्यातारस्तु विवदन्ते ॥२॥

'एकमेकत्वम्', 'एकपृथक्त्वं घटात् पृथक्' इत्यादिप्रतीतिबलात् एकत्वादावप्येकत्वादिकमस्तीति शंकां परिमाणदर्शितरीत्या प्रतिहरति—

**३. एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ (२८८)**

अन्यथा एकत्वे एकत्वम्, तत्राप्येकत्वमिति रीत्याऽनवस्थाऽपि स्यात्। यद्यनवस्थापरिहाराय एकत्वगतमेकत्वमेकमिति व्यवहारस्याऽन्यथानिर्वाहः, स प्रथमतः एकत्वमेकमितिव्यवहारेऽपि तुल्यः। अतो यथा रूपादिगुणान्तराणां न रूपाद्याधारता, तथा एकत्वादेरपि एकत्वाधारता नेति ॥ ३ ॥

एकं रूपम्, एकमुत्क्षेपणमित्यादिप्रतीत्या गुणेषु कर्मसु च सर्वत्र एकत्वं प्रत्येकं स्वीकार्यमितीदं निरस्यति—

**४. निःसंख्यत्वात् कर्मगुणानां सर्वैकत्वं न विद्यते ॥ (२८९)**

कर्मसु गुणेषु च एकत्वं न विद्यते, कुतः? निःसंख्यत्वादिति। नन्वेकत्वमस्तीति शङ्कमानः कथं निःसंख्यत्वमभ्युपगच्छेत्। अतो हेतुरसिद्ध इति चेत्-अयमाशयः-यदि कर्मगुणानामप्येकत्वादिसंख्या स्यात्, तदा घटादावेकस्मिन् दृश्यमाने तद्गतरूपादिगुणकर्मगणनेन, इमानीति स्वरसप्रतीतिः सर्वत्र स्यात्; यथा नानाघटेषु सत्सु 'इमे' इति। अतस्तत्र संख्याविरहात् तान्यादाय बहुत्वान्वयस्यानुचितत्वादेव तथा न प्रतीतिः। अतस्संख्यासामान्यादेकत्वमपि नास्तीति। इदं पृथक्त्वस्याप्युपलक्षणम्। संख्यानुविधायित्वात्तस्य संख्याऽभावेऽभावात् ॥ ४ ॥

तर्हि कथम् एकमेकत्वम्, एकपृथक्त्वं पृथक्, एकं रूपं रसात् पृथक्, एकं कर्मेत्यादिज्ञानमिति चेत्—आह—

**५. भ्रान्तं तत् ॥ (२९०)**

भ्रान्तमिति भावे क्तः। तत् उक्तरूपं ज्ञानं भ्रान्तं भ्रम इति।

भ्रान्तोऽयं प्रत्यय इत्यपि व्यवहारात् कर्तरि क्तप्रत्ययो वा। भ्रान्तं अन्यथाऽवगाहि इत्यर्थः। यथा घट एकस्सन् स्वस्वरूपादभिन्नः, तथा एकत्वं रूपं कर्मेत्यादि सर्वं स्वात्माभिन्नमिति तत्सादृश्यात्तत्र एकत्वभ्रम इति। एवमेकपृथक्त्ववतो घटस्यान्योन्याभावाश्रयत्ववत् एकपृथक्त्वस्यापि तद्वत्त्वात् तत्साजात्यात् पृथक्त्ववत्ताभ्रमः। आप्तव्यवहारस्तु स्वरूपाभेदविषयकतया अन्योन्याभावविषयकतया भक्त्या निर्वहणीयः। उत्तरसूत्रे भक्तिरिति श्रवणात् अत्रापि सूत्रे भ्रान्तमित्यत्र भाक्तमित्यपि पाठः स्यात्। तदा तदित्यस्य सर्वैकत्वं गुणाद्येकत्वमित्यर्थश्च स्फुटः ॥५॥

ननु द्रव्येऽप्येकत्वं मास्तु। एकव्यवहारस्तु स्वरूपाभेदमादायैव सर्वत्र स्यात्। तत्राह—

**६. एकत्वाभावाद् भक्तिस्तु न विद्यते ॥ (२९१)**

द्रव्येऽप्येकत्वासंमतौ एकपदमुख्यार्थ एवाप्रसिद्धः स्यात्। न च मुख्यार्थाभावे भक्तिः—उपचारवृत्तिर्घटते इति। ननु स्वरूपाभेद एकत्वम्। तद्भेद एव च द्वित्वादिकः स्यात्। अतः संख्यारूपैकत्वादौ किं प्रमाणमिति चेन्न—स्वरूपाभेद इत्यस्य यदि सामान्यतो धर्म्यभेद इत्यर्थः, तदा शुक्लाः पटा इत्यत्र शुक्लत्वावच्छिन्नाभेदः शुक्लैकत्वं स्यात्। तथा च तत्र एकशुक्लप्रतीतिरिष्टा स्यात्। यदि तद्व्यक्त्यभेदस्तत्तदेकत्वम्, तर्हि अन्यव्यक्तौ एकत्वव्यवहारः कथम्। तत्तद्व्यक्त्यभेद इति चेत्—तत्र एकैकतत्पदेन अनेकग्रहणं कुतो न? अथ एकव्यक्त्यभेदः एकत्वमित्युच्यते, तर्हि तत्रैकत्वघटनात् सिद्धं नः समीहितम्। तस्मात् संख्यारूपमेकत्वमादाय द्रव्यव्यवहारे सति क्वचिद्गुणादौ एकत्वव्यवहारः तत्रतत्र तत्तद्व्यक्त्यभेदलक्षणयेत्याशयः ॥ ६ ॥

नन्ववान्तरावयवघटिते महावयविनि अयमेक इति व्यवहारदर्शनात् अवयवावयविभावापन्नयोः कार्यकारणयोः पर्याप्तमेकत्वमस्तीति ज्ञायते । अत एव तन्तुपटयोरेकभूतलादिवृत्तित्वोपपत्तिः । अन्यथा तयोर्भेदे मूर्तयोस्समानदेशताविरोधात् । अवयवावयविविषये परं समानदेशत्वं न दोषायेति कल्पनस्यानावश्यकत्वात् । तथा अयं पृथगित्येकपृथक्त्वमपि तयोरित्यत्राह—

**७. कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं(?) न विद्यते ॥ (२९२)**

कार्यकारणयोः अवयवावयविनोः एकत्वैकपृथक्त्वयोरभावात् असंभवात् । यद्वा एकत्वैकपृथक्त्वयोरभावो यस्मात् तत् एकत्वैकपृथक्त्वाभावम्; तस्मात् । एकत्वाद्यभावसाधकानेकहेतुसंग्रहायैवमुक्तिः । अपिवा उपस्कारीत्याऽस्तु—एकत्वाभावात् अभेदाभावात्, एकपृथक्त्वाभावात् अवैधर्म्याभावात्, वैधर्म्यसत्त्वादेकत्वादिकं न विद्यते नास्तीति । अथवा अयमेकः, पृथगिति व्यवहारतः कार्यकारणयोरेकत्वमेकपृथक्त्वञ्च न विद्यते न ज्ञायते । कुतः ? वस्तुतस्तत्रैकत्वस्यैकपृथक्त्वस्य चाभावादिति सूत्रार्थः । तदभाव एव कुत इति चेत्—तयोर्भेदात् । तन्तव एव खलु मिथो भिन्नाः । तत् केन तन्तुना सह पटस्यैक्यम् । अन्यथा तन्तोस्तन्त्वन्तरादपि भेदो न स्यात्, तदभिन्नपटाभिन्नतया तदभिन्नत्वप्रसंगात् । तथा च अयमेक इत्यादौ इदम्पदं नावयवावयविसमुदायपरम्, किंतु अवयविव्यक्तिमात्रपरमिति न दोष इति भावः । एवं भेदसाधकजातिभेदपरिमाणभेदादिकमत्र ग्राह्यम् । एकत्वैकपृथक्त्वमिति समाहारैकवचनम् । द्विवचनान्तपाठ एव तु व्योमवत्याम् ॥ ७ ॥

एवमेकत्वादेः स्वरूपमधिकरणञ्च विचार्य तत्र, रूपादौ परिमाणे च प्रागुक्तरीत्या नित्यानित्यविवेकं दर्शयितुमाह—

८. **एतदनित्ययोर्व्याख्यातम्॥** (२९३)

एतत् एकत्वैकपृथक्त्वम् अनित्ययोः विनश्वरकार्यकारणयोः स्थितमनित्यत्वेन व्याख्यातम्, द्रव्यानित्यत्वाद् गुणानित्यत्वस्य प्रागुक्तत्वात्। आश्रयनाशातिरिक्तप्रकारेणैकत्वादेर्नाशो नास्तीत्यर्थः। नित्यगतं नित्यमित्यर्थसिद्धम्॥

एवमेकत्वमेकपृथक्त्वञ्च न्यरूपि। इमे च कारणगुणपूर्वके कार्यगते। द्वित्वद्विपृथक्त्वादिकं तु नित्येऽनित्ये च सर्वत्रानित्यम् अपेक्षाबुद्धिजन्यम्। अपेक्षाबुद्धिश्च—अयमेकः, अयमेक इत्युभयैकविषयिणी द्वित्वहेतुः, त्रितयविषयिणी त्रित्वहेतुरित्यादि भाव्यम्। एवं द्विपृथक्त्वादिकमपि, अयमेकः पृथक्, अयमेकः पृथगिति एकपृथक्त्वद्वयादिविषयकापेक्षाबुद्धिजन्यम्। बुद्धिजन्यत्वाच्च इदं सर्वं पुरुषभेदेन भिन्नम्, बुद्धिनाशे च विनाशि। अत एव तत्तत्पुरुषबुद्धिजन्यं द्वित्वादि तत्तन्मात्रवेद्यम्। तर्हि बुद्धीनां द्विक्षणावस्थायित्वात् बुद्धेस्तृतीयक्षणे नाशे चतुर्थक्षणे द्वित्वनाशात् कथं द्वेद्रव्ये इति द्वित्वप्रत्यक्षम्, द्वित्वस्य पूर्वक्षणे अभावादिति चेत्—एतदर्थमेवापेक्षाबुद्धिः क्षणत्रयमस्तीति स्वीक्रियते, अयञ्चात्र आचार्योदयनस्य लक्षणावल्यां संग्रहश्लोकः,—

"आदाविन्द्रियसंनिकर्षघटनादेकत्वसामान्यधीः
एकत्वोभयगोचरा मतिरथो द्वित्वं ततो जायते।
द्वित्वत्वप्रमितिस्ततोऽपि परतो द्वित्वप्रमाऽनन्तरं
'द्वे द्रव्ये' इतिधीरियं निगदिता द्वित्वोदयप्रक्रिया॥"

इति। एवं बहुत्वमपि काचित् संख्या त्रित्वादिसमानाधिकरणा;

तदुत्पत्तिश्च अनियतैकत्वज्ञानरूपापेक्षाबुद्धेरिति कन्दलीकृतः । द्वित्वाधिकसंख्या त्रित्वादिरेव बहुत्वमिति किरणावलीकृतः । अत्रेदं बोद्धव्यम्-- द्वित्वोत्पत्तौ एकत्वद्वयमसमवायिकारणम् , त्रित्वोत्पत्तौ द्वित्वविशिष्टैकत्वम् , चतुष्ट्वोत्पत्तौ त्रित्वविशिष्टमेकत्वमिति क्रमः । तत्र मध्ये द्वित्वत्रित्वाद्यनुत्पादे एवंभूतासमवायिकारणाभावाद् बहुत्वमेव जायते । बहुत्वञ्चेदं तारतम्यशालि ; शतगतबहुत्वात् सहस्रगतबहुत्वस्य व्यापकत्वरूपातिशयसद्भावादित्यलम् ॥८॥

अथ संयोगनिरूपणस्य प्राप्तावसरत्वात् तमाह---

**९. अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः ॥ (२९४)**

अप्राप्तिपूर्विका प्राप्तिः संयोगः । अयञ्च विभागश्च द्विनिष्ठ एव । स त्रेधा जायते । संयोगिनोर्मध्येऽन्यतरस्य यत् कर्म, ततो जायमान एकः, यथा स्थाणुश्येनयोः संयोगः, मन्दशीघ्रगयोश्च ; उभयोः कर्मजः मल्लयोः मेषयोर्वा ; शिष्टस्तु हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगादिः ॥९॥

द्विष्ठत्वात् नियतपूर्वोत्तरभावापन्नत्वात् एकक्रियाजन्यत्वाच्च संयोगसोदरे विभागे कारणस्यापि समानत्वात् संयोगोक्तमतिदिशति---

**१०. एतेन विभागो व्याख्यातः ॥ (२९५)**

अन्यतरकर्मज उभयकर्मजो विभागजश्च विभाग इत्यर्थः । उक्तस्थाणुश्येनादावेवेदं सुदर्शम् । प्राप्तिपूर्विका अप्राप्तिर्विभागः ।

नन्वप्राप्तिः प्राप्त्यभावः । अतः कथं विभागो गुण इति चेत्--- नञो विरोध्यर्थकतया अप्राप्तिरित्यस्य प्राप्तिविरोधीत्यर्थात् । विरोधश्चायं वध्यघातकभावरूप इति ज्ञापनाय प्राप्तिपूर्विकेत्युक्तिः । तथा च संयोगे-

नाशको गुणो विभाग इति। अथ प्राप्त्यभाव एव लाघवाद्विभागोऽस्तु; संयुक्तद्रव्यद्वयनिष्ठः पुनस्संयोगप्राक्कालविशिष्टः संयोगनाश एव विभाग इत्युक्तिसंभवादिति चेन्न—सर्वत्र कारणनाशाद्वा समानाधिकरणविरोधिधर्माद्वा कार्यनाशदर्शनेन पूर्वदेशसंयोगनाशार्थमेव विरोधिगुणस्य स्वीकार्यत्वात्। न च कर्मैव विरोधिधर्म इति वाच्यम्—कायक्रियाजन्यस्य कायतरुसंयोगस्य अङ्गुलिक्रियाकाले नाशानापत्तेः; अङ्गुलिक्रियायाः कायेऽभावेन असामानाधिकरण्यात्। तस्य संयोगस्य चाङ्गुलितरुसंयोगाजन्यतया तत्क्रियाजन्याङ्गुलितरुसंयोगनाशस्य कारणनाशत्वाभावेन कायतरुसंयोगनाशकत्वायोगात्। विभागस्वीकारे तु भवति विभागजविभागात् तद्विनाशः। किञ्च अयमस्माद् विभक्त इत्यवधिमत्त्वेन प्रतीतस्य संयोगनाशरूपत्वं न भवति; नाशस्यावधिसाकांक्षत्वाननुभवात्।

एवं हस्तपुस्तकविभागात् कायपुस्तकविभाग इति विभागजविभागो ज्ञात एव। अन्यादृशोऽपि कश्चिद्विभागजविभागोऽस्ति। तथा हि—संयोगस्तावत् द्विविधः—आरम्भकसंयोगः अनारम्भकसंयोगश्चेति। अवयवद्वयसंयोग आद्यः, ततोऽवयव्यारम्भात्। अवयवाकाशसंयोगो द्वितीयः। एवञ्च तत्तद्विरोधितया विभागोऽपि द्विविधः। क्वचित् एकविध एव विभागः, यथा भूतलाद् घटेऽपसार्यमाणे घटक्रियया घटभूतलविभाग—घटाकाशविभागादयः; तेषामनारम्भकसंयोगविरोधित्वात्। क्वचित् क्रियायां जातायामुभयविधोऽपि विभागो लक्ष्यते। यथा वृक्षात् पत्रेऽपचीयमाने पत्रक्रियया पत्राकाशविभागादयः, तद्वदेव पत्रशाखाविभागोऽपि। अत्र द्वितीयो वृक्षारम्भकावयवसंयोगविरोधी। तत्र द्वितीयस्थले पत्रक्रिया किं विभागं द्विविधमपि जनयति, न वेति विचारे, न जनयतीति

सिद्धान्तः । एकस्य कर्मण आरम्भकसंयोगविरोधितदविरोधिद्विविध-विभागजनकत्वानुपपत्तेः ।

यदि विरोधिविभागजनकस्य अविरोधिविभागजनकत्वमपि स्यात्, तर्हि अविरोधिविभागजनकस्य विरोधिविभागजनकत्वमपि स्यात् । उभयसमावेशस्याङ्गीकृतत्वात् । तथा च विकसत्कमलकुड्मलभङ्गप्रसङ्गः । कमलदलक्रिया कमलदलाकाशविभागमिव कमलारम्भकस्य कमलाधः-प्रदेशावच्छिन्नकमलावयवसंयोगस्य विरोधिनं तदवयवदलविभागमप्यार-भतामिति । किञ्चावयवानामवयव्याक्रान्तानां मध्ये यदि एकोऽवयव आकाशाद्विभज्येत, तदा तत्रत्यमवयव्यपि आकाशाद्विभक्तप्रायम् । एवमवयव्याकाशविभागे च तादृशावयव्याक्रान्तानि अवयवान्तराणि पूर्वावयवेन सह समागतानि स्युरित्यनुभवसिद्धम् ! एवञ्चारम्भकसंयोग-विरोधिविभागजनिका क्रिया यदि तदविरोधिनं तदवयवाकाशविभागमपि कुर्यात् , तदा तदवयवेन सह तत्रत्यमवयवि, तदाक्रान्तावयवान्तराणि च पूर्वस्थानाद्विभक्तानि समागतानि स्युरिति संश्लिष्टावयवान्तरस्यापि सहा-ऽऽकर्षणे कथमवयवद्वयविभाग आरम्भकसंयोगनाशद्वारा अवयविनाशं कर्तुं प्रभवेत् । अतः उपर्यवयव्याक्रमणपर्यन्तमवयवाकाशविभागः अवयव-द्वयविभागकार्यप्रतिकूल इति विघ्नः । अतः अनुभवसिद्धावयविनाशोपपत्तये अवयवद्वयविभागकाले अवयवाकाशविभागो न जात इति कल्प्यते ।

एवञ्च क्रिया, ततोऽवयवद्वयविभागः, तत आरम्भकसंयोगनाशः, ततोऽसमवायिकारणनाशजन्यो द्रव्यनाशः । एवमवयविनाशे सति अवय-व्याक्रमणरूपप्रतिबन्धकप्रसक्त्यभावात् पञ्चमक्षणेऽवयवाकाशविभागो जायते । स च तदा न कर्मजन्यः, कर्मणो विभागं प्रति निरपेक्षकारण-

त्वेन द्वितीयक्षण एव तस्य ततो जन्मप्रसङ्गात्; तदानीं तदजननाच्च कर्मणस्तादृशविभागाजनकत्वस्यैव युक्तत्वात्। अतो द्वितीयक्षणजातोऽवयवाकाशविभाग एव तद्विभागजनकः। तस्य तथा क्षणद्वयविलम्बेन तज्जनकत्वं न विरुद्धम्। विभागनिरपेक्षकारणत्वमिति विभागलक्षणाभावात्। अतो द्वितीयक्षणजातात् अवयवद्वयविभागात् पञ्चमक्षणेऽवयवाकाशविभागः, अथावयवाकाशपूर्वसंयोगनाशः, तत उत्तरदेशेनावयवसंयोगः। अयञ्च संयोगः क्रियाजन्य एव; पूर्वदेशसंयोगनाशानन्तरमेव संयोगस्य जनयितव्यत्वात् तावत्पर्यन्तं तदवस्थानात्। तत एव क्रियानाश इति। संगृहीतश्चायमर्थः प्राक् पाकजप्रक्रियायां (पु. 218) श्लोकेन ॥१०॥

संयोगो विभागश्च सत्ताकाले द्रव्यद्वये संयुक्तः, नाशकाले च द्रव्यद्वयाद्विभक्त इति तयोरपि संयोगविभागौ स्वीकार्याविति शङ्कायां परिमाणन्यायमतिदिशति—

**११. संयोगविभागयोस्संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ (९६)**

**१२. कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति ॥ (२९७)**

इदं पूर्वोक्तप्रतीकधारणरूपम्। तथा च, 'कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः, अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः' इति पूर्वोक्तविषयोऽपि यथार्हमत्र संयोगविभागघटनेन योजयितव्य इत्यर्थः ॥ १२ ॥

एतावता द्रव्ययोरेव संयोगो विभागश्चेति सिद्धम्। तत्राप्यपवादं दर्शयति—

**१३. युतसिध्द्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते ॥ ९८**

द्रव्यातिरिक्ते संयोगविभागप्रसक्तेर्निराकृततया द्रव्यविशेष एवात्र तन्निराकरणमिति कार्यकारणयोरिति अवयवावयविनोरित्यर्थकं सिद्धम् । यु—मिश्रणामिश्रणयोरिति युतममिश्रितम्, युतयोरमिश्रितयोः असंबद्धयोः सत्ता युतसिद्धिः । संबन्धिनोस्सत्ताकाले मिथः कदाचिदसंबद्धत्वमिति यावत् । अवयवावयविनोः सा नास्ति । अतस्तयोः संयोगविभागौ न स्तः । अप्राप्तिपूर्विका प्राप्तिर्हि संयोगः ; प्राप्तिपूर्वकाप्राप्तिश्च विभाग इति । अयुतसिद्धिलक्षणनिष्कर्षश्च अस्मत्कृतायां तर्कसंग्रहटिप्पण्यां सुखप्रवेशिन्यां द्रष्टव्यः ॥१३॥

एवं तावत् निरूपितौ संयोगविभागौ । पूर्ववत् द्रव्यानित्यत्वादनित्यत्वमत्र नातिदिश्यते । संयोगविभागस्वरूपकथनादेव, 'विभागनाश्यः संयोगः, उत्तरदेशसंयोगनाश्यो विभागः' इति हि विज्ञातमेव । अतः, क्वचिदाश्रयनाशान्नाशेऽपि, द्रव्यनाशप्रतीक्षा एतन्नाशविषये नास्तीति सिद्धमित्याशयेन तदनुक्तिः ॥

एवमत्र युतसिध्द्यभावप्रसंगे शब्दार्थयोस्संबन्धस्तर्हि संयोग एव युक्तः ; पृथक्स्थितयोः शब्दार्थयोरप्राप्तिपूर्वकप्राप्तिसद्भावादिति शिष्यशङ्कायाम्, उपपत्तिभिस्तां निरस्यति—

**१४. गुणत्वात् ॥ (२९९)**

शब्दस्य स्वयं गुणत्वात् गुणे संयोगासंभवस्य चोक्तत्वादिति । एतदादीनां हेतूनां शब्दार्थावसंबद्धौ इत्यत्रान्वयः ॥१४॥

शब्दो द्रव्यमितिपक्षे अर्थेन साकं संयोगः संबन्धः सुवच इति मन्येत । तदर्थमाह—

१५. **गुणोऽपि विभाव्यते ॥** (३००)

विभाव्यते शब्देन प्रतिपाद्यते। अतो रूपरससंयोगादेरपि शब्दवाच्यत्वात् अर्थस्यापि क्वचिद् गुणत्वमिति न संयोगः संबन्धः। अपिशब्देन द्रव्यातिरिक्तं सर्वमुपलक्ष्यते ॥१५॥

शब्दस्य द्रव्यत्वे तत्र गुणसंयुक्तत्वाभावेऽपि स्वाश्रयसंयुक्तत्वरूपः संयोगघटितः परम्परासंबन्धो मन्येत। स्वं गुणः। तदर्थमाह—

१६. **निष्क्रियत्वात् ॥** (३०१)

प्रतिपाद्यार्थानां गुणगगनादीनां निष्क्रियाणां क्रियार्हाणामपि घटादीनां शब्दोच्चारणकाले शब्दसंबन्धार्थक्रियावत्त्वाभावात्, प्रतिपादकशब्दस्य च (द्रव्यत्वपक्षेऽपि तस्य विभुत्वस्वीकारेण) निष्क्रियत्वात् नान्यतरकर्मजोऽपि संयोगः शदार्थयोः संभवतीति ॥ १६ ॥

शब्दस्य विभुद्रव्यत्वाद् घटादिना साकमवर्जनीयः संयौग इति मन्येत। तदर्थमाह—

१७. **असति नास्तीति च प्रयोगात् ॥** (३०२)

असन् घटादिरपि, घटो नास्तीति प्रतिपाद्यते। न च द्विष्ठः संयोगः असता अर्थेन सह भवितुमर्हति ॥ १७ ॥

१८. **शब्दार्थावसंबद्धौ ॥** (३०३)

अतः शब्दार्थौ न संयोगसंबन्धेन संबद्धौ। पृथग्योगकरणं संयोगवत्, समवायः, तादात्म्यम्, सामानाधिकरण्यादि च नात्र संबन्ध इति सूचयितुम् ॥ १८ ॥

सन्त्ययोनिजाः (4-2-10) इत्यत्रेव पश्चादप्येकां युक्तिमाह—

१९. **संयोगिनो दण्डात् समवायिनो विशेषाच्च ॥** (३०४)

समवायिन इति षष्ठ्यन्तम् । समवायिदण्डस्य संयोगिदण्डापेक्षया विशेषसद्भावाच्च शब्दार्थावसंबद्धाविति । यथा दण्डःसमवायेन स्वावयवे संबध्य न तस्मात् पृथग् भवति, न तथा संयोगेन पुरुषे संबध्य; पश्चाद्विभागात् । शब्दश्चार्थेन साकं संबद्धो नार्थं जहाति; सर्वदैव तस्य तदर्थवाचकत्वादिति । यद्वा समवायिन इत्यस्य अर्थसमवायिनः शब्दस्येत्यर्थः । यद्यपि शब्दार्थयोः समवायोऽपि न संबन्धः—अथापि समवायस्येव शब्दार्थसंबन्धस्यापि पश्चादभङ्गमात्रेण तत्र समवायशब्दो गौणः प्रयुज्यते संयोगवैलक्षण्यव्यक्तये । वैलक्षण्यञ्चोक्तमेव । तथाचार्थमजहत इत्यर्थः । अथवा समवायिनः किञ्चिच्छब्दवाच्ये आकाशे समवायिनः शब्दस्येत्यर्थः । शब्दार्थयोः समवायः संबन्ध इत्युक्तौ यत्र क्वापि समन्वयः स्यात्; आकाशशब्दस्य आकाशे समवायात् । संयोगस्तु सर्वथाऽनुपपन्न इति भावः । एवं वा—संयोगिनः समवायिनश्च दण्डात् शब्दस्य विशेषात्-वैलक्षण्यात् । अप्राप्तिपूर्विका प्राप्तिः संयोगः । न च शब्द उत्पन्नः कश्चित्कालमर्थासंबद्धोऽस्ति । दण्डः स्वावयवनाशाधीनविनाशः । न च शब्दोऽर्थनाशान्नश्यतीति । ॥ १९ ॥

तर्हि संबन्धाभावे कथं शब्दादर्थप्रत्ययः । यद्यसंबन्धेऽप्यर्थप्रत्ययः स्यात्, सर्वस्मादपि शब्दात् सर्वार्थप्रत्ययः स्यात् । संबन्धसत्त्वे तु एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति शब्दश्रवणे तदर्थस्मृतिरुपपद्यते, ततश्च शाब्दबोध इति । तत्राह—

---

उप.सू.१९. संयोगी दण्डो विशेषणतया प्रतीयते दण्डीति । समवायिविशेषणमेवम् हस्ती द्विप इति । नैवं घटशब्दवान् घट इति । अतो न संयोगः समवायो वा ।

२०. **सामयिकः शब्दादर्थप्रत्ययः ॥ (३०५)**

समयः संकेतः । अनादिशब्दार्थविषये ईश्वरेच्छा, अन्येषु लौकिकेषु शास्त्रपारिभाषिकेषु च आधुनिकाप्तसंकेतः, अस्माच्छब्दादयमर्थो बोद्धव्य इति । स एव शब्दार्थयोः संबन्ध इति तज्ज्ञानाधीनोऽर्थप्रत्यय इति । अयं भावः—शब्दार्थयोः संयोगो नैवास्ति । शब्दो द्रव्यमिति चेत्—विभुद्रव्येण शब्देन सर्वार्थसंयोगात् सर्वार्थप्रत्ययप्रसंगः । अतोऽन्य एव संबन्धः । स च न मीमांसकमतरीत्या विलक्षणः ; लौकिकशब्दन्यायेन संकेतेनैवोपपत्तौ अतिरिक्तकल्पने मानाभावादिति ॥२०॥

वृत्तौ संयोगविभागौ । अथ परत्वापरत्वे निरूपयति—

२१. **एकदिक्काभ्यामेककालाभ्यां संनिकृष्टविप्रकृष्टाभ्यां परमपरञ्च ॥ (३०६)**

दैशिकपरत्वाद्युत्पत्तौ, दिगिव कालोऽप्यपेक्षितः ; कालिकपरत्वाद्युत्पत्तौ दिङ् नापेक्षितेति, तदा एकदिक्काभ्यामिति विसृज्य अन्यत् सर्वं योजनीयमित्याशयेन एकदिक्काभ्यामिति पूर्वं प्रयुक्तम् । एकस्यामेव दिशि वर्तमानयोः संनिकृष्टविप्रकृष्टयोर्मध्ये संनिकृष्टस्य दिगन्तरमारभ्य प्रादक्षिण्येन संयुक्तसंयोगपरम्पराधिक्येन विप्रकर्षम्, विप्रकृष्टस्य एकदिङ्मात्रग्रहणेन तदपेक्षया न्यूनसंयोगपरम्पराकृतसंनिकृष्टत्वञ्चादाय परत्वापरत्वापत्तिवारणाय संनिकृष्टविप्रकृष्टाभ्यामिति पदे भावे क्तप्रत्ययो ग्राह्यः । एवञ्च यद्दिगवच्छेदेन यत्कालावच्छेदेन च संनिकर्षः कस्यचित्, विप्रकर्षोऽपि तद्दिगाद्यवच्छेदेनैवान्यस्यापीति सिद्ध्यति । संनिकर्षः-न्यूनसंयुक्तसंयोगपरम्परा । विप्रकर्षः—अधिकसंयुक्तसंयोगपरम्परा । कालिकविषये संनिकर्षः न्यूनाः सूर्यपरिस्पन्दाः । विप्रकर्षः—त एवा-

धिकाः । तयोरपि युवस्थविरपरापरत्वसंपत्तये एकातीतकालावच्छिन्नयोरेव ग्रहणम्, न तु विभिन्नकालावच्छिन्नयोः । ईदृशाभ्यामेकं वस्तु परम्, अन्यदपरञ्च भवत इति वाक्यार्थः । सनिकर्षादेर्वस्तुतस्सद्भावमात्रेण अपरत्वाद्युत्पादकत्वाभावात् ज्ञायमानाभ्यामिति पूरणीयम् । अथापि ज्ञानमात्रं न कारणम्, भ्रान्तिस्थले वस्तुतोऽपरत्वाद्यनुत्पत्तेरित्याशयेन तन्नोक्तम् ॥ २१ ॥

ननु न्यूनाधिकसंयोगसमुदाय—सूर्यपरिस्पन्दसमुदायरूपाणां संनिकर्षाणामन्यगतानां कथं परापरवस्तुगतत्वमित्याशङ्कापरिहारमप्यभिप्रयन् परत्वापरत्वोत्पत्तौ असमवायिकारणमप्याह—

*२२. **कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे ॥** (३०७)

अत्र कारणपदं परत्वादिकारणभूतदिक्कालोभयपरम् । पञ्चम्यन्तपरत्वापरत्वपदे परत्वापरत्वकारणसंयोगपरे । तथाच तत्तदुत्पादकत्वाभिमतात् दिक्संयोगात् कालसंयोगाच्च दैशिके कालिके च परत्वापरत्वे भवत इति सूत्रार्थः । इत्थमेव पाठोऽर्थश्च भाष्यव्याख्यासु संमतः । तथाच दिक्पिण्डसंयोगः कालपिण्डसंयोगश्चासमवायिकारणम् । अन्यगतानामपि संनिकर्षविप्रकर्षशब्दार्थघटकसंयोगपरिस्पन्दानां स्वावच्छिन्नदिक्संयुक्तत्वरूपेण स्वावच्छिन्नकालसंयुक्तत्वरूपेण च प्रकृतासमवायिकारणभूतेन संबन्धेन परापरनिष्ठत्वमक्षतम् । न च दिगादेर्विभुत्वात् विप्रकर्षावच्छिन्ना या दिक् तत्संयुक्तत्वं संनिकृष्टस्याप्यस्तीति तत्रापि परत्वं स्यात्; एवं कालेऽपि—इति वाच्यम्—संनिकर्षाद्यवच्छिन्नदिक्प्रदेशकालप्रदेशसंबन्धस्यैव भाष्योक्तत्वादिति । पञ्चम्यन्तपरत्वापरत्व-

उप. सू. २२. कालिकपरत्वापरत्वयोः कालपिण्डसंयोगजन्यत्वमत्रोच्यते ।

पदयोर्विप्रकर्षसंनिकर्षार्थकत्वेऽपि न दोषः । समवायिकारणभूतमूर्त-द्रव्येण संयुज्य कारणभूतौ यौ कालो दिक् च, तन्निरूप्याद् विप्रकर्षात् संनिकर्षाच्च परत्वापरत्वे जायेते इति ॥ २२ ॥

परत्वापरत्वयोरपि द्रव्यमात्रनिष्ठत्वं दर्शयितुं प्राङ्न्यायमतिदिशति—

**२३. परत्वापरत्वयोः परत्वापरत्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥** (३०८)

**२४. कर्मभिः कर्माणि ॥** (३०९)

**२५. गुणैर्गुणाः ॥** (३१०)

कर्मभिरित्यादिसूत्रद्वयमौचित्यात् सप्तमसूत्रानन्तरमप्युपस्कारे मन्यत इव ॥ २३-२४-२५ ॥

नन्वेतावता कार्यकारणभावापन्नानि बाह्यद्रव्याणि गुणाश्च निरूपितानि । एषु च विशिष्टप्रत्ययोऽनुभवसिद्धः । तत्र क्रियासमभिहारेण गुणादौ गुणानङ्गीकारस्योच्यमानत्वात्, 'युतसिद्ध्यभावात् कार्यकारणयोः संयोगो न विद्यत' इत्युक्तत्वाच्च संयोगो न संबन्ध इति ज्ञायते । विशिष्टप्रत्ययनियामकश्च वैशिष्ट्यं संबन्धः । स तर्हि कः इति जिज्ञासायामाह—

**२६. इहेदमिति यतः कार्यकारणयोः स समवायः ॥** (३११)

अनेन समवायिम इति पददर्शितः समवायोपि न शब्दार्थयोः संबन्ध इति ज्ञापितं भवति । यद्यपि, "सामान्यं विशेष इति बुध्य-पेक्षम्" इति सूत्रे समवायोऽपि लक्ष्यत्वेनाभिमतः, अथापि तस्य स्थलमबुध्वा जिज्ञासेयम् । इहेदमिति प्रत्ययो यतः संबन्धाद्भवति एतावदुपवर्णितयोः कार्यकारणयोः, स समवाय इत्यर्थः । यद्यपि नित्ययोरपि

---

उप. सू. २६. कार्यकारणयोरिति अकार्यकारणयोरप्युपलक्षणम् । अयुत-सिद्धानां संबन्धः समवायः ।

समवायोऽस्ति, अथापि तत्र इहेदमिति प्रत्यक्षाभावात्, युतसिद्ध्यभावादिति पूर्वसूत्रप्रत्यभिज्ञानाय च कार्यकारणयोरित्युक्तम्। तत्प्रत्यभिज्ञानबलाच्च कार्यकारणयोरयुतसिद्धत्वात् समवाय इति सिद्धौ अयुतसिद्धानां सर्वेषां समवाय इति लभ्यते। यद्यपि घटे रूपमित्यादिवत, इह गवि गोत्वमिति लोकानुभवो नास्ति,—अथापि परीक्षकस्य तथा धीर्भवेदेव। वस्तुतः इहेदमित्यनेन सप्तम्या आधाराधेयभावमात्रं प्रत्याय्यते। अवधारणविवक्षया इहैवेदमित्यपि सिद्ध्यति। तथाच नियताधाराधेयविषयकविशिष्टप्रत्ययो यत इति वाक्यार्थः। तत्र यथानुभवं विशेष्यविशेषणभावो ग्राह्यः। रूपवान् घटः, घटे रूपम्, तन्तुमान् पटः, अयं गौरित्येवम्। एवं स्थिते इदमित्थमित्यनिर्दिश्य, इहेदमितिनिर्देशः—अवयवापेक्षयाऽवयविनोऽतिशयितकार्यकरतया प्राधान्येन इह तन्तुषु पट इत्येवं प्रयोगभूमानमनुसृत्य। तथा इह रसः, इह गन्धः, इह शब्द इति गुणमात्रग्राहीन्द्रियजन्यप्रत्यक्षसंग्रहाय च; तत्र द्रव्यमुख्यविशेष्यकप्रत्यक्षायोगात् द्रव्यस्य तदिन्द्रियाग्राह्यत्वात्। तथा च उक्तप्रतीतौ इदमिति अवयवि, गुणः, कर्म च गृह्यते; न तु सामान्यं विशेषो वा; तयोः प्रकारतयैव भानात्। नापि परमाणुरूपादि, इदमितिप्रत्यक्षायोगादिति सूचयितुमेव कार्यकारणयोरित्युक्तम्। एतदर्थक्लृप्तस्समवायः सामान्यादिसिद्ध्यनन्तरं तत्रापि संबन्धोऽभूदिति तात्पर्यम्। एवञ्च ययोर्द्रव्ययोस्संयोगः, तदन्ययोर्द्रव्ययोः, द्रव्यगुणयोः, द्रव्यकर्मणोः, सामान्यतदाधारयोः, विशेषनित्यद्रव्ययोश्च संबन्धः समवाय इत्युक्तं भवति ॥२६॥

इदमेव शङ्कान्तरपरिहारव्याजेन द्रढयति—

२७. **द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ॥** (३१२)

समवायो द्रव्यादिष्वन्तर्भवेदिति न शङ्क्यम् ; गुणकर्मसु भावात्। यथा सत्ता द्रव्यादिभिन्ना, तथा द्रव्यादिविशेषान्तानुबन्धितया समवायो न द्रव्यादिरूपः ; कस्यापि तावत्संबन्धित्वाभावादिति ॥ ननु द्रव्यगुणाद्यनुबन्धितया समवायस्य ततोऽन्यत्वे समवायानुबन्धित्वात् समवायोपरि समवायान्तरं सिद्ध्येत्। अन्यथा रूपसमवायवान् घट इति विशिष्टधीः कथमि चेत्—न तावदियं विशिष्टधीः प्रत्यक्षम्, समवायस्यातीन्द्रियत्वात्। अत एव तस्यानुमानतः सिद्धिः। अत एव च वेदान्तिभिस्तदपलापः। न च रूपवान् घट इति विशिष्टप्रत्यक्षविषयस्य समवायस्य कथमतीन्द्रियत्वमिति वाच्यम्-संसर्गे लौकिकप्रत्यक्षविषयताया अनपेक्षितत्वात्। संसर्गस्य हि विशेषरूपेण भानमपि विशिष्टप्रत्यये नियतं न भवति। तत् कथमैन्द्रियकत्वम्। अत एव परत्वापरत्वहेतु-संनिकर्षविप्रकर्षवत्तया वस्तुग्रहणे दिक्कालयोःसंसर्गघटकत्वेऽपि तदप्रत्यक्षत्वमिष्यते। अतः प्रत्यक्षः समवाय इति नैयायिकपक्षो न वैशेषिकैरिष्यते ॥ अस्तु तर्हि रूपसमवायवान् घट इति विशिष्टधीरनुमानमेवेति चेन्न—समवायसाधकानुमानेन समवायस्यातीन्द्रियतया अनाश्रिततया च सिद्धिस्वीकारात् आधाराधेयविषय एव समवायस्य संबन्धतया अनाश्रितसमवायार्थं समवायान्तराप्रसक्तेः तेन संबन्धेन समवायस्य प्रकारत्वविवक्षया तथाऽनुमानायोगात्। रूपसमवायवान् घट इति वाक्यस्य च समवायेन रूपवान् घट इत्येव लक्षणयाऽर्थः। ननु रूपवानित्यत्रापि मतुपा समवायिन एवोक्त्या समवायः प्रकार इति चेत्—अस्तु। तथापि समवायीत्यस्य समवायानुयोगीत्यर्थः। एवं रूपसमवायवानि-

त्यत्रापि रूपसमवायस्यानुयोगितया प्रकारत्वं काममस्तु । न च तर्हि रूपवान् घट इत्यादौ रूपानुयोगितैव भातीति समवाय एव न सिध्येत् इति वाच्यम्—संबन्धस्यं हि लोकेऽनुयोगिप्रतियोगिसापेक्षत्वानुभवः । न च रूपादेस्संबन्धतया भानमनुभवसिद्धमस्ति । तर्हि अभावस्यापि संबन्धतया भानाननुभवात् तत्रापि वैशिष्ट्यमन्यत् स्यादिति चेत्—न— अभावस्य प्रतियोगिनं विना कुत्राप्यभानात्, नञः प्रतियोग्यनुयोग्युपरागमन्तरा बोधजनकत्वाभावाच्च संबन्धवत् सप्रतियोग्यनुयोगिकोऽभावः स्वयं संबन्धरूपोऽपि भवितुमर्हति, न तथा रूपादिभानं प्रतियोग्यनुयोगिसाकांक्षमिति विशेषात् । अत एव प्रतियोग्यनुयोगिसापेक्षत्वनियमात् पितापुत्रभाव–शिष्याचार्यभाव–कार्यकारणभाव–प्रतियोग्यनुयोगिभावादेस्सर्वस्य संबन्धस्य क्वचित् प्रकारत्वेऽपि स्वरूपमेव तत्र संबन्धः, नान्य इति महर्षेर्गंभीरो भाव इत्यलम् ॥ २७ ॥

समवायः स्संयोगवत् तत्रतत्रान्य इति न मन्तव्यमित्याह—

**२८. तत्त्वंभावेन ॥ (३१३)**

य एव घटसमवायः, पटादिसमवायस्यापि तत्त्वम्–तथाचैकत्वं सत्तया व्याख्यातम्—विशिष्टप्रतीतित्वरूपलिङ्गस्याविशिष्टत्वात् । अतः प्राभाकरैः कृतः अनित्यनानासमवायस्वीकारो नादृत्यः । रूपनिरूपितत्वविशिष्टसमवायाधारत्वाभावाच्च वायौ रूपवत्ताप्रतीत्यभाव इति । एवमेकत्वादेव तस्य नित्यत्वमपि सिद्धं मन्तव्यमिति ॥ २८ ॥

सप्तमान्त्येऽब्रवीत् संख्यां पृथक्त्वादीनि पञ्च च ।
शब्दार्थसंगतिर्मध्ये समवायोऽन्त ईरितौ ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने सप्तमे द्वितीयमाह्निकम् ।

इति सप्तमोऽध्यायः ॥

श्रीः

## अथाष्टमोऽध्यायः

एवं बाह्यगुणा निरूपिताः। अथात्मगुणा निरूप्यन्ते। तत्र अष्टमनवमाभ्यां बुध्दयो विविच्यन्ते। अष्टमे भावलौकिकप्रत्यक्षम्। तत्र शुद्धप्रत्यक्षमत्राह्निके; उत्तराह्निके ते ज्ञानान्तरमिश्रम्। तदत्राव्याख्यातांशं व्याचिख्यासुः उक्तांशं स्मारयति—

**१. द्रव्येषु ज्ञानं व्याख्यातम् ॥ (३१४)**

द्रव्येषु निरूपितेषु ज्ञानं व्याख्यातम्। द्रव्यनिरूपणाध्यायाः द्वितीयतृतीयचतुर्थाः। तत्र, विशिष्य च तृतीये, ज्ञानस्वरूपमुक्तमिति। तथा तस्य आत्मैवाधिकरणम्, न तु देहेन्द्रियादीनि भूतानि चेत्यपि व्याख्यातम्। एवमयावद्द्रव्यभावित्वेन तदनित्यत्वमपीति ॥

ननु किमिति अत्र व्याख्यातव्यं तत्र व्याख्यातमासीत्? तत्राऽऽह—

**२. तत्रात्मा मनश्चाप्रत्यक्षे ॥ (३१५)**

तत्र द्रव्येषु मध्ये आत्मा मन इतीमे उभे अपि अप्रत्यक्षे। यद्यप्यात्मा अहं सुखी इत्यादिप्रत्यक्षविषयः। उक्तञ्चेदं तृतीये—तथापि अहं स्थूल इत्यादिषु देहग्रहेष्वपि भासमानः न यथावत् प्रत्यक्षेण सिद्धो भवतीति तस्य ज्ञानाश्रयत्वेन साधनं कार्यमासीत्; तथा मनसोऽपि ज्ञानकरणत्वेन ज्ञानायौगपद्येन च साधनं कार्यमासीत्। अतस्तदर्थं ज्ञानं तत्र व्याख्यातमिति। एवमवतार्यैव अस्य सूत्रस्यात्र संगमितत्वात् बाह्यभावप्रत्यक्षाह्निके इह इदं सूत्रमसंगतमिति निरस्तम्। अत्र निरूप्य-

---

उप.सू.१. द्रव्यविषयके तृतीयाध्याये 'इन्द्रियार्थप्रसिद्धिः—' 'आत्मेन्द्रियार्थ—' इतिसूत्राभ्यां ज्ञानं व्याख्यातम्।

उप.सू.२. आत्ममनआकाशकालदिग्वायु-परमाणवः अनुमानगम्या इत्यर्थः ॥

माणं बाह्यप्रत्यक्षं प्रति अविषयत्वकथनार्थमेव चेत् सूत्रम्, तर्हि प्रत्यैक्षसामाण्याविषयस्य मनसो ग्रहणं नोचितम्। सर्वप्रत्यक्षस्फुटविषयत्वाभावकथनार्थमेव सूत्रमिति चेत्, दिक्कालादेरेव कुतो न कण्ठोक्तिरिति। अतः प्रागुक्तैव सूत्रसंगतिः॥

प्रत्यक्षं द्विवधं निर्विकल्पकं सविकल्पकञ्च। तत्र सविकल्पकं विशिष्टप्रत्यक्षं विशेषतो व्युत्पादयिष्यन् निर्विकल्पकादिसर्वप्रत्यक्षसाधारणकारणेषु पूर्वोक्ताधिकांशं दर्शयितुम् उक्तांशं स्मारयति—

**३. ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः॥ (३१६)**

ज्ञानस्य प्रत्यक्षस्य निर्देशे 'अत्रैव विषये इदं भवितुमर्हति, न त्वन्यत्र; कृत्स्नकारणाभावा'दिति व्युत्पादनस्थले चतुर्थाध्याये ज्ञाननिष्पत्तेर्विधिः विधा प्रकारः उक्तः। अनेकद्रव्यवत्त्वस्य, उद्भूतरूपस्य च साक्षात् समवायेन सत्त्वाद् द्रव्ये प्रत्यक्षम्। स्वाश्रयद्रव्यसमवायेन सत्त्वाद् गुणादौ प्रत्यक्षम्। स्वाश्रयद्रव्यसमवेतसमवायेन सत्त्वाद् गुणादिगतसामान्ये प्रत्यक्षमित्युक्तम्। आत्मा मनसा संयुज्यते, मनः इन्द्रियेण, इन्द्रियमर्थेनेति संनिकर्षतो ज्ञानोत्पत्तिरित्यपि तृतीये उक्तमिति॥

अथ तत्रानुक्तमंशमाह—

**४. गुणकर्मसु संनिकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम्॥ (३१७)**

द्रव्यस्य स्वप्रत्यक्ष एव कारणत्वम्, न तु रूपादिगुणादिप्रत्यक्षेऽपीति न मन्तव्यम्—विषयेषु संनिकृष्टेषु सत्स्वेव तत्तद्विषयप्रत्य-

---

उप. सू. ३. ज्ञाननिरूपणे कर्तव्ये ज्ञानस्य निष्पत्तिप्रकारः प्रथममुच्यत इत्यर्थः। उक्तः—उक्तप्रायः। आदिकर्मणि क्तः।

उप. सू. ४. गुणे कर्मणि च ज्ञाननिष्पत्तिविधिरुच्यते।

क्षोत्पत्त्या तत्तद्विषयेन्द्रियसंनिकर्षस्य हेतुत्वात् गुणादिसंनिकर्षे चेन्द्रिययुक्तसमवायरूपे द्रव्यस्यापि घटकतया गुणकर्मप्रत्यक्षेऽपि द्रव्यं कारणमिति। तच्च द्रव्यं तदिन्द्रिययोग्यमयोग्यं वा भवतु। अत एव रसनादिभिर्द्रव्याप्रत्यक्षेऽपि रसादिप्रत्यक्षम्। आकाशस्यैव श्रोत्रत्वात् शब्दप्रत्यक्षे च श्रोत्रस्य करणत्वात् शब्दप्रत्यक्षे स्वनिरूपितसमवायसंबन्धेन आकाशं कारणमिति।

आत्मगतज्ञानादीनां स्वसंयुक्तसमवायादिना मनसा ग्रहणात् तत्राप्यात्मा कारणमित्यप्यत्रोक्तं वेदितव्यम् ॥ ४ ॥

एवमुक्तसंनिकर्षबलादुक्तेषु विषयेषु प्रथमजातं प्रत्यक्षं विशकलिततत्तद्विषयगोचरतया निर्विकल्पकं यद्यपि, अथापि द्वितीयजातं सविकल्पकं सप्रकारकं भवतीत्यभिसंधाय सविकल्पकं वक्ष्यन् सामान्यविषये परं प्रत्यक्षं निष्प्रकारकमेवेत्याह—

**५. सामान्यविशेषेषु सामान्यविशेषाभावात् तत एव ज्ञानम् ॥**

सामान्ये सत्तायां सामान्यविशेषेषु च द्रव्यत्वघटत्वादिषु सामान्यस्य विशेषस्य वा कस्यचिदवर्तमानत्वात् ज्ञानं तत एव सत्ताद्रव्यत्वादिसामान्यविशेषमात्रादेव; सामान्यविशेषान्तरानपेक्षमेवेत्यर्थः। जातौ जात्यनङ्गीकारात् जातेः स्वरूपत एव भानम्। अतो जातिप्रत्यक्षमालोचनात्मकं निष्प्रकारकमिति यावत्। एवञ्च विशिष्टप्रत्यक्षे विशेषणज्ञानस्य कारणत्वे, तत्र विशेषणे विशेषणम् तत्रापि विशेषणान्तरमित्यनवस्थया विशिष्टप्रत्यक्षस्यैवानुदय इति शङ्का न कार्या, सामान्यरूपविशेषणज्ञानस्य निष्प्रकारकस्य प्रथमं भावादित्युक्तं भवति ॥ ५ ॥

---

० उप. सू. ५. परापरजातिविषयकं ज्ञानं तत एव संनिकर्षादेव भवति। न तु स्वगतजात्यन्तरस्य संनिकर्षोऽपि हेतुः। जातौ जात्यभावात्।

अथ तज्जन्यं सविकल्पकमाह—

६. **सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥ (३१९)**

अयं घटः, इदं रूपम्, अयं शब्दः, इदं ज्ञानमित्येवं बाह्यमान्तरं वा सर्वं ज्ञानं सामान्यविशेषापेक्षं घटत्वरूपत्वादिसामान्यविशेषप्रकारम्। प्रत्यक्षे विषयस्य कारणत्वात् द्रव्यगुणकर्मप्रत्यक्षस्य च प्रकारतया सामान्यविशेषविषयकत्वात् सामान्यविशेषकारणकत्वमित्यभिप्रेत्य तदपेक्षमित्युक्तम् ॥ ६ ॥

तदुपरितनं सविकल्पमाह—

७. **द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥ (३२०)**

घण्टावान् शुक्लो गौर्गच्छतीति ज्ञानं घण्टात्वादिसामान्यविशेषविशिष्टघण्टादिरूपद्रव्यादिप्रकारकम्। एवम् अहं ज्ञानी सुखीत्यादिमानसप्रत्यक्षमप्यत्र विवक्षितं मन्तव्यम्। उपरि पृथक् आन्तरप्रत्यक्षानिरूपणात् ॥ ७ ॥

पूर्वसूत्रे द्रव्ये इति सप्तम्यन्तेन द्रव्यमात्रे गुणकर्मापेक्षत्वमुक्तम्। तत्र यथा द्रव्ये द्रव्यापेक्षत्वमस्ति, तथा गुणादावपि गुणाद्यपेक्षत्वं स्यादिति शङ्कायामाह—

८. **गुणकर्मसु गुणकर्माभावाद् गुणकर्मापेक्षं न विद्यते। (३२१)**

ज्ञानमिति शेषः ॥ ८ ॥

एवं विशिष्टज्ञाने विशेषणप्रकारकत्वमुक्तम्। प्रकारस्य च किञ्चित्संबन्धसापेक्षत्वात् येन संबन्धेन प्रकारो गृह्यते, स संबन्धोऽप्यपेक्षित एव। नैतावन्मात्रम्। किन्तु विशिष्टज्ञानात् प्राक् तादृशविशेषणज्ञानमप्यपेक्षितम्। अन्यथा हि संयोगसंनिकर्षाद् द्रव्यस्य, संयुक्तसम-

वायसंनिकर्षाद् गुणादेरिति तत्तत्संनिकर्षतः तत्तद्वस्तुज्ञाने, गोत्वम्, व्यक्तिः, रूपं, गमनमित्यादिप्रक्रियया विशकलितस्वतन्त्रतत्तद्भानमेव स्यात्। तत्तत्संनिकर्षस्य तत्तज्ज्ञानमात्रे कारणतायाः क्लृप्तत्वात्। तथा च निर्विकल्पमेव प्रत्यक्षम्। सविकल्पं तु प्राचीनवासनावशकल्पितपरस्परवैशिष्ट्यावगाहितया कल्पनामात्रमिति सौगतसरणिसंचारः स्यात्। अतः केवलसंनिकर्षो विशकलितज्ञानहेतुः; विशेषणज्ञानसहितसंनिकर्षः सविकल्पकहेतुरिति स्वीकर्तव्यमित्याशयेनाऽऽह—

**९. समवायिनः श्वैत्यात् श्वैत्यबुद्धेश्च श्वेते बुद्धिः ते [एते] कार्यकारणभूते॥ (३२२)**

समवायप्रतियोगिभूतं श्वेतरूपं यत्, या च श्वेतरूपबुद्धिः तदुभयस्मात् अयं श्वेत इति रूपविशिष्टद्रव्यबुद्धिः। अतः ते श्वेतद्रव्यबुद्धिश्वैत्यबुद्धी कार्यकारणभूते इति। एते इति पदरहितमेव सूत्रं सर्वे उदाहरन्ति, यथा भाष्यकृतः। तत्सत्त्वे ते श्वैत्यत्वश्वैत्यबुद्धी एते श्वैत्यबुद्धिश्वेतबुद्धी च कार्यकारणभूते। यथायथमेकत्र कार्यतायाः, इतरत्र कारणतायाश्च सत्त्वादित्यप्यर्थः सुवचः। अत्र श्वैत्यबुद्धेरित्यनुक्त्वा श्वैत्यादित्यप्युक्तिः—यथा लिङ्गज्ञानात् साध्यज्ञानम्, तथा श्वैत्यज्ञानात् श्वेतज्ञानमित्येव न मन्तव्यम्; उक्तरीत्या प्रत्यक्षे श्वैत्यस्य प्रकारतया तु श्वैत्यमपि कारणमिति गमयितुम्। एवं समवायिन इत्यपि समवायस्यापि कारणत्वसंवित्तये। श्वैत्यग्रहणे हि संयुक्तसमवायः संनिकर्ष इति समवायोऽपि कारणम्। अत एव पीतः शङ्ख इति ज्ञानं भ्रमः। पीतरूपतज्ज्ञानयोः सद्भावेऽपि शङ्खे पीतसमवायाभावात्। अतो विशिष्टप्रमां प्रति विशेषणतत्संबन्धविशेषज्ञानानि कारणमिति।

विशेष्यज्ञानं तु विशिष्टज्ञाने न कारणम्, अनुपपत्त्यभावात्। सामान्यप्रत्यासत्तिजन्यस्य धूमत्वविशिष्टसकलधूमज्ञानस्य विशेष्यभूतसर्वज्ञानं विनैव जायमानत्वाच्च ॥ ९ ॥

एवं विशेषणज्ञानं पूर्वं स्थितं सत् कारणमित्युक्तिमात्रेण, 'सर्वत्र समनन्तरप्रत्ययः कारणम्'इति योगाचारबौद्धपक्ष इष्ट इति न भ्रमितव्यम्। पूर्वबुद्धिसामान्यमुत्तरबुद्धौ कारणमित्यनङ्गीकारादित्याशयेनाह—

**१०. द्रव्येष्वनितरेतरकारणाः ॥ (३२३)**

द्रव्येष्विति विशेष्यविशेषणभावानापन्नेष्वित्यर्थः। 'बुद्धय'इति विपरणम्यानुषङ्गः। विशेष्यविशेषणभावानापन्नेषु वस्तुषु क्रमेण जाताः नीलपीतादिबुद्धयो घटपटादिबुद्धयश्च अनितरेतरकारणाः। इतरस्य कारणम् इतरकारणम्; इतरत् इतरकारणं यासां ता इतरेतरकारणाः। तथाऽन्येत्यनितरेतरकारणाः। कदाचिद् घटज्ञानं विनाऽपि पटज्ञानोत्पत्त्या विपरिवर्ताच्च व्यभिचारादिति भावः। कपालसमवेतघटादिप्रत्यक्षेऽपि संयोग एव संनिकर्षः, न तु संयुक्तकपालादिसमवाय इति न घटप्रत्यक्षे कपालस्य संनिकर्षघटकतयापि कारणत्वमिति च भावः ॥ १० ॥

ननु तर्हि कुतो घटबुद्धिकाल एव पटबुद्धिर्न भवति। कारणत्वे तु तत्पश्चाद्भाव उचितः। तत्काले चालब्धजनिः पश्चाद्वा कथं जायत इत्यत्राह—

**११. कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥ (३२४)**

घटबुद्धिपटबुद्धयोः कदाचित् क्रमेणैवोत्पत्तिः न हेतुफलभावात् कार्यकारणभावात्। किन्तु घटसद्भावकारणस्य पटसद्भावकारणस्य च

युगपदसमावेशात् । ननु घटपटसद्भावकारणयोरयौगपद्ये घटपटयोरयौगपद्यं स्यात् । पूर्वोत्तरभावरूपः क्रमः कथमिति चेत्—तत्कारणक्रमात् । तथाच विशिष्टज्ञानप्रकारीभूतधर्मविषयकज्ञानं विशेषणज्ञानं यत् पूर्वम् , तदेव कारणमिति । विरक्तस्यापि वैदिकस्य घटपटयोर्नियतत्वात्तयोरुपस्थित्यतिशयाद् ग्रहणम् ॥ ११ ॥

संनिकर्षकरं द्रव्यं सर्वप्रत्यक्षकारणम् ।
सविकल्पं स्वप्रकारधीजं चाह्नाष्टमादिमे ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने अष्टमे प्रथममाह्निकम् ॥

---

अथ अष्टमे द्वितीयम्

एवं निर्विकल्पकम् , अयं घटः, घण्टावान् शुक्लो गौर्गच्छतीत्येवं विशिष्टज्ञानम् , विशिष्टवैशिष्ट्यावगाहिज्ञानञ्च क्रमिकं सर्वांशे प्रत्यक्षमुपपाद्य, ' प्रत्यक्षाप्रत्यक्षविषयमिश्रं नानेन्द्रियग्राह्यमिश्रं प्रत्यक्षादिरूपं ज्ञानमपि भवति । तत्रापि समनन्तरपूर्वजातविशेषबुद्धिरिव व्यवहितकालोत्पन्न विशेषणबुद्धिरपि संस्कारद्वारा कारणं भवतीत्यादिविशेषमभिप्रेत्य कानि चिदुदाहरति—

१. **अयमेष त्वया कृतं भोजयैनमिति बुध्यपेक्षम ॥** (३२५)

अत्र एकैकपदार्थज्ञानमपि पूर्वज्ञानसापेक्षम् । तथा हि न हि घटादिपदानामिव अयमादिपदानां जातिविशिष्टव्यक्तिमात्रपरता ।

---

**उप.सू २. विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षनिष्पत्तिविधिरुच्यते । अयमित्यादि एकैकमपि बुद्धिसापेक्षमिति ।**

'इदमस्तु संनिकृष्टं समीपतरवर्ति चैतदो रूपम्' इति पुनः अयमिति संनिकृष्टार्थवाचि ; एष इति संनिकृष्टतरार्थवाचि । संनिकर्षश्च परत्वापरत्वप्रकरणोक्तरीत्या न्यूनसंयुक्तसंयोगपरम्परारूपः । तथाच नानासंयोग---तन्न्यूनत्वादितावदर्थज्ञानाभावे अयमिति ज्ञानं नोदेति। एष इति ज्ञानात् प्राक् च तादृशन्यूनत्वेऽतिशयविशेषोऽपि ज्ञातव्यः । एवं त्वमिति अभिमुखपुरुषवाचि । अभिमुखत्वं च संबोध्यत्वं विवक्षितार्थबोधाश्रयत्वेनेष्टत्वरूपम् । तावदर्थज्ञाने सति त्वमिति ज्ञानमुदेति । कृतमिति अतीतकृतिविषयार्थकम् । अतीतत्वं च वर्तमानध्वंसप्रतियोगित्वम् । भोजयेत्यत्र भोजनमुदरप्राप्त्युद्देश्यकगलाधस्संयोगानुकूलव्यापारः । तदनुकूलव्यापारो णिजर्थः । ल्युटो विधिः प्रार्थना वाऽर्थः । स चानेकार्थघटितस्वरूपः । एनमिति अन्वादेशः सकृदेतत्पदबोधितसंनिकृष्टतरार्थगोचरः । एवं तृतीयाद्वितीययोः कर्तृत्वकर्मत्वरूपावर्थविशेषौ विवेचनीयौ । अत्र निरुक्तेष्वर्थविशेषेषु केचिदंशाः प्रत्यक्षाः, अप्रत्यक्षाश्च केचिदिति विवेचनीयम् ।

एवं प्रत्येकमेव नानार्थगर्भत्वे स्थिते, ' अयमेषः (पूर्वं किञ्चित् संनिकृष्ट इदानीमतीव संनिकृष्टः ;) 'त्वया कृतम् ;' 'भोजयैनं पुरुष' मिति वाक्यत्रयकरणे, तथा, 'अयमेषः = ईदृशगुणसम्पन्नोऽयं एषः अपेक्षितभोजनीयपुरुषविशेषरूपः ; अत एनं पात्रभूतं पुरुषं त्वं त्वया सश्रद्धं कृतमोदनादि भोजये'ति वाक्यद्वयकरणे वा एतादृशविशिष्टज्ञानस्य (प्रत्यभिज्ञादिरूपस्य) ईदृशावाक्यप्रयोगमूलभूतस्य वक्तृगतस्य तदीयतत्पूर्वकालिकनानाज्ञानसापेक्षत्वं सुतरामिति ।

किञ्च अयमेष इति हि सोऽयमितिवत् पूर्वदृष्टप्रत्यभिज्ञा। त्वया कृतमिति पूर्वदृष्टकृतिस्मारणम्। भोजयैनमिति एनमिति पूर्वगृहीतपुनर्ग्रहणमिति सर्वं बुद्ध्यपेक्षम् ॥ १ ॥

व्यवहिताव्यवहितनानाविधपूर्वज्ञानापेक्षायां युक्तिमाह—

**२. दृष्टेषु भावाददृष्टेष्वभावात् ॥ (३२६)**

दृष्टेषु पूर्वज्ञातेषु सत्सु अस्य विशिष्टज्ञानस्य भावात् उत्पत्तेः, अदृष्टेषु अज्ञातेषु चानुत्पत्तेरन्वयव्यतिरेकाभ्यां बुद्ध्यपेक्षत्वं बुध्यत इति ॥ २ ॥

एवं जायमानेषु विविधेषु प्रत्यक्षेषु कस्य मुख्यविशेष्यत्वमितीदं व्युत्पादयति—

**३. अर्थ इति द्रव्यगुणकर्मसु ॥ (३२७)**

द्रव्यगुणकर्मणामर्थशब्दपरिभाषितत्वं मन्तव्यम्। तेषामेव यथायथं प्रत्यक्षे मुख्यविशेष्यत्वात्। सामान्यादिकं तु प्रकारभूतमेव; न विशेष्यम्। इह गोत्वमिति लौकिकानुभवाभावात्। अर्थशब्दो धर्मिपरतया प्रयुक्तः, यथा—'अनुमेयेनार्थेन देशविशेषे कालविशेषे वा सहचरितमनुमेयधर्मान्विते चान्यत्र सर्वस्मिन् एकदेशे वा प्रसिद्धम्' (क) इति; 'यस्यार्थस्यैकदेशः' इति च। तथाचानेन सूत्रेण प्रत्यक्षमिन्द्रियसंनिकृष्टद्रव्यगुणकर्मान्यतममुख्यविशेष्यकमित्युक्तं भवति। न तु द्रव्यमुख्यविशेष्यकमेव; घ्राणादिजन्यगन्धादिप्रत्यक्षे तदयोगात्। सामान्यविशेष्यकं तु प्रत्यक्षं न। अत एव योग्यस्यापि

पृथिवीत्वस्य परमाणौ न प्रत्यक्षम् । तद्धि पृथिवीत्वविशेष्यकं वा पृथिवीत्वप्रकारकपरमाणुविशेष्यकं वा पृथिवीत्वप्रकारकघटादिविशेष्यकं वा । नाद्यः, अनङ्गीकारात् । न द्वितीयः, परमाणोरतीन्द्रियत्वात् । न तृतीयः, तदा घटादौ संनिकर्षाभावात् । तत्सत्त्वे च तस्येष्टत्वादिति । ननु प्रथमजातं घटादौ घटत्वादिसामान्यविशेषप्रत्यक्षं तद्विशेष्यकमेवेति चेन्न—विशेष्यतायाः प्रकारताशालिज्ञानमात्रनियततया निष्प्रकारकज्ञानस्य निर्विशेष्यकताया अप्यावश्यकत्वात् । किन्तु सविषयकत्वमात्रं तस्येति ॥ ३ ॥

एवं तावत् प्रत्यक्षे विषयरूपं कारणं शोधितम् । अथेन्द्रियरूपं कारणं चतुर्थद्वितीये कार्यपृथिव्यादिनिरूपणावसरे निरूपणीयमत्र निरूपणाभिसंधिना तत्रोपेक्षितमस्ति । तदत्र शोध्यते । तत्र, सर्वस्यापीन्द्रियस्य सर्वभूतप्रकृतिकत्वाविशेषात् किमिति घ्राणेन गन्धः, रसनेन रस इति ग्राह्यग्राहकव्यवस्था । तथाच यथा आहङ्कारिकाणि इन्द्रियाणीति सांख्यपक्षे एकाहङ्कारजन्यत्वाविशेषात् सर्वस्य सर्वग्राहित्वापत्तिदोषः, तथा स वैशेषिकपक्षेऽप्यापततीति शङ्कां परिहरति—

**४. द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ॥ (३२८)**

<u>द्रव्येषु</u> द्रव्यनिरूपणाध्यायगते चतुर्थद्वितीये, यद्वा <u>द्रव्येषु</u> शरीरेन्द्रियविषयरूपकार्यद्रव्येषु <u>पञ्चात्मकत्वं</u> पञ्चभूतोपादानकत्वं प्रतिषिद्धम् । अतः सर्वस्य सर्वप्रकृतिकत्वाभावान्नास्मत्पक्षे स दोष इति । अनेन सूत्रेण, ‘ प्रत्यक्षाप्रत्यक्षाणा ’ मिति सूत्रं न शरीरमात्रविषयमिति स्पष्टम् ॥ ४ ॥

नन्वेवमप्यस्माभिः सर्वं शरीरं पार्थिवमिति प्राभाकरवत् अनङ्गीकारात् पृथिव्याद्येकैकद्रव्येऽपि शरीरेन्द्रियादिभेदस्येष्टत्वात् पार्थिवशरीरगतानि सर्वाणीन्द्रियाणि पार्थिवानि आप्यशरीरगतानि चाऽऽप्यानीत्येवं व्यवस्थासिद्ध्या तत्र पार्थिवरसनादीनां घ्राणादिवद् गन्धादिग्राहकत्वं किं न स्यात् ; एवमाप्यादावपीति इन्द्रियतत्त्व-मविदुषः शङ्कां परिहरति—

**५. भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥** (३२९)

तथाच पार्थिवाप्यादिसर्वशरीरगतमपि घ्राणं पार्थिवमेव। एवं सर्वत्र रसनमाप्यमेवेत्येवं स्वीकारान्न दोष इति भावः। गन्धज्ञाने। ज्ञानपदं करणे ल्युडन्तम्। गन्धग्राहके घ्राणे सर्वत्र पृथिव्येव प्रकृतिः उपादानम्। ननु पार्थिवत्वाविशेषात् सर्वं देहगेहादिकमपि किं न गन्धग्राहकमित्यत्रोक्तं भूयस्त्वादिति। भूयस्त्वमाप्याद्यनभिभूतकेवल-पार्थिवद्रव्यारब्धत्वम्। यथा समानतन्त्रेऽपि (३-१-७१), 'तद्व्य-वस्थानात्तु भूयस्त्वात्' इति। नन्वेवमपि गन्धवत् पार्थिवरूपादिक-मपि घ्राणेन किं न गृह्यत इत्यत्रोक्तम् गन्धवत्त्वाच्चेति। गन्धस्यैव तत्रो-त्कटता फलबलेन कल्प्यत इत्यदोष इति। तदुत्कटत्वे तस्ये-न्द्रियगन्धस्यापि घ्राणेन ग्रहणापत्तिरिति चेन्न—केवलघ्राणस्येन्द्रियत्वा-भावात् गन्धविशिष्टतयैव तस्य तथात्वात्। तथाच ग्राहककोटि प्रविष्टतया ग्राह्यत्वं न भवति। तस्य ग्राह्यतया पृथक्कारे अवशिष्टस्य धर्म्यंशस्य ग्राहकत्वाभावात्। तदप्युक्तं तत्रैव, (७२) 'सगुणाना-मिन्द्रियभावात्' इति। न केवलमयं परिहारमार्गः ; उत्कटस्यापि

तस्यानुद्भूतत्वादिवशादग्रहणमित्यपि सुवचम् । तथाचानभिभूतपार्थिवारब्धत्वस्यौत्कटगन्धवत्त्वस्य च घ्राणे आवश्यकत्वात् घ्राणे पृथिव्येवोपादानमित्यर्थः ॥ ५ ॥

एवं रसनादीन्द्रियाणामपि प्रकृतिनियम इत्याह—

६. **तथऽऽपस्तेजो वायुश्च रसरूपस्पर्शाविशेषात् ॥** (३३०)

भूयस्त्वात् रसवत्त्वाच्च आपो रसज्ञाने प्रकृतिः । भूयस्त्वात् रूपवत्त्वाच्च रूपज्ञाने प्रकृतिस्तेजः । भूयस्त्वात् स्पर्शवत्त्वाच्च स्पर्शज्ञाने प्रकृतिर्वायुरिति । एवं सूत्रत्रयमेव विशिष्य पठितं व्योमवत्याम् । रसेत्यादि । रसनादौ रसादीनां घ्राणे गन्धस्येवौत्कट्याविशेषादित्यर्थः । यद्वा स्यान्नाम सर्वमिन्द्रियं पार्थिवम्; गन्धरसरूपस्पर्शमध्ये कस्यचित् कचिदुत्कटत्वादेकैकेन एकैकगुणमात्रग्रहणमिति स्यादित्याशङ्कां शमयितुं रसेत्यादिपदम् । गन्धस्येव रसादेः पृथिवीमात्रावृत्तित्वात् अबादेरपि तद्वत्त्वाविशेषात् विनिगमनाविरहः । तत्र वायौ स्पर्शमात्रस्य सत्त्वात् अप्तेजसोरेकैकरसरूपवत्त्वेन च तेषां प्रकृतित्वमुचितम् । पृथिव्याः सर्वरूपवत्त्वेन चक्षुषः पार्थिवत्वे किं तत्रत्यं रूपमिति दुरवधारम् । तथा रसनस्य पार्थिवत्वेऽपि । रसनस्य जलीयत्वे च मधुररसो रसन इति सुवचम् । एवमिन्द्रियद्वयस्य भूतद्वयकार्यत्वेऽन्यस्यान्यभूतजन्यत्वौचित्यात् स्पर्शमात्रवतो वायोः स्पर्शनप्रकृतित्वमिति, तेजः चक्षुःप्रकृतिरिति चक्षुषो भास्वरशुक्लरूपनियमसिद्धिः । अतोऽबादौ रसादिगुणानामवान्तरविशेषाभावात् एकत्वात् रसनादेः आप्यादित्वमिति । दर्शितव्योमवतीरीत्या अबादेः प्रकृतित्वबोधकसूत्र-

त्रयसत्त्वे तु तदुपरि इदं सूत्रं सर्वेषामिन्द्रियाणां पार्थिवत्वशङ्कापरिहारार्थमेव प्रवृत्तं वक्तव्यम्। तथेत्यस्य पृथिवीवत् अबादेरपि रसादिमत्त्वाविशेषात् पूर्वोक्तगमकबलाच्चाबादेरेव प्रकृतित्वमित्यर्थः। घ्राणादेः पार्थिवत्वादिसाधकानुमानविशेषाश्चान्यत्र द्रष्टव्याः। श्रोत्रस्येन्द्रियत्वेऽपि किञ्चित्प्रकृतिकत्वाभावादनुक्तिः। कर्णशष्कुल्यवच्छिन्न आकाश एव हि श्रोत्रम्। मनः पुनरिन्द्रियमपि अभौतिकं पृथग्द्रव्यं प्रागेव निरूपितमिति तन्न प्रस्तोतव्यमिति ॥ ६ ॥

बुद्ध्यपेक्षाध्यक्षशेषमर्थैतिपरिभाषणम्।
घ्राणादेः पार्थिवत्वादिनिर्णयोऽप्यष्टमान्तिमे ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने अष्टमे द्वितीयमाह्निकम्।

इत्यष्टमोध्यायः ॥

---

## अथ नवमोऽध्यायः

एवमष्टमे लौकिकभावप्रत्यक्षं निरूपितम्। अथावशिष्टमस्मिन्नाह्निके निरूप्यते। तच्चाभावलौकिकप्रत्यक्षमशेषालौकिकप्रत्यक्षञ्च। तत्राद्यं दर्शयितुमभावमेव चतुर्विधं प्रागनुक्तं पूर्वं स्थापयति—

**१. क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ (३३१)**

सत्कार्यवादिभिः कार्यमपि घटादिकं सर्वदा सदिति मन्यते। तदयुक्तम्। भविष्यद् घटादिकं प्रागसदेव। कुतः? जलाहरणादि-

क्रियायाः, घटगतैकत्वस्य गुणस्य, अयं घट इति व्यपदेशस्य च तदानीमभावादिति । तथा च यत्र देशे कपालादौ कार्यं समवायेनोत्पद्यते, तत्र ततः प्राक् तदभाव इति सिद्धः प्रागभावः ॥ १ ॥

२. सदसत् ॥ (३३२)

सत् कपालादौ घटादिकं पश्चात् अवयवविश्लेषे सति असद् भवति । कुतः ? अनन्तरमपि क्रियागुणव्यपदेशाभावात् पूर्वोक्तात् । अतो ध्वंसोऽपि सिद्धः ॥ २ ॥

ननु प्रागूर्ध्वं च घटादिकं तत्त्वेनास्तीति पक्षस्तु मा भूत् । अथापि कपालद्रव्य—बहुतन्त्वाद्यपेक्षयाऽन्यस्य घटपटादेस्तत्सत्ताकालेऽप्यनुपलम्भात् घटादिकं कपालादिरूपेण सर्वदा सदेवेति शङ्कां परिहरति—

३. **असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥** (३३३)

सदित्यनुवर्तते । असत् इति पञ्चमी । सत् असतोऽर्थान्तरम् । प्रागूर्ध्वञ्च सत् कपालादिकं घटाद्यपेक्षयाऽन्यदेव । घटादौ दृष्टानां क्रियागुणव्यपदेशानां पूर्वोक्तानामत्राभावात् । मिथो विरुद्धधर्मोपलम्भे सति धर्म्यैक्यकल्पनायोगात् । अन्यथा घटपटयोरप्यैक्यापत्तेः । घटकपालयोरभेदे घटत्वजातेः कपालेऽप्युपलम्भापत्तेश्च । जातेर्व्यक्तौ सर्वदा सत्त्वात् । अवयवावयविभेदश्च प्रागेव स्थापितः । तत्सिद्धं पूर्वं पश्चाच्च कार्यद्रव्यस्याभाव एवेति ॥ ३ ॥

४. **सच्चासत्** (३३४)

चार्थः समुच्चयः साहित्यम् समानदेशकालकत्वम् । तथाच यदा यत्र घटादिकं सत्, तदा तत्रैव तदसद् भवति । कथमिति चेत्

—पटाद्यात्मना । यद्वा सत् भवत् असत् अभवत् । पुरोवर्ति यद् घटादि, तत् घटादिरूपेण भवदपि पटाद्यात्मना न भवति । अतो घटरूपेण सत् तदैव पटरूपेणासच्च भवतीति तादात्म्याभावो नाम अन्योन्याभावोऽपि कश्चिदस्तीति ॥ ४ ॥

५. यच्चान्यदसदतः, तदसत् ॥ (३३५)

यद् वस्तु अतोऽन्यद् भवति उक्तत्रिविधासद्विलक्षणं भवति— न प्रागसदिति ; न पश्चादसदिति ; न वा तद्देशे तत्काल एवासदित्युच्यते ; अथाप्यसदेव—तच्चासदिति मन्तव्यम् । यथा गन्धादिकं जलादावसत् । न हि तस्य तत्र प्रागभावः प्रध्वंसाभावोऽन्योन्याभावो वा । अतोऽयमुक्तातिरिक्तोऽत्यन्ताभाव इति ॥ ५ ॥

एवं चतुर्विधान् अभावान् उक्त्वा तज्ज्ञानोत्पत्तौ कारणं दर्शयति—

६. असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत् (३३६)

भूतशब्दो भावरूपप्रतियोगिपरः । इदमसदिति ज्ञानं प्रतियोग्यनुपलब्धेः प्रतियोगिस्मरणाच्च भवति । यथा विरोधिप्रत्यक्षम् । औष्ण्यादेः शैत्यादिविरोधित्वेन रूपेण प्रत्यक्षे हि औष्ण्याद्यधिकरणे शैत्याद्यनुपलब्धिः शैत्यादिस्मृतिश्चापेक्षिता, तद्वत् । अस्य सूत्रस्य यत्किञ्चिदेकाभावविषयकत्वे प्रक्रमानुरोधात् प्रागभावप्रत्यक्षमेव प्रथमं वक्तव्यं स्यात् ; न ध्वंसप्रत्यक्षम् । सूत्रेषु असत् अभाव इति सामान्यपदस्य विशेषसंकोचं विना सर्वग्रहणेन निर्वाहो युक्तः ॥ ६ ॥

उप. सू. ६. चतुर्ष्वभावेषु ध्वंसस्य प्रत्यक्षकारणमुच्यते. विरोधिनः प्रतियोगिनः पूर्वकाले यथा प्रत्यक्षम्, तथा ध्वंसस्यापि पश्चात् प्रत्यक्षम् ; तदा घटप्रत्यक्षाभावात् पूर्वस्थितघटस्मरणाच्च ।

एवं तावत् असच्छब्देन प्रक्रमात तदनुरोधेन, घटोऽसन् पटोऽसन्निति ज्ञानं प्रदर्श्य तत्र हेतुरुक्तः। अत्रैवमाशङ्का—असत्पदस्य न सत् असदिति विग्रहे सद्भिन्नमित्येवार्थलाभात् कथं प्रागभावादित्रयं तेन बोध्येत। एवञ्च सर्वत्रान्योन्याभावेनैव निर्वाहादन्यत् अभावत्रयं नैव स्वीकार्यम्। अथ घटो नास्तीत्यादौ घटमात्रस्य प्रतियोगित्वानुभव इति कृत्वा सर्वमभावमङ्गीकृत्य असदित्यस्य अभावप्रतियोगीत्यर्थविवक्षया सर्वाभावसाधनमिष्यते, तावताऽपि तेषां प्रत्यक्षमुपपादितं न भवति। अनुपलभ्यमानस्य घटादेरेव विशेष्यत्वात। इन्द्रियेण स्वसंनिकृष्टमुख्य-विशेष्यकज्ञानस्यैव जननात्। घटादेश्चासंनिकृष्टत्वात् उक्तज्ञानस्य प्रत्यक्षात्वायोगेनाम्याभावप्रत्यक्षसमर्थनाक्षमत्वात् इति। तत्राह—

**७. तथाऽभावे; भावप्रत्यक्षत्वाच्च (२३७)**

तथाऽभावे। यथा अभावप्रकारकं घटादिप्रतियोगिविशेष्यकं घटोऽसन्निति, एवं प्रतियोगिप्रकारकमभावविशेष्यकमपि ज्ञानं भवति। घटो नास्ति, घटस्याभाव इत्येवमित्यर्थः। तथाच तत्रेन्द्रियसंनिकृष्टस्याभावस्यैव विशेष्यत्वात् ज्ञानस्य प्रत्यक्षत्वं नानुपपन्नम्। एवं सर्वत्राभावप्रत्यक्षत्वप्रकारमुपपाद्य क्वचित् प्रतियोगिविशेष्यकमपि पूर्वोक्तज्ञानं प्रत्यक्षं भवतीत्युक्ताऽपि शङ्कां परिहर्तुं भावप्रत्यक्षत्वाच्चेति। न खलु प्रतियोगिस्मरणमेवाभावज्ञानकारणमिति नियमः, क्वचित् प्रतियोग्यनुभवस्यापि संभवात्। अतः प्रतियोगिज्ञानं कारणम्। तथाच यत्र देशद्वय-

---

उप. सू. ७. प्रागभावेपि प्रत्यक्षं भवति, कार्यं प्रति कारणानां, तुरीतन्त्वादीनां मिलितानां प्रत्यक्षे।

प्रत्यक्षम्, एकत्र देशे घटप्रत्यक्षञ्च, तत्र, प्रतियोगिनोऽपि प्रत्यक्षम्। घटं हस्ते निक्षिप्तवति च पुंसि, 'अयं घट एतस्मिन् देशेऽसन्' इति ज्ञानमभावं घटञ्च युगपदेव साक्षात्कुर्वदुत्पद्यत इति। अतो भावस्य प्रतियोगिनः क्वचिदभावग्रहकाले प्रत्यक्षत्वाच्चाभावज्ञानं प्रत्यक्षं भवतीति ॥ ७ ॥

अन्योऽन्याभावः प्रतियोगिमत्यपि देशे सुगमः। यथा घटाधिकरण एव भूप्रदेशे, अयं न घट इति। तथाच तत्र प्रतियोगिनः प्रत्यक्षमेव प्रायो भवेत्। अतो भावप्रत्यक्षत्वकथनादन्योन्याभावप्रत्यक्षं सम्यगुपपादितं भवतीत्याशयेनाऽऽह—

**८. एतेनाघटोऽगौरधर्मश्च व्याख्यातः (३३८)**

एतेन अभावप्रत्यक्षे भावस्मृतिर्भावप्रत्यक्षमपि वा हेतुरिति कथनेन अघट इत्यादिकं व्याख्यातम्। अयमघट इत्यत्र घटप्रत्यक्षमेवाभावज्ञानकारणमिति सुवचत्वात्। एवमगौरित्यपि। भावस्य प्रत्यक्षासंभवे स्मृतिरपि हेतुरेव, यथा अयमधर्म इति धर्मभेदग्रहणे। धर्मस्यादृष्टस्यातीन्द्रियत्वेन प्रत्यक्षस्य दुरुपपादत्वात्। ननु धर्मभेदः कुत्र प्रत्यक्षः, न तावद् रूपादौ, पुण्यविरोधिनि पाप एवाधर्मव्यवहारदर्शनात्। न च पाप एव धर्मभेदग्रहो विवक्षित इति वाच्यम्—पापस्यापि पुण्यवत् अतीन्द्रियतया तत्र धर्मभेदप्रत्यक्षायोगात्। भेदप्रत्य-

---

॰ उप., सू. ८. अन्योन्याभवप्रत्यक्षमत्रोच्यते। एतेन—प्रतियोगिस्मरणाधिकरणग्रहणादिकारणसत्त्वेन।

क्षेऽधिकरणयोग्यता तन्त्रमित्यभ्युपगमादिति चेत्—रूपादेरपि धर्मभिन्नत्वेन तावन्मात्रविवक्षयैव अधर्म इत्युक्तत्वात्। यद्वा अदृष्ट इव विहितनिषिद्धक्रिययोरपि धर्माधर्मव्यवहार इष्ट इति अधर्मपदं धर्मभूतक्रियाविरोध्यधर्मक्रियापरम्। एवञ्च प्रत्यक्षत्वमुपपन्नम्। अधर्म इति च नातीन्द्रियप्रतियोगिकभेदप्रदर्शनायोक्तम्। किं तु अघट इत्यत्र भेदमात्रप्रतीतिः; अगौरित्यत्र भिन्नत्वे सति प्राणित्वरूपं साजात्यम्; अधर्म इत्यत्र पुण्यरूपधर्मविरोधित्वमपि पापगतं प्रतीयत इति व्युत्पादनाय नानोदाहरणम्।

ननु जले गन्धो नास्तीत्यादाविव भेदस्थलेऽप्यत्यन्ताभाव एव विषयोऽस्तु। घटो न पट इत्यस्य घटः पटत्वात्यन्ताभाववानित्यर्थः। अतः कृतमधिकेन भेदेनेति चेत्—उच्यते। द्रव्यगुणकर्मणां विशेष्यतया प्रतीतावपि सामान्यादेर्वस्तुप्रकारतया प्रतीतिरेवाऽऽनुभविकीति प्रागेवोक्तम्। अतो घटो न पट इत्यादौ धर्म्यविशेषणतया पटत्वादिकं स्वातन्त्र्येणोल्लिख्य तदत्यन्ताभावप्रतीतिरनुभवानारूढा। पटात्यन्ताभावस्तु न तदर्थः; पटवत्यपि देशे, नायं पट इति प्रतीतेः। अतः पटभेदरूपार्थवर्णनाय अन्योऽन्याभावः स्वीकार्य इति। जले गन्धो नास्तीत्यत्र च गन्धस्य प्रतियोगित्वमेव संभवति। अतो न तत्र गन्धवद्भेदो विषयः। गन्धवतो द्रव्यस्य अस्मरणेऽपि तत्प्रतीतिभावात् ॥८॥

ननु न प्रतियोगिनोऽतीन्द्रियत्वेऽभावप्रत्यक्षम्। तथाच कथमधर्म इत्युदाहरणमिति चेन्न—अत्यन्ताभावग्रह एव प्रतियोगियोग्यता

तन्त्रम्; न तु अन्योऽन्याभावग्रहे । अत एव स्तम्भो न पिशाच इति भेदानुभवः । पिशाचो न स्तम्भ इति न प्रत्यक्षम्—प्रत्यक्षस्येन्द्रिय-योग्यपदार्थमुख्यविशेष्यकत्वनियमात् । एवञ्चात्यन्ताभावग्रहे प्रतियोगि-योग्यता तन्त्रम्; अन्योऽन्याभावग्रहे चाधिकरणयोग्यता । अथवा प्रति-योगिनस्तत्संबन्धित्वे तत्संबन्धित्वेनोपलम्भः स्यादिति यत्रापत्तिर्भवितु-मर्हति, तत्राभावप्रत्यक्षमिति सर्वाभावग्रहानुगमः । यदि भूतले घटः स्यात्, भूतलवृत्तित्वेनोपलभ्येत; यदि स्तम्भे तादात्म्येन पिशाचः संबद्धः स्यात्, तथा तत्संबन्धितयाऽनुभूयेतेत्यापत्तिसंभवादभावप्रत्यक्षम् । न च पिशाचस्यातीन्द्रियतया कथमेवमापादनमिति शङ्क्यम्—स्तम्भपि-शाचयोरैक्ये स्तम्भस्योपलम्भे पिशाचस्यातीन्द्रियत्वायोगात्; विरुद्धधर्म-योरेकत्रासमावेशात् । पिशाचत्वेन रूपेणातीन्द्रियत्वमित्यपि नास्ति, योग्यव्यक्तिवृत्तेर्जातेरपि योग्यत्वस्यावश्यकत्वात् । अत उक्तरीत्या आपादनसंभवात् पिशाचभेदस्य प्रत्यक्षम् । एवं तर्हि यदि स्तम्भे पिशाचत्वं स्यात्—उपलभ्येत, योग्यवृत्तित्वादित्युक्त्वा स्तम्भे पिशाच-त्वात्यन्ताभावप्रत्यक्षमपि किं नेष्यत इति चेत्—इष्यताम् । परंतु जातेः प्रकारतया भानस्यैव लौकिकत्वाल्लोके न पिशाचत्वाभावानुभवः, किं तु पिशाचभेदानुभव एवेति निष्कर्षमार्गः ॥ ८ ॥

ननु यत् कदाचिदपि प्रतियोग्यधिकरणम्, तत्र नात्यन्ताभाव-प्रत्यक्षम्; तस्य त्रैकालिकाभावत्वेन तत्रायोगादिति न युक्तम् । घटवति कपालेऽपि प्रागूर्ध्वञ्च लोके, घटो नास्तीति प्रतीतेः । नास्तीति ह्यत्यन्ता-भावस्याभिलाप इत्यत्राह—

## ९. अभूतं नास्तीत्यनर्थान्तरम् (३३९)

अभूतमिति पदगम्यो नास्तीति पदगम्यश्चाभाव एक एव। अभूतमनुत्पन्नमित्यर्थे प्रागभावो विषयः। तदभिप्रायेण क्वचित् नास्तीति प्रयोगः। भूतस्य उत्पन्नस्याभावोऽभूतमिति विवक्षायां ध्वंसो विषयः। तदभिप्रायकमपि क्वचित् नास्तिपदम्। भूतस्य क्वचित् स्थितस्यान्यत्राभावश्चेत् अभूतपदेन,तर्ह्यत्यन्ताभावो विषय इति। एवञ्च ध्वंसप्रागभावाधिकरणे नास्तीति प्रतीतिर्नात्यन्ताभावविषयिणीति न तदर्थमत्यन्ताभावस्य तत्र स्वीकार इति। अत्र उपस्कारसंमतार्थनिष्कर्षस्तु अभूतपदम् अभावाधिकरणावृत्तिप्रतियोगिपरम्। अतो गन्धादिकमभूतम्। जलावृत्तित्वात्। तथाच गन्धादिकं जलादौ नास्तीत्येवम् 'अभूतं नास्तीति' ज्ञानं अनर्थान्तरम् ध्वंसादिविलक्षणमत्यन्ताभावविषयकमिति ॥ ९ ॥

नन्वेवं गेहे घटो नास्तीति प्रतितिः कथं निरुह्येत। न तावत् ध्वंसप्रागभावयोस्तत्र भानम्, तयोः प्रतियोगिसमवायिदेशवृत्तितया गेहे घटध्वंसाद्यसंभवात्। नान्योऽन्याभावस्य, घटकालेऽपि तथा प्रतीत्यापत्तेः। अत्यन्ताभावस्तु त्रैकालिकः तत्र कदाचिटाद्धधिकरणे दुरुपपादः। न च पञ्चमः सामयिकाभावः प्राक् परिगणितोऽस्ति इत्यत्राह—

## १०. नास्ति घटो गेह इति घटे गेहसंसर्गप्रतिषेधः (३४०)

गेहसंसर्गः गेहानुयोगिकघटप्रतियोगिकसंयोगः। तत्प्रतिषेधः तत्प्रागभावो ध्वंसश्च। तथाच घटध्वंसादेर्गेहेऽसंभवेऽपि घटप्रतियोगिकसंयो

---

उप. सू. ९. अत्यन्ताभावप्रत्यक्षमत्रोच्यते। जलादौ—अनुत्पन्नमविनष्टञ्च यत् गन्धादि, तत् तत्र जलादौ नास्तीतिज्ञानम् अनर्थान्तरं-ध्वंसप्रागभावाद्य-विषयकम्। अत्यन्ताभावविषयकमिति यावत्।

गस्य द्विष्ठतया गेहमपि समवायीति संयोगध्वंसो वा तत्प्रागभावो वा तत्र यथायथं विषय इति नानुपपत्तिः । उक्तञ्च न्यायकुसुमाञ्जलौ, "भूतले घटो नास्तीति ; संयोगो ह्यत्र निषिध्यते" इति ॥

एवं तावत् अभावलौकिकप्रत्यक्षमुक्तम् । इदञ्च बाह्यान्तरसर्वेन्द्रियजन्यं मन्तव्यम् । एवमिन्द्रियसाध्यलौकिकप्रत्यक्षमध्ये एतदन्तर्भाववर्णनादत्रापि इन्द्रियजन्यत्वमतिरिक्तानुपलब्धिप्रमाणकत्वाभावश्च सिद्धयत्येव ।

नन्वभावप्रत्यक्षे कः संनिकर्ष इति चेत्—इन्द्रियसंबद्धवस्त्वनुयोगिकस्वरूपसंबन्धः । अयमेव विशेषणतेति विशेष्यतेति चोच्यते । अभावस्य विशेषणतया विशेष्यतया वा भासमानत्वादिति ॥ १० ॥

अथालौकिकप्रत्यक्षं निरूप्यते । तच्च योगिनाम् । ते द्विविधाः युक्ताः वियुक्ताश्च । योगप्रवृत्ताः युक्ताः । योगस्य विनिष्पन्नतया तत उपरताः वियुक्ताः । अनयोरेव व्युत्क्रमेण युक्तयुञ्जानशब्दाभ्यामपि क्वचिद् व्यपदेशः । द्विविधानामप्यतीन्द्रियगोचरमप्यलौकिकं प्रत्यक्षमिष्टम् । परंतु तत्र सामग्रीभेदः । तथाच भाष्यम्—"अस्मद्विशिष्टानां तु योगिनां युक्तानां योगजधर्मानुगृहीतेन मनसा........दर्शनमुत्पद्यते । वियुक्तानां पुनश्चतुष्टयसंनिकर्षात् योगजधर्मानुग्रहसामर्थ्यात् सूक्ष्मव्यवहितविप्रकृष्टेषु प्रत्यक्षमुत्पद्यते" इति । तत्र प्रथमं युक्तसमवेतं प्रत्यक्षमाह—

११. आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् (३४१)

आत्मनीति स्वात्मपरात्मोभयपरम्। सप्तम्यर्थो विषयत्वं प्रत्यक्षान्वयि। यद्वा आत्मनीत्यस्य संयोगविशेषादित्यत्रान्वयः। तदा चाधेयत्वं सप्तम्यर्थः। आत्ममनसोरित्यस्य स्वात्मनो मनसश्चेत्यर्थः। नात्रानयोर्द्वयोर्मिथस्संयोग एव संयोगविशेषादिति विवक्ष्यते। किं तर्हि? आत्मनि विषयभूते आत्ममनउभयनिरूपितसंयोगविशेषः। यद्यपि विभोरात्मनः तादृशात्मान्तरसंयोगो न भवति। तथा स्वात्मन्यप्यात्मसंयोगोऽसंभवी ; संयोगस्य द्विष्ठत्वात्। अथापि विशेषपदेन एतदाशङ्कापरिहारः। विशेषो वैलक्षण्यम्—आत्मसंयोगस्य परम्परया संबन्धित्वरूपं मनस्संयोगस्य साक्षात्संबन्धित्वरूपञ्च। एवं विशेषपदेन योगजधर्मानुग्रहादिविशेषितत्वमप्युच्यते। तथाचात्ममनसोः संयोगविशेषादित्यस्य योगजधर्मविशेषावच्छिन्नस्वात्मसंयोगिमनस्संयोगादिति विशिष्टार्थः। इदं पदमुत्तरसूत्रेष्यन्वेष्यतीति अत्रात्मपदेन स्वात्ममात्रग्रहणम्। तथाच युञ्जानः, यदा स्वस्य यद्विषये बुभुत्साऽस्ति, तदा तद्विषयबुभुत्साविशिष्टस्वात्मप्रदेशे मनः संयोज्य तादृशं मनः पुनः सावधानं बहिरबहिर्वा संगमयति। अतो बुभुत्सायोगजधर्मोभयविशिष्टस्वात्मसंयुक्तमनस्संयोगबलात् स्वात्मानं परात्मानं वा प्रत्यक्षयतीति। ईदृशमनस्संयोगविशेष एवचिन्तनेत्युच्यते। अत्र प्रत्यक्षमित्येतावति पठितव्ये आत्मप्रत्यक्षमिति पाठो लक्ष्यते। आत्मनीत्यस्य प्रत्यक्षमित्यत्रान्वये च तत् व्यर्थम्—

उप. सू. ११. आत्मनि स्वात्मनि परात्मनि च योगिप्रत्यक्षं भवति, कीदृशम्? आत्मा प्रत्यक्षो यस्य तत्। आत्मविषयकम्। कस्मात्? आत्ममनःसंयोगे योगजधर्मानुग्रहात् विशेषात्।

आत्मगतं स्वगतमेव प्रत्यक्षम्; योऽयमात्मा पूर्वमपि अहं सुखीत्यादौ सामान्यतो भातः प्रसिद्धः, यश्चायं पूर्वमान्तरग्रहणासमर्थ आसीत्, तस्यैव स्वस्येदानीमहन्त्वांशातिरिक्तातीन्द्रियाकारविशिष्टस्वात्मविषये, तथा सर्वथैवागृहीतपरमात्मविषये च प्रत्यक्षमित्यद्भुतशक्तिव्यक्तये। न्याय-भाष्ये (१-१-३) आत्मनीति पदं विनैवेदं सूत्रमनूदितमस्ति। तथा तद्रहितपाठादरणे तु आत्मप्रत्यक्षमित्यस्य सर्वात्मविषयकप्रत्यक्षमित्यर्थः।

**१२. तथा द्रव्यान्तरेषु (प्रत्यक्षम्) (६४२)**

तथेति आत्ममनसोः संयोगविशेषादित्येतदन्वयार्थमुक्तम्। सूत्रे प्रत्यक्षमिति पदाभावेऽनुवृत्तिर्मन्तव्या। द्रव्यान्तरेषु अतीन्द्रियेषु वाय्वाकाशदिक्कालमनःपरमाणुष्वपि योगजधर्मविशिष्टस्वात्मसंयुक्तमनस्संयोगात् सावधानं कृतात् तादृशद्रव्यान्तरविषयकं प्रत्यक्षं भवतीत्यर्थः। सूत्रमिदं द्रव्यमात्रविषयकम्। अन्यविषये तु वक्ष्यते ॥ १२ ॥

अथ वियुक्तानां लौकिकं द्रव्यप्रत्यक्षं दर्शयति—

**१३. असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषाञ्च (६४६)**

प्रत्यक्षमित्यनुवर्तते। एवमग्रेऽपि। वियुक्ताः असमाहितान्तःकरणाः; येषामन्तःकरणं पूर्वं समाहितम्; न पुनःसमाधानापेक्षा। अतो नास्मादृशानां वियुक्तत्वम्। समाहितान्तःकरणा अपि पश्चाद् योगाद् व्युत्थिताः भ्रष्टाश्च भवन्ति। तेऽपि न वियुक्ताः। किं तु ये उपसंहृतसमाधयः,

---

उप. सू. १२. द्रव्यान्तरेषु—आत्मातिरिक्ताणुवायुदिगादिद्रव्य तत्तद्गुण-कर्मसामान्यविशेषेषु योगिप्रत्यक्षम्।

त एव । उपसंहारः समापनम् सम्यक् पूरणम् । सुनिष्पन्नसमाधीनामेषामपि स्वात्मान्तरद्रव्यान्तरविषयकं प्रत्यक्षमस्तीति सूत्रार्थः । चकारः पूर्वयोगिसमुच्चये । यद्वा योगविरहेऽपि केचिदर्जुनसञ्जयादयः भगवदाचार्यप्रसादबलेन ईदृक्छक्तिसंपन्नाः श्रुताः, 'दिव्यं ददामि ते चक्षुः,' 'व्यासप्रसादात् श्रुतवान्' इत्यादेः । तत्परोऽयं चकारः । अत्र प्रत्यक्षकाले मनस्समाधानराहित्यकथनात् पूर्वोक्तो विशिष्टात्मसंयुक्तमनस्संयोगरूपो विषयमनस्संयोग एषां प्रत्यक्षे नापेक्ष्यत इति दर्शितम् । तर्हि कथं तत् प्रत्यक्षं भवति, इन्द्रियसन्निकर्षानधीनत्वादिति चेत्—अत्र भाषितपूर्वमुत्तरम् , "चतुष्टयसंनिकर्षसहिताद् योगजधर्मानुग्रहसामर्थ्यात्" इति । आत्मा मनसा संयुज्यते, मनः इन्द्रियेण, इन्द्रियमर्थेन इति लौकिकप्रत्यक्षक्लृप्तः आत्ममनइन्द्रियार्थरूपचतुष्टयसंबन्धिसंनिकर्ष एव कारणम् । एतस्य सूक्ष्मव्यवहितविप्रकृष्टार्थदर्शनक्षमता योगजधर्मभाविता ।

ननु यस्येन्द्रियस्य यद्विषयदर्शनक्षमता, स विषयो व्यवहितोऽपि गृह्यत इत्यास्ताम् । अतीन्द्रियाणां परमाणुपवनगगनादीनामैन्द्रियकत्वं कथम् , व्याघातादिति चेन्न—अस्मादृशेन्द्रियाग्राह्यत्वमात्रेणातीन्द्रियत्वव्यवहारात् । योगजधर्मरूपसहकारिविशेषस्यास्मदीयप्रत्यक्ष इव योगिप्रत्यक्षे महत्त्वोद्भूतरूपतदेकार्थसमवायालोकसंयोगादीनामनपेक्षितत्वात् । वक्ष्यति च नवमान्त्ये एवम्भूतं सिद्धदर्शनमपि इन्द्रियसापेक्षम् । तर्हि किं ते घ्राणेनापि शृणुयुः, श्रोत्रेणापि जिघ्रेयुरिति चेन्न—तथात्वेऽप्यदोषात् । आहुश्च केचिदभियुक्ताः, "त्वक् च दृक् च

निपिपासति जिह्वा विह्वला श्रवणवत्........'' इति । अथवा घ्राणादीनां गन्धादिगुणमात्रग्राहितया क्लृप्ततया तैः सूक्ष्मव्यवहितगन्धादिग्रहणमेव योगिविषये युक्तम् । द्रव्यग्राहकस्य चक्षुष एव सर्वग्राहिता । त्वचो बहिःप्रसरणासमर्थतया व्यवहितविप्रकृष्टसंनिकर्षोपपादने क्लेशात् । अत एव 'योगिनः पश्यन्ति' इत्येव व्यवहारः, न तु स्पृशन्तीति ; 'दिव्यं ददामि ते चक्षुः' इति चक्षुःपदप्रयोगश्च । अत एव च सर्वग्राहितया, "सर्वेन्द्रियाणां नयनं प्रधानम्" इत्युच्यते । अतश्चाक्षुषत्वात् प्रत्यक्षत्वं सुस्थम् ।

ननु कुड्यादिव्यवहितेषु देशविप्रकृष्टेषु च योगिनां चक्षुःसन्निकर्षः स्यान्नाम ; अन्तरास्थितानां स्फटिकादिवत् प्रतिरोधशक्तिनिरोधात् । कालविप्रकृष्टानामतीतानागतानां कथमिन्द्रियसंनिकर्ष इति चेत्—अतीतानागतानामवयविनामारम्भककोटिनिविष्टा येऽवयवाः योगिप्रत्यक्षकाले स्थिताः, तैरेव योगीन्द्रियसंयोगः । इन्द्रियसंयुक्ततत्समवायादिरूपसंनिकर्षादेव तु अतीताद्यवयविप्रत्यक्षमिति स्वीकारात् । समवायस्य नित्यतया तदानीमपि सत्त्वात् । तद्द्रव्यसमेवतगुणादिप्रत्यक्षं तु तत्समवेतसमवायादिना । अस्तु वा इन्द्रियसंयोगकाले यदतीतम्, तत्र तदतीतत्वमेव संनिकर्षः, अनागते चानागतत्वमेव स इति । नन्वक्लृप्तैवंविधसंनिकर्षकल्पने गौरवमिति चेन्न—लौकिकप्रत्यक्षं प्रति संयोगसंयुक्तसमवायादिषड्विधसंनिकर्षकल्पनेऽपि गौरवात् । फलबलात् कल्पनमिति तु तुल्यमत्रापि । पश्यामीत्यनुव्यवसायस्य, अक्षजत्वाभावे प्रत्यक्षत्वायोगस्य च सर्वत्राविशिष्टत्वात् ।

ननु प्रत्यक्षे विषयस्य कारणत्वात् अतीतानागतयोः प्रत्यक्षे कथं कारणत्वमिति चेत्—इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमिति किल सूत्रम्, न पुनरर्थोत्पन्नं प्रत्यक्षमिति । संयोगस्य संनिकर्षस्यार्थवर्तमानतायामेव संभवात्तु अर्थजत्वं प्रत्यक्षस्य । नन्विदमयुक्तम् । श्यामघटे पाकाद् रक्ते जातेऽपि संयुक्तसमवायरूपसंनिकर्षात् श्यामरूपप्रत्यक्षापत्तेः । अतोऽतीतानागतानामीदृशसमवायादिसंनिकर्षेणाग्रहणात् अर्थोऽपि प्रत्यक्षेऽव्यवहितपूर्ववृत्तितया कारणमिति चेत्—सत्यमिदं लौकिकप्रत्यक्षे । अलौकिके तु सामान्यलक्षणादिजन्यज्ञान इव योगजेऽपि संनिकर्ष एव कारणम्—नार्थः । अत एव इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमित्येवोक्तम् । नन्वेवं योगिप्रत्यक्षे वर्तमानस्यापि विषयस्य कारणत्वं न स्यात् । नैवम्—वर्तमानविषये इन्द्रियसंयोगरूपसंनिकर्षस्य कारणत्वात् संयोगं प्रति च द्रव्यस्य समवायिकारणतया पूर्ववृत्तित्वावश्यम्भावेन संयोगसंनिकर्षजप्रत्यक्षत्वावच्छिन्नं प्रति विषयः कारणमित्युक्तौ अदोषात् । समवायादिसंनिकर्षस्थले तु तादृशलौकिकप्रत्यक्ष प्रत्येव विषयस्य कारणत्वमिति । अस्तु वा विषयतासंबन्धेन लौकिकप्रत्यक्षं प्रत्येव वस्तुनः तादात्म्येन कारणत्वम् । अन्यत्र च विषयस्य कारणत्वं न कल्प्यत इति । ननु विषयाभावेऽपि प्रत्यक्षाङ्गीकारे अत्यन्तासतः शशशृङ्गस्यापि प्रत्यक्षापत्तिरिति चेन्न—अलसस्य संनिकर्षस्य कस्याप्यभावादिति युक्तमुत्पश्यामः ।

ननु योगिप्रत्यक्षे किं प्रमाणमिति चेत्—परमाण्वादयः प्रत्यक्षाः प्रमेयत्वादित्येवमनुमानमित्याचार्याः (न्या. कु. ५.) । अस्तु वा केवलानुमानस्याप्रयोजकत्वादिदोषे आगम एवात्र प्रमाणमिति ॥ १३॥

उभयेषामपि योगिनामद्रव्येषु प्रत्यक्षे संनिकर्षमाह—

**१४. तत्समवायात् कर्मगुणेषु (३४४)**

यादृशमनस्संयोगो वा यादृशबहिरिन्द्रियसंयोगो वा येषु द्रव्येषु प्रत्यक्षकारणत्वेनोक्तः, तादृशसंयोगविशिष्टतद्द्रव्यसमवायात् संनिकर्षात् तद्गतकर्मगुणसामान्यविशेषप्रत्यक्षमिति । इदमुपलक्षणम्—तादृशद्रव्यसमवेतसमवायात् तद्गतकर्मगुणवृत्तिकर्मत्वगुणत्वादिजातिप्रत्यक्षम्, यथायथं तत्तद्घटितस्वरूपसंबन्धविशेषात् तत्तद्गताभावप्रत्यक्षमपि भवतीत्यवसेयम् ॥ १४ ॥

बाह्येन्द्रियसंयुक्तसमवायरूपः संनिकर्षः स्वात्मगुणग्रहणे नापेक्षितः; मनःसंयुक्तसमवायेनैव निर्वाहादित्याशयेनाऽऽह—

**१५. आत्मसमवायादात्मगुणेषु (३४५)**

आत्मगुणेष्वतीन्द्रियेषु धर्माधर्मादिषु आत्मसमवाय एव प्रत्यक्षसंनिकर्षः। आत्मप्रत्यक्षे यः संनिकर्षः कारणम्, तादृशसंनिकर्षविशिष्टात्मसमवाय एवेति यावत् । तेन स्वगतान् धर्माधर्मान् अध्यक्ष्य परात्मद्रव्यान्तरतद्धर्मादिसाक्षात्करणात्, यत्र यत्र स्वानुभाव्यं यद् यदस्ति, तत्तत् निर्धार्य, 'नाभुक्तं क्षीयते कर्म' इति शास्त्रश्रद्धया स्वसंचितानां पुण्यानामकृतप्रायश्चित्तानाञ्च पापानां भोगेन क्षपणमभिकाङ्क्षन् योगी युगपदेव स्वगतसामर्थ्यभावितानि सुरनरखरकरटसरटशाकोटकादीनि

---

उप. सू. १४. सर्वविषयकं योगिप्रत्यक्षं संभावितस्थलेषु कर्मगुणादिविषये इन्द्रियसंयुक्तसमवायमप्यपेक्षते ।

उप. सू. १५. आन्तरप्रत्यक्षे तु न बहिरिन्द्रियसंयुक्तसमवायाद्यपेक्षा; किन्तु आत्मसमवायापेक्षेति ।

सर्वप्रकाराणि शरीराण्यधिष्ठायानुभवेनैव शमितकल्मषः शान्तः केवलो मुक्तो भवतीति फलमलौकिकप्रत्यक्षस्य । तदिदं विशिष्य वेदयितुमेतत् सूत्रमिति ॥ १५ ॥

चतुर्विधान् अभावांस्तद्दृष्टिं प्रत्यक्षमान्तरम् ।
नवमाद्येऽब्रवीत् सर्वाध्यक्षं युक्तवियुक्तयोः ॥

**इति वैशेषिकरसायनसहिते वैशेषिकदर्शने नवमे प्रथमाह्निकम् ।**

---

## अथ नवमे द्वितीयमाह्निकम्

परोक्षज्ञाननिरूपणमत्र क्रियते। तत्र प्रत्यक्षोपजीवि प्रत्यक्षवत् पृथक्प्रमाणभूतमनुमानमादौ व्युत्पादयति—

**१. अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम्** (३४५)

यद्यपि न्यायरत्नमालायामेतत्सूत्रपाठोऽन्यथेति विमर्शे दर्शितमस्माभिः । प्रकरणपञ्चिकायामपि संबन्धिपदघटितमेव सूत्रमुदाहृतम् । सबन्धिपदस्य 'संयोगि समवायी'त्यर्थपरत्वञ्च सूचितम्—अथापि सर्वत्रोपलब्धस्य, 'अस्येदं कार्य' मित्यादेः संयोगिसमवायिपदघटितस्य पाठस्यास्य भाष्ये, किरणावल्यामप्यभिमतत्वप्रतीतेर्नान्यथाकरणमत्राद्रियते । अत्र भाष्यम्—"शास्त्रे कार्यादिग्रहणं निदर्शनार्थं कृतम् ; नावधारणार्थम् । कस्मात् ? व्यतिरेकदर्शनात् । तद् यथा—अध्वर्युः ओं

---

उप. सू. १. अस्य-साधनस्येदं-साध्यम् ; अस्य-साध्यस्य इदं-साधनमिति वा ।

श्रावयन् व्यवहितस्य होतुर्लिङ्गम् । चन्द्रोदयः समुद्रवृद्धेः कुमुदविकासस्य च। शरदि जलप्रसादोऽगस्त्योदयस्येत्येवमादि। तत् सर्वम्, अस्येदमिति संबन्धमात्रवचनात् सिद्धम्"इति। ओंश्रावयन्निति; ओंश्रावयेति ब्रुवन्नित्यर्थः। "सूत्रे इदमित्यस्य कार्यमित्यादिना सह नान्वयः" इति कन्दल्यामुक्तम्। तथाच अस्येदमिति ज्ञानं लैङ्गिकमित्यन्वयः। 'लिङ्गदर्शनात् संजायमानं लैङ्गिकम्' इति भाष्यम्। अत्र दर्शनपदप्रयोगात् लिङ्गमेव करणमित्यत्र न निर्भर इति ज्ञायते। 'अस्येदम्' इत्यस्य अस्य साधनस्येदं साध्यम् इति, यद्वा अस्य साध्यस्य इदं साधनमित्यर्थः। षष्ठ्यर्थः संबन्धश्च व्याप्यव्यापकभावः। तथाच, प्रथमतो लिङ्गदर्शनम्। पश्चाद् व्याप्यव्यापकभावविशिष्टहेतुसाध्यज्ञानम्। इदमेव च लैङ्गिकम्। एतस्माज्जायमाना अनुमितिर्वा लैङ्गिकम्। अत्र अस्येदमिति सर्वनामशब्दद्वयेन किं गृह्यत इत्यत्र किञ्चिदुदाहृत्य ज्ञापयति कार्यमित्यादिना। कार्यं कारणमिति पदद्वयेन कार्यकारणभावसंबन्धशालिवस्तुविवक्षा तात्पर्यटीकानुसारिकिरणावलीसंमता। अतश्च कार्यकारणयोर्मध्ये किमप्येकं षष्ठ्यन्तेन, अन्यत् प्रथमान्तेन च यथार्हं गृह्यते। एवं संयोग्यपि पदद्वयेन, हेतुसाध्ययोः संयोगस्य संबन्धत्वे। एवं विरोध्यादिकमपि। धूमेनाग्न्यनुमाने, भेरीदण्डसंयोगेन बधिरेण शब्दानुमाने च कार्यकारणभावापन्नं लिङ्गम्। शरीरेण त्वगिन्द्रियानुमाने संयोगि। विस्फूर्जता नागेन नकुलानुमाने विरोधि। तोयगतोष्णस्पर्शेन तेजोनुमाने, स्पर्शविशेषेण वाय्वनुमाने च समवायीति। संयोग्यादीनि एतान्युदाहरणानि केवलम्। अत एव तृतीयाध्यायोक्तमेकार्थसमवाय्यत्र नोक्तम्। चशब्देनान्यदपि विवक्ष्यते। तथाच

अस्येदमिति ज्ञानं लैङ्गिकमित्येव निष्कर्षः। नन्वग्नेर्धूमः, त्वचः शरीरम्' रूपस्य रस इति कुत्राप्यप्रयोगात्, अग्नेर्धूमो हेतुरिति हेत्वादिपदेन साकमेव प्रयोगात् कथं षष्ठ्या साध्यहेतुसंबन्धविवक्षा, व्याप्यव्यापकभावविवक्षा चेति चेत्—षष्ठ्याः संबन्धसामान्यार्थकतया एवं विवक्षया प्रयोगे बाधकाभावात् । यद्वा अस्येति हेतुमत इत्यर्थः । इदमिति साध्यम् । धूमवतो वह्निः, रसवतो रूपम्, शरीरत्ववतस्त्वक् इत्येवमर्थविवक्षा । उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासत इति नियमात् धूमादिव्यापकत्वस्य वह्न्यादौ लाभात् इदं ज्ञानं व्याप्यव्यापकभावज्ञानरूपं सिद्ध्यति ॥ १ ॥

कार्यकारणभावसंबन्धस्थल एवानुमानं बौद्धैरुक्तम्—यथा वह्निमान् धूमादिति । यद्यपि अयं वृक्षः शिंशपात्वादिति वृक्षतादात्म्यं शिंशपाया इति तैस्तादात्म्येऽप्यनुमानमुक्तम्—अथापि तत्र शिंशपायाः वृक्षसामग्रीकार्यत्वरूपकार्यकारणसंबन्ध एव नियामकः । तथा च कथं संयोगिविरोध्यादिकमन्यादृशं बहूच्यत इति न शङ्कितव्यमित्याशयेन विशदयति-—

२. अस्येदं कार्यकारणसंबन्धश्चावयवाद् भवति (३४६)

अस्येदम् अस्येदमित्युक्तसंबन्धविशेष एव ग्राह्य इत्यर्थः । कार्यकारणभावसंबन्धस्तु न निषिध्यते । सोऽपि अवयवात् एकदेशात् उदाहरणविशेषाद् भवति । ल्यब्लोपे पञ्चमी । एकदेशं प्राप्य स संबन्धो वर्तते । न तु सर्वस्थलानुगतः । कार्यकारणभावस्य बिय-

उप. सू. २. अस्येदमित्येवानुगतम् । कार्यकारणभावादि तु काचित्कम् ।'

तपूर्वापरभावरूपत्वात् तद्घटकनियतत्वप्रदर्शनार्थमेव तत्र तदुक्तिः। अतो व्याप्यव्यापकभावः संबन्ध इति। अन्यथा अनुभवसिद्धनानोदाहरणापलापापत्तेः। व्याप्यव्यापकभावसिद्धिश्चानुकूलतर्कादिति न किञ्चिदवद्यम् ॥ २ ॥

अकार्यकारणस्थलेऽप्यवश्यमनुमानप्रवृत्तिर्बौद्धैः संमन्तव्या। अन्यथा कथं शब्दस्य तन्मतेऽनुमानेऽन्तर्भाव इति दर्शयितुम्, प्रत्यक्षानुमानातिरिक्तं प्रमाणं शब्द इति सांख्यवेदान्तिमतं निरसितुञ्चाह—

**३. एतेन शाब्दं व्याख्यातम् (३४७)**

एतेन कार्यकारणातिरिक्तस्याप्यनुमानत्वकथनेन, शब्दार्थयोः कार्यकारणभावाभावेऽपि शाब्दं शब्दजन्यबोधात्मकं ज्ञानमपि लैङ्गिकत्वेन व्याख्यातम्। तथाहि—एकैकस्यापि पदस्य तत्तत्रार्थे शक्तिरस्ति। व्यवहारादिना व्युत्पन्नस्य तादृशशक्तिस्मरणबलादर्थ उपस्थितो भवतीत्येतावत् सर्वनिर्विवादम्। शक्तिश्च सा केति, "सामयिकः शब्दादर्थप्रत्ययः" इत्यत्र ज्ञापितमेव। अथ पदार्थस्मरणानन्तरं तेषां मिथः संसर्गावगाहि यद् ज्ञानं जायते, तदिदं किमनुमितिविलक्षणम् उत तद्रूपमेवेति विवादः। तत्रातिरिक्तकल्पने मानाभावादनुमितिरित्येव ब्रूमः। व्यवहाराद् व्युत्पत्तिग्रहकाले गामानयेति पदकदम्बस्मारितानां मिथस्संसर्गवत्त्वं दृष्टम्। तथा गामानयेति पदकदम्बस्य गवानयनकर्तव्यतारूपार्थज्ञानपूर्वकत्वञ्चानुभूतम्। अतो वाक्यान्तरेषु श्रूयमाणेषु अनुमानं द्वेधा प्रवर्तते। एते पदार्थाः मिथः संसर्गवन्तः आकाङ्क्षादिमत्पदस्मारितार्थत्वात् गामानयेति पदस्मारितवदिति, एतानि पदानि

उप. सू. ३. शाब्दं लैङ्गिकेऽन्तर्भावयितुं सूत्रम्।

स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात् गामानयेति पदकदम्बवदिति च। अत्र प्रथमानुमाने संसर्गः साक्षादेव विधेयः, द्वितीयानुमाने विधेयकोटिप्रविष्ट इति सर्वथा पदार्थमिथस्संसर्गस्यानुमितत्वात् शब्दोऽनुमानमेव। घटः कर्मत्वम्, अग्निना सिञ्चति, गिरिर्भुक्तमग्निमान् देवदत्तेन इति निराकाङ्क्ष—अयोग्य—असंनिहितपदकदम्बे व्यभिचारवारणाय आकाङ्क्षादिमदिति हेतुविशेषणम्। न चात्र गिरिरग्निमानिति ज्ञानसत्त्वात् साध्यमस्तीति न व्यभिचार इति वाच्यम्—तथापि नीलो घटो द्रव्यं पट इत्यत्र नीलपदपटपदयोः साध्याभावेन हेतुसत्त्वेन व्यभिचारादासत्तिनिवेशात्॥ ३॥

नन्वनुमाने हेत्वपदेशलिङ्गशब्दानां प्रयोगो दृष्टः। अत्रापि शास्त्रे प्राक्, 'अन्यदेव हेतुरित्यनपदेशः', 'प्रसिद्धिपूर्वकत्वादपदेशस्य', 'लिङ्गाच्चानित्यः शब्दः', 'लैङ्गिकम्' इति प्रयुक्तम्। शब्दस्तु न तैः शब्दैर्विशेष्यते। किन्तु 'शब्दः प्रमाणम्,' 'शब्दो बोधकरणम्' इति प्रमाणादिशब्देनैव। तत् कथमयमनुमानमित्यत्राह—

**४. हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम्** (३४८)

हेत्वादिपदवत् प्रमाणादिपदमपि विवक्षायामनुमानपरं भवितुमर्हतीति सर्वमिदमनुमानपर्याय इति भावः। हेतुपदं हि कारकहेतुज्ञापकहेतुसाधारणम्। ज्ञापहेतुश्च प्रत्यक्षादिरपि। अथापि लिङ्गपरतया प्रयोगो विवक्षावशात् परिभाषितः। अपदेशशब्दो व्याजवाची; निर्देशवाची च, हेतुवचनमपदेश इति। प्रकृते उच्यमानहेतुपरो विवक्षितः। लिङ्गपदं चिह्न-

उप. सू. ४. शब्दस्यापदेशरूपस्य कथं लिङ्गत्वमित्यत्राह।

वाचि अनुमापकपरं प्रयुज्यते । यथैवम्, तथा प्रमाणपदं कारकपदञ्च लिङ्गतदितरसामान्यवाच्यपि कदाचिद्विशेषपरतया प्रयोगमर्हति। शब्दो लिङ्गमिति कुतो न व्यवहार इति चेत्—अपरिशीलनादिति॥ ४ ॥

ननु शब्दार्थयोः न कार्यकारणभावरूपसंबन्धः, तथा संयोगि-विरोधीत्याद्युदाहृतसंबन्धा अपि न सन्ति । अत एव एवंभूतसंबन्धा-भावात् व्याप्यव्यापकभावोऽपि न। न च धूमवतो वह्निमत्त्वम्, रसवतो रूपवत्त्वमितिवत् घटवद्भूतलमिति वाक्यश्रवणे अस्य वाक्यस्य घटवद्भूतलमिति कश्चित् प्रत्येति। व्याप्यव्यापकभावे सति हि तथा-ग्रहणेन भाव्यम्। अस्य वाक्यस्य घटवद्भूतलमर्थ इति प्रत्येति, इति चेत्—तावता न व्याप्यव्यापकभावसिद्धिः, वाक्यस्येति षष्ठ्यन्तस्य अर्थ इत्यत्रैवान्वयात्। घटवद्भूतलमेतद्वाक्यप्रतिपाद्यमिति हि तदर्थः। तत् प्रतिपादनमेव तु कया विधयेति संप्रति चिन्त्यते। यत्तु एते पदार्था मिथः संसर्गवन्त इत्यनुमानम्—तावता पदार्थत्वसंसर्गवत्त्वयो-र्व्याप्यव्यापकभावेऽपि, शब्दार्थयोर्न स सिद्ध्यतीति शब्दः कथमनुमानम्? यच्च एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणीति, ततोऽपि ज्ञानपूर्व-कत्वेन सहैव व्याप्यव्यापकभावावगमः, न वाक्यार्थेन सह। अत एव च शब्दोऽर्थे हेतुरपदेशोलिङ्गमिति व्यवहाराभाव इत्यत्राऽऽह—

५. **अस्येदमिति बुद्ध्यपेक्षितत्वात् (३४९)**

यथा धूमवतो वह्निमत्त्वमिति बुद्ध्या धूमज्ञानस्यापेक्षितत्वम्, तथा अस्य शब्दस्येदमिति शब्दार्थसंबन्धबुद्ध्या शब्दज्ञानस्य कारण-तयाऽपेक्षितत्वात् (शब्दज्ञानादपि अस्येदमिति बुद्धेर्जायमानत्वादिति

---

उप. सू. ५. प्रमाणान्तराणामपि लैङ्गिकेऽन्तर्भाव इहोच्यते ।

यावत्) शब्दोऽर्थे हेतुरेवेत्यर्थः। अयं भावः—एते पदार्था मिथःसंसर्गवन्त इत्येवं पदार्थपक्षकानुमानस्य विधेयांशस्फुटप्रतिपत्त्यर्थं प्रयोगेऽपि, एतानि पदानि मिथः संसर्गोपलक्षितपदार्थस्मारकाणि आकांक्षादिमत्पदकदम्बत्वादित्येवानुमाने तात्पर्यम्। तत्र पदानां पदार्थमिथस्संसर्गस्य च स्वोपलक्षितपदार्थस्मारकत्वमेव संसर्गः। स एव अस्येदमिति षष्ठ्या बोध्यते। एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणीत्यनुमानतोऽपि पदानां स्वज्ञानपूर्वकत्वसंबन्धेन पदार्थसंसर्गवत्त्वमेव ज्ञाप्यते इति स्वज्ञानपूर्वकत्वमपि षष्ठीविवक्षितसंबन्धः धूमवतो वह्निरित्यत्र संयोगवत्। व्याप्यव्यापकभावश्च तत्रेवात्रापि लभ्यत एव। घटवद्भूतलमिति वाक्यश्रवणे अस्य वाक्यस्य घटवद्भूतलवत्त्वमिति व्यवहारो न दृश्यते इति चेत्—उक्तस्य ज्ञानपूर्वकत्वादिसंबन्धस्य परम्परासंबन्धत्वात् आन्तरज्ञानादिघटितत्वाच्च सुखग्रहणाभावात् अपरीक्षकाणां तादृशव्यवहाराभावः। तावता न वस्तुतत्त्वमन्यथा भवति। एतेन, "अस्येदमितिषष्ठीविशिष्टस्य वाक्यस्यार्थोऽभ्यनुज्ञातः। प्राप्तिलक्षणस्तु संबन्धः प्रतिषिद्धः" इति शब्दस्यातिरिक्तप्रमाणत्वपरं न्यायभाष्यमपि समाहितं भाव्यम्॥

एवम् एते पदार्था मिथः संसर्गवन्तः, एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणीत्याद्यनुमानार्थस्य अस्येदमिति बुध्या षष्ठ्यर्थसंबन्धादिवैशद्यायापेक्षितत्वात् तथानुमानप्रयोग इत्यपि सूत्रार्थः। अस्येदमिति बुद्धिरपेक्षिता कारणत्वेन येन शाब्देनेति विग्रहे तु आहिताग्निगणपाठात् साधुत्वं ग्राह्यम्। अस्येदमिति बुद्धेरपेक्षा बुध्यपेक्षा। सा

अस्य सञ्ज्ञातेति बुद्ध्यपेक्षितमिति तारकादित्वेन इतच् इत्यप्याहुः। बुद्ध्यपेक्षीति पृथक्पदं वा। शब्दपरोक्षज्ञानम् अस्येदमिति बुध्यपेक्षि। कुतः? तत्त्वात् तस्य भावस्तत्त्वम् शब्दपरोक्षज्ञानत्वात् शब्दजन्यपदार्थस्मरणवत्, शब्दलिङ्गकवीणावनिताद्यनुमानवच्च। पदजन्यपदार्थस्मरणं हि अस्येदमिति शक्तिज्ञानसापेक्षमिति।

ननु अनुमानस्थले धूमवान् पर्वतोऽग्निमानिति ज्ञानात् पर्वतविषयप्रवृत्त्यादिकं भवतीति तत्र तथाज्ञानमपेक्षितम्। चैत्रः पचतीत्यादिवाक्यात्तु पाकानुकूलकृतिमांश्चैत्र इत्येतावदर्थज्ञानमेवापेक्षितम्। न तु इदं वाक्यमीदृशार्थवदिति ज्ञानमिति किमिति शब्दस्यानुमानेऽन्तर्भाव इति चेत्—यथा पदश्रवणात् शक्तिरूपसंबन्धस्मरणे पदार्थस्मृतिमात्रम्, तथा प्रकृतवाक्यादेतद्वाक्यमीदृशार्थवदिति आनुमानिकेज्ञाने जाते अर्थमात्रविषयकं मानसं किमपि ज्ञानं जायत इति न तदर्थं प्रमाणान्तरकल्पनेति। यथा हि घटवद्भूतलमिति वाक्यं सर्वमतेऽपि घटवदभिन्नं भूतलमित्येव ज्ञानजनकम्; न तु घटप्रकारकभूतलविशेष्यकज्ञानजनकम्—तथापि प्रत्यक्षतुल्याकारं प्रवृत्त्युपयोगि तादृशं ज्ञानं तु पश्चान्मानसमेव—तथा प्रकृतेपीति।

ननु पदविशेष्यकस्य पदार्थविशेष्यकस्य वा पूर्वोक्तानुमानस्य साधुत्वे शब्दस्यानुमानेऽन्तर्भावः स्यादपि। तदेव न, अनाप्तवाक्येनानैकान्त्यात्। अस्ति हि विप्रलम्भार्थं प्रयुक्ते असंबद्धार्थे नद्यास्तीरे पञ्च फलानि सन्तीत्यादिवाक्ये हेतुः। न च तत्र साध्यम्; विप्रलम्भकस्य तत्र संसर्गज्ञानाभावादिति चेत्-न-हेतुकोटौ आप्तो-

क्तत्वविशेषणस्यापि प्रवेशात् । ननु प्रकृतविषयेऽनाप्तस्याप्यन्यविषये आप्तत्वमस्तीति तत्रैव पुनर्व्यभिचारः । अत्र विषयेऽयमाप्त इति विशेषरूपेण तु आप्तत्वस्य हेतुघटकत्वं न भवति, प्रकृतवाक्यार्थरूपविषयस्य पूर्वमज्ञातत्वात् अत्रेति निर्देशायोगादिति चेत्—न—तत्रतत्र शब्दे प्रकरणादिना तात्पर्यानुमानवत्, यदर्थं बोधयितुं प्रवृत्तः तत्रायं यथार्थज्ञानवान् इति सामान्यतो वक्तरि स्वरेङ्गितादिना आप्तत्वानुमानसंभवात् । न च अनाप्तोक्तवाक्ये पदार्थानां योग्यत्वमेव नास्तीति किमाप्तोक्तत्वविशेषणेनेति वाच्यम्—नद्यास्तीरे पञ्च फलानि सन्तीत्यत्र वह्निना सिञ्चतीत्यत्रेव अयोग्यत्वाभावात् । मिथः संसर्गयोग्यानामेव तेषां मध्ये क्वचित् सामग्र्यभावादापतितस्तादात्विकोऽसंसर्ग इति ।

नन्वाप्तोक्तत्वनिवेशेऽपि, विमलं जलं नद्याः, कच्छे महिषश्चरतीत्यत्र नदीकच्छयोरन्वयाविवक्षायां तत्रापि हेतुरस्ति, तयोर्मिथस्संसंसर्गज्ञानपूर्वकत्वरूपसाध्यं नास्तीति व्यभिचार इति चेन्न-हेतुघटकपदे मिथःसंसर्गपरत्वरूपविशेषणस्यापि विवक्षणात् । नदीकच्छपदयोश्च वक्तुर्मिथस्संसर्गतात्पर्याभावात् । नन्वेवं सति आप्तोक्तसंसर्गपरपदस्मारितत्वादित्येव हेतुरस्तु । आप्तत्वं हि बुबोधयिषितार्थविषयकयथार्थज्ञानवत्त्वम् । एवञ्चाप्तोक्तत्वं यत्र, तत्र संसर्गज्ञानपूर्वकत्वरूपसाध्यस्य नियमेन सत्त्वान्न व्यभिचार इति हेतुघटकमाकाङ्क्षादिमत्त्वं व्यर्थमिति चेत्-उच्यते । घटकर्मकानयनानुकूलकृतिरूपार्थविषयकयथार्थज्ञानवतैव विशेषभाषापरिचयाभावेन घटः कर्मत्वमानयनं कृतिरिति प्रयोगे तत्र हेतुसाध्यसत्त्वेनानुमानस्य प्रमाणत्वे अनुमानरूपशब्दस्यापि प्रमाणत्वा-

पत्तिः । न हि घटः कर्मत्वमित्यादिशब्दः प्रमाणमिति कश्चित् स्वीकुर्यात् । अतः संसर्गवदर्थोपस्थापक-आकाङ्क्षादिशालि-पदकदम्बत्वमेव प्रमाणताप्रयोजकमिति तदर्थं तन्निवेशः । एवमासत्तेरपि ; गिरिर्भुक्त मग्निमान् देवदत्तेनेति व्यवहितप्रयोगे शब्दप्रामाण्ये विवादात् । योग्यत्वं पुनर्मा भूत् । अयोग्यस्थले वक्तुर्यथार्थज्ञानवत्त्वाभावात तत एव तद्वारणात् । न च तथापि व्यभिचारावारकतया कथं हेतुघटकदलरूपस्य तस्य सार्थक्यमिति शङ्क्यम् ; अत एव व्यभिचारवारकतया सार्थक्यसंपादनार्थं साध्यं आकाङ्क्षादिमत्पदस्मारितार्थसंसर्गज्ञानपूर्वकत्वमित्यङ्गीकारात्। घटः कर्मत्वमित्यादौ च तादृशसाध्याभावात् । अतोऽनुमानस्य सुवचत्वात् शब्दोऽनुमानेऽन्तर्भवति । एवमनुमानत्वेऽपि तथा ज्ञानाभावो झटित्यात् ; तृषितस्य तोयगतपिपासोपशमनशक्तिज्ञानवत् ।

लैङ्गिकेऽन्तर्भवेत् शाब्दमिति वैशेषिकं मतम् ।
इत्थं विशोध्य रुचिरं व्युदपादि यथायथम् ॥

अवश्यमीदृशः पन्थाः शब्दप्रमाणान्तरवादिभिरप्यन्यत्रानुसर्तव्यः । अन्यथा वाचिकव्यापारात्मनः शब्दस्येव चेष्टाया अपि मानान्तरत्वापत्तिः । दृश्यते हि हस्तसंज्ञादिना आह्वानाद्यवगतिः । ननु तत्र चेष्टया शब्दानुमानम् ; ततोऽर्थज्ञानमिति चेत्-एडमूकस्य का गतिः, शब्दज्ञानाभावात् । ननु तत्र हस्तसंज्ञया, ‘अत्र त्वया समागन्तव्यम्’ इत्यर्थो विशिष्टरूपेणैवावगम्यते । इह पुनर्विशकलितार्थानामेव शक्त्या स्मारितत्वात् मिथः संसर्गग्रहे क्लेशोऽधिक इति चेत्—अस्तु तावत् ।

अथापि चेष्टास्थले विशिष्टार्थज्ञानमेव किंप्रमाणकम् । नन्वेडमूकोऽपि लिपीः शिक्षते । तत्र यथाऽस्मभ्यं लिपिशब्दयोः संकेते पूर्वैः कृते लिपेः शब्दस्मरणम्, तद्वत् तं प्रति लिपिं विलिख्य अर्थमपि प्रदर्श्य संकेते कृते लिपेरर्थस्मरणमेव भवति, संकेतस्य शिक्षकाभिप्रायस्य ज्ञानात् । तथा हस्तसंज्ञयाऽन्यस्याह्वाने कृते तस्मिंश्च समीपे आगते एडमूको व्युत्पद्यते । तेन तं प्रति हस्तसंज्ञायां कृतायाम्, इयं चेष्टा मदाह्वानाभिप्राया ईदृशचेष्टात्वात् पूर्वचेष्टावदित्यनुमिनोतीति चेत्—आगतोऽसि मदीयं पन्थानम् । तथा च यथा तत्राभिप्रायानुमानम्, तथा शब्दस्थलेऽप्यस्तु । एवं यत्र चेष्टया, 'पिता ते सुखमास्ते' इति एडमूकं प्रति ज्ञाप्यते, तदा स स्वस्य, तथा पितुः सुखस्थितेश्च सूचिकाः प्रत्येकचेष्टाः दृष्ट्वा तेषामर्थानां संबन्धं परिकल्प्य तमेव विशिष्टार्थं प्रतिपद्यते । तत्रानुमानमन्तरेण का गतिः ? सा च चेष्टा यदि कदाचिदनाप्तेन कृता, तत्र सूचितार्थसंसर्गाभावे व्यभिचारात् कथमनुमानम् । अतः पूर्वोक्तैव सरणिरिति ।

अन्यथा वाचिकव्यापारवत् कायिकव्यापारोऽपि पृथङ्मानं स्यात् । आध्यत्मिकव्यापारत्वेन वा तदुभयसंग्रहेण प्रमाणान्तरता वक्तव्या स्यात् । अतो न शब्दः पृथङ्मानम् । नूनमेतदाशयेनैव भाष्ये शब्दानन्तरं चेष्टोल्लेखः, 'साऽप्यनुमानेऽन्तर्भवती'ति । एवं शब्दस्यानुमानत्वे अस्येदमिति बुध्यपेक्षितत्वं हेतूकुर्वता सूत्रकृता तादृशबुध्यपेक्षास्थले सर्वत्र अनुमानान्तर्भावः सूचितो भवतीति सिद्ध्यति ऐतिह्यार्थापत्तिसंभवाभावानामप्यनुमानेऽन्तर्भावः । परन्तु प्रमाणत्रित्वेदम्परसांख्य-

वेदान्तिसंमतस्य शब्दस्यैव निरासे तेषां निरासो दण्डापूपायित इति नात्र तद्विस्तरः सूत्रकृतः ॥ ५ ॥

**६. आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः (३५०)**

संयोगे विशेषः अनुभावकसामग्रीराहित्यम् । अनुभवसामग्र्यां सत्यां तु संस्काराधीनं ज्ञानमपि न स्मृतिः । अत एव सोऽयं देवदत्त इति प्रत्यभिज्ञानं न स्मृतिः, संस्कारमात्राजन्यत्वात् । एवं विशेषपदेन संस्कारोद्बोधकप्रणिधानादिवैशिष्ट्यमपि विवक्षितम् । प्रणिधानादीनि च न्यायसूत्रे (३-२-४४) प्रोक्तानि । संस्कारः । उपस्कारिद्रव्यैः शाकादेरिव पूर्वानुभवैरात्मा भावितो भवति । सा भावना संस्कारः स्मृत्यन्यथानुपपत्तिकल्पितोऽतीन्द्रियः ॥ ६ ॥

स्मृतिवत् संस्कारापेक्षं स्वप्नं लक्षयति—

**७. तथा स्वप्नः (३५१)**

तथेति आत्ममनसोः संयोगविशेषात् संस्काराच्चेत्यर्थः । अत्र संयोगस्य विशेषः स्वापरूपत्वम् । उपरतेन्द्रियग्रामस्य प्रलीनेन मनसा संयोग इति यावत् । इन्द्रियाणामायस्ततया बहिरप्रवृत्त्या उपरतेन्द्रियग्रामत्वम् । निरिन्द्रिये हृदयान्तःप्रदेशे स्थितत्वं मनसः प्रलीनत्वम् । संस्कारपदमत्र संस्कारपाटवपरम् । न खलु स्वप्नः स्मृतिमात्रम्, अद्राक्षमित्याद्यनुभवविरोधात् । तस्मादसत्स्वेव विषयेषु विषयेन्द्रियसंनिकर्षजन्यतुल्योऽनुभवः संस्कारपाटवाधीनः प्रलीनमनस्कस्य यः, स स्वप्नः । यद्यपि स्वप्ने पदार्थाः यथा यथा मिथः संसृष्टाः प्रतीयन्ते, तथा तथा

न बहिस्तेषां संसर्गनियमः, अथापि पदार्थमात्रानुभवाधीनसंस्कारपाटवमेव पौर्वापर्येण स्वविषयकस्वाप्नानुभवमुत्पादयत् पदार्थानां वैशिष्ट्यमपि दोषसाचिव्यात् कल्पयतीति ॥ ७ ॥

स्वप्नमध्ये शब्दश्रवणजनितं शाब्दज्ञानं भवतीति सोऽप्यनुभवः स्वप्न इति वदन्ति । एवमपि तस्य स्वप्नान्तिकेऽन्तर्भावो युज्यते । अविद्यमानशब्दगोचरे श्रवणतुल्ये मानसशब्दप्रत्यक्षे जाते तस्य जायमानत्वात् । वैशेषिकपक्षे चात्र शाब्दमप्यनुमितिरेव । पर्वतप्रत्यक्षस्य स्वप्नत्वेऽपि पर्वतोऽग्निमानित्यनुमितेः पर्वतांशेऽप्यप्रत्यक्षतया स्वप्नान्तिकत्वसंभवात् । तत्र स्वाप्निकसंस्कारपाटवादेर्जागरदशायामिवानपेक्षितत्वात् । भाष्ये, 'स्वप्नान्तिकं स्मृतिः' इत्युक्तत्वात्तु स्वप्न एवानुभवसामान्यमन्तर्भावितं तैः । 'इन्द्रियद्वारेण यत् अनुभवनम्' इति भाष्यात्तु प्रत्यक्षमेव स्वप्न इत्यपि ज्ञायते । ततश्च स्वप्नमध्ये शब्दश्रवणधूमदर्शनादिवशात् यत् लैङ्गिकं ज्ञानम् , यच्च जागरदशानुभूतस्य स्वप्नमध्यानुभूतस्य वा स्मरणम्, सर्वमिदं परोक्षं प्रत्यक्षाकारताविरहात् न स्वप्नः, किन्तु स्वप्नान्तिकमिति साम्प्रतम् । तदेतत् ज्ञानमाह—

### ८. स्वप्नान्तिकम् (३५२)

स्वप्नस्यान्ते अवसाने भवतीति स्वप्नान्तिकमिति कन्दली । स्वप्नस्यान्तोऽवयवविशेषो विषयतयाऽस्यास्तीति स्वप्नान्तिकमिति किरणावली । स्वप्नः अन्तिके समीपे पूर्वं पश्चाच्च यस्य तत्, यद्वा स्वप्नस्यान्तिकं

उप. सू. ८. स्वप्नानुभूतार्थविषयकस्मृतिः स्वप्नमध्ये भवन्ती स्वप्नान्तिकम्। स्वप्नमध्ये प्रमाभूतं ज्ञानं स्वप्नान्तिकमिति केचित् ।

संनिकृष्टं प्रलीनमनस्कदशाभावित्वेन स्वप्नतुल्यम्—न तु स्वप्न एव—तत् स्वप्नान्तिकमिति सुवचम्। एवञ्चेदं पूर्वोक्तस्मृत्यादावन्तर्भूतमिति भावः। "अतीतस्य ज्ञानप्रबन्धस्य प्रत्यवेक्षणात् स्मृतिरेव स्वप्नान्तिकम्" इति भाष्यम्, स्वप्नान्तिकं क्लृप्तविभागान्तर्भूतत्वान्न पृथग्विभजनीयमिति तावन्मात्रपरम्, न तु परोक्षानुभवस्य स्वप्नान्तिकत्ववारकमिति ध्येयम् ॥ ८ ॥

उक्तस्य स्वप्नस्य क्वचित् कारणान्तरमप्यस्ति, संस्कारपाटवाभावेऽपि दर्शनादित्याशयेनाह—

## ९. धर्माच्च (३५३)

स्वप्नः त्रिधा जायते, संस्कारपाटवात्, अदृष्टवशात्, धातुदोषाच्च। आदिमः कामिनः क्रुद्धस्य वा कामिनीमरातिं वा चिन्तयत एव स्वप्नः। गजारोहणच्छत्रलाभादिकं शुभावेदकम्, अशुभावेदकञ्च तैलाभ्यञ्जनखरोष्ट्रारोहणादिकमनुभूयते; अयं द्वितीयः। वातवशादाकाशगमनादिकम्, पित्तवशादग्निप्रवेशकनकपर्वतदर्शनादिकम्, श्लेष्मवशात् सरित्समुद्रतरणादिकञ्चानुभवति; स तृतीयः। त्रयाणां कारणानामपि मेलनेऽपि क्वचित् कस्यचित् प्राधान्यं मन्तव्यम्। अत्र धर्मातिरिक्तस्य चकारेण ग्रहणम्। एवं स्वप्नान्तिकेऽपि यथार्हं द्रष्टव्यम् ॥ ९ ॥

उक्तं सर्वं ज्ञानं पुनर्विद्याऽविद्यारूपेण द्वेधा विभज्य दर्शयति—

## १०. इन्द्रियदोषात् संस्कारदोषाच्चाविद्या (३५४)

इन्द्रियस्य दोषः वातपित्तकफोपहतत्वम्, द्विचन्द्रादिज्ञानोपयोग्यंगुल्यवष्टम्भादि च। संस्कारदोषश्च संस्कारे मोषः—अनुभूतसर्वा-

शविषयकस्मरणजननाक्षमत्वम् । असमादुभयस्मादपि कारणात् मिलिता-दविद्या विपरीतज्ञानं जायते । शुक्तौ, 'इदं रजतम्' इति ज्ञाने हि इन्द्रियदोषवत् संस्कारदोषोऽप्यपेक्षितः ; यथा शुक्तिर्यथावन्न दृश्यत इति विशेषदर्शनाभावः कारणम्, तथा रजतं पूर्वानुभूतं यथावन्न स्मर्यत इति तत्रापि दोषोऽस्ति । स्मृतिर्हि लोके यत्र यद् यथाऽनुभूतम्, तत्र तथा तद्विषयिणी । न च आपणे रजतं यादृशाकारमनुभूतं तादृशाकारं तत्रत्यञ्च तदिदानीं स्मर्यते । तथासति शुक्तौ तथाभ्रमो न स्यात् । अतोऽत्र स्मृतिप्रमोषोपयोगी संस्कारदोषोऽपि कारणमिति । चकारादविद्याजन्याऽप्यविद्याऽस्तीति ज्ञाप्यते । भवति हि बाष्पत्वेन धूमं पश्यतः अग्निमानिति भ्रमात्मकानुमितिः । तथाच प्रत्यक्षलैङ्गिकस्मृतिस्वप्नोक्तेषु चतुर्विधेषु किञ्चित् विद्यारूपम्, अन्यत् अविद्यारूपम् । सा चाविद्या साक्षात् परम्परया वा इन्द्रियादिदोषाधीनेति । न च स्वप्नः सर्वोऽप्यविद्यैवेति मन्तव्यम्—तत्रापि अहमिह शय्यायां संविष्टोऽस्मि, अहं पश्यामि, अहं सुखीत्यादिवास्तवज्ञानसद्भावात् । स्वप्नमध्यगतानां तेषामपि स्वप्नत्वात् ॥ १० ॥

नन्विन्द्रियदोषाद्यधीनरजतादिभ्रमेऽपि इदन्त्वाद्यंशे यथार्थत्वसत्त्वात् तदपि ज्ञानं विद्यैवेति अविद्यात्वं कथम् । विद्याभिन्ना ह्यविद्या इत्यत्राह—

## ११. तद् दुष्टज्ञानम् (३५५)

दोषाधीनं ज्ञानं दुष्टम् । ज्ञानस्य दोषश्चान्यथाग्राहित्वम्, तदभाववति तत्प्रकारकत्वम् । कचिदंशे यथार्थमपि ज्ञानं यदि यत्र

क्वाप्यन्यथाग्राहि, तर्हि अविद्यैव। एवञ्च संशयस्यापि तदभाववति तत्प्रकारकत्वादविद्यात्वमक्षतम्। इयञ्चाविद्या भाष्ये संशयविपर्ययस्वप्नान- ध्यवसायभेदेन चतुर्धा विभक्ता। तत्र संशयः प्रागेव द्वितीयाध्याये व्युत्पादितः। विपर्ययश्चोक्तप्रत्यक्षाद्यन्तर्भूतः। अनध्यवसायश्च प्रागेव व्याख्याने उक्तः। परन्तु न तत्र सूत्रं स्पष्टप्रमाणम्॥ ११॥

विद्येत्यनेन यथार्थज्ञानत्वरूपलक्षणविवक्षायां भ्रमेऽपि किञ्चिदंशे याथार्थ्यसत्त्वादतिव्याप्तिः। निर्विकल्पकज्ञाने तद्वति तत्प्रकारकत्वरूप- याथार्थ्याभावादव्याप्तिश्च। अतस्तल्लक्षणमप्याह—

## १२. अदुष्टं विद्या (३५८)

तदभाववति तत्प्रकारकज्ञानभिन्नं ज्ञानं विद्येत्यर्थः। स एव हि ज्ञानदोषः प्रागुक्तः। तथाच निर्विकल्पकेऽपि लक्षणं सुस्थम्। एवमविद्यामुखेन विद्याया लक्षणं भवतीत्याशयेनैव सूत्रे विद्यां पूर्वं पश्चादविद्यां चानु- क्त्वा व्युत्क्रमादरणम्। इयञ्च प्रत्यक्षलैङ्गिकस्मृत्यार्षभेदाच्चतुर्धा भाष्ये विभक्ता॥ १२॥

किञ्चित्तु ज्ञानं पूर्वोक्तप्रत्यक्षादिवत् विद्याऽविद्योभयरूपेण विभागं न भजति। किंतु विद्यैव, विशिष्टकारणजन्यत्वात्। तद् दर्शयति—

## १३. आर्षं सिद्धदर्शनञ्च धर्मेभ्यः (३५७)

आर्षं ऋषीणां प्रातिभं ज्ञानम्। प्रतिभैव प्रातिभम्। इदञ्च परोक्षम्। तथाच कन्दली, "यदि धर्मादिदर्शनमिन्द्रियजम्, तदा प्रत्यक्षम्। अथेन्द्रियानपेक्षम्, तदा आर्षम्" इति। अतो योगिप्रत्यक्षेऽनन्तर्भूतं परोक्षं विशिष्टज्ञानमार्षमुच्यते। इदञ्च धर्मादि- ष्वतीन्द्रियेषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेष्वपि धर्मसामर्थ्याद् भवति।

यद्यपि कदाचिदिदं लौकिकानामपि भवति, यथा कन्यका ब्रवीति—श्वो मे भ्राता आगन्तेति हृदयं मे कथयतीति अथापि ऋषीणामेवेत प्रस्तारेणेति आर्षमित्युच्यते। योगजधर्मोत्कर्षे योगजं ज्ञानं प्रत्यक्षम्। तपोधीनं तु तद्विलक्षणमार्षमित्यपि ग्राह्यम्। इदं सर्वं यथार्थम् ॥ सिद्धदर्शनं नाम असंस्कृतेन्द्रियैर्द्रष्टुमशक्येषु सूक्ष्मव्यवहितविप्रकृष्टेषु अर्थेषु उपायान्तरसाहाय्यात् प्रत्यक्षम्। तदुक्तं भाष्ये, "प्रयत्नपूर्वम् अञ्जनपादलेपखड्गगुलिकादितः सिद्धानां प्रत्यक्षम्" इति। आर्षवत् नेदं पृथग्भूतम्, किन्तु प्रत्यक्षान्तर्भूतमेव। अत्र अविद्यात्वं न भवतीति ज्ञापनार्थं पुनरत्रैतत्कीर्तनमिति ज्ञापयितुं सैद्धमित्यनुक्त्वा सिद्धदर्शन मित्युक्तम्। ननु प्रयत्नपूर्वकं क्रियान्तरेक्षमाणानां प्राणिनां धर्माधर्म विपाकविज्ञानं सिद्धगतमस्ति। तत् कुत्रान्तर्भूतमिति चेत्- तदपि ग्रहनक्षत्रसञ्चारादिनिमित्तानुमितमनुमानमेव। यदि पुनरप्रयत्नपूर्वकं किञ्चित् स्यात्, तत् प्रत्यक्षे वा अत्रोक्ते आर्षे वाऽन्तर्भूतं भविष्यतीति। निरूपितं सर्वं ज्ञानम् ॥ १३ ॥

लैङ्गिकं प्रोच्य तत्रान्तर्भाव्य शाब्दं तत. स्मृतिम्।
स्वप्नाद्यविद्याद्यार्षादि नवमान्त्ये न्यरूपयत् ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने नवमे द्वितीयमाह्निकम्।
इति नवमोऽध्यायः ॥

---

अथ दशमोऽध्यायः

बुद्धिनिरूपणानन्तरं सुखदुःखेच्छाद्वेषप्रयत्नानां शिष्टानां गुणानां निरूपणं क्रमप्राप्तम्। परन्तु ते कर्मप्रस्ताव एव निरूपितप्रायाः।

'आत्मेन्द्रियमनोर्थसंनिकर्षात् सुखदुःखे', 'सुखाद्रागः', 'इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः' इत्येवम्। अतो विशिष्य सुखदुःखविषये परं परीक्ष्यांशसद्भावात् तन्मात्रनिरूपणमेवावशिष्टमिति सुखदुःखशोधनविशिष्टः शास्त्रोपसंहारो दशमलक्षणार्थः। एवं शिष्टांशकथनरूपे दशमाध्यायार्थे सुखदुःखशोधनमत्राऽऽह्निके, शास्त्रोपसंहारश्चोत्तरत्रेति विवेकः।

अत्र कश्चिदाशङ्कते—सुखं दुःखमिति गुणद्वयाभिधानमसंगतम्। दुःखस्यैव सर्वत्र जायमानत्वात्। तथा हि क्षुधार्तो लब्धमश्नाति; अशित्वा चाजरणपरिहरणाय औषधं सेवते। ततः पुनः क्षुधा पीड्यते। किमत्र सुखमिति। एवमेव सर्वत्र। यद्यपि बाधनासु हीनमध्यमोत्कृष्टभेदः स्यात्—तथापि न सुखं किञ्चित्। एवञ्च विविधबाधनायोगमात्रेण औपचारिकदुःखत्वमादाय दुःखभावनं वीतरागैर्विवेकिभिः कर्तव्यं मधुविषसंपृक्तान्न इवेति न वक्तव्यम्। किंतु सर्वत्र दुःखातिरिक्तस्य फलस्यालाभात् दुःखमिति मुख्यरीत्यैवेति। तत्राऽऽह—

**१. इष्टानिष्टकारणविशेषाद् विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः (३५८)**

इष्टं स्रगादि। अनिष्टं विषादि। तत्सांनिध्ये सति तदुपलब्धिसहकृतात् तेनेन्द्रियसंनिकर्षात् क्रमेण सुखं दुःखञ्च जायत इति कारणवैलक्षण्यात् कार्यवैलक्षण्यमावश्यकम्। उपलब्धिवत् संनिकर्षस्याप्यन्वयव्यतिरेकाभ्यां कारणत्वम्। अत एव दृष्टस्य स्पर्शार्थं परिष्वङ्गाद्यर्थञ्च प्रवृत्तिः। प्रथमपदेन कारणनिबन्धनं वैलक्षण्यं दर्शितम्; विरोधादिति स्वरूपकृतम्। अनुकूलवेदनीयं हि सुखम्। दुःखं हास्यामीति तद् द्वेष्टि। अतस्तयोः स्वरूपयोर्युगपदेकत्र समावेशायोगरूपाद् विरोधान्नैक्यमिति। चकारेण कार्येऽपि विशेषः समुच्चीयते।

सुखीत्यनुभव-तदनुराग-नयनप्रसादादिकं सुखकार्यम् ; दुःखित्वानुभव-तद्द्वेष-विच्छायत्वादिकं दुःखकार्यमिति । अतः सुखं दुःखादर्थान्तरम् । एवं दुःखमपि सुखादर्थान्तरम् । न पुनः संसृतौ परिश्रमताम् अतिदुःखेऽपि सुखाभिमानदर्शनभ्रमेण सर्वं सुखमेवेति शङ्कनीयमिति । एतदभिप्रायेण मिथः सुखदुःखयोरित्युक्तम् ॥ १ ॥

ननु, 'घटपटादीनां सत्त्वम्, अनुभवः इत्यंशद्वयमस्ति । सत्त्वेऽपि कदाचिदननुभवात् । अनुभूतस्यापि कदाचिद् भ्रान्तावसत्त्वात् । न त्वेवं—सुखं दुःखं वा अस्ति, नानुभूयते ; अनुभूयते, न त्वस्ति इति कश्चिन्मन्यते । अतो ज्ञानमेव सुखं दुःखञ्च' इति वेदान्तिप्रभृतीनां शङ्कायामाह—

**२. संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः (३०९)**

संशयनिर्णययोरन्तरं भेदः संशयत्वनिर्णयत्वरूपः । तदभावः—ज्ञानादन्तरं भेदः अन्यत्वमस्यास्तीति ज्ञानान्तरं ज्ञानभिन्नम्—तत्त्वे हेतुः लिङ्गम् । अन्यद् ज्ञानं ज्ञानान्तरमिति विगृह्य ज्ञानान्तरेत्यस्य संशयनिर्णयान्यज्ञानेत्यर्थस्वीकारे बाधः । "बुद्धयः सुखदुःखे" इति बुद्धयतिरिक्तयोर्द्वयोः सुखादौ अन्यज्ञानस्वरूपमाध्यस्याभावादपसिद्धान्तात् । तथाच सुखदुःखे ज्ञानभिन्ने संशयभिन्नत्वे सति निर्णयभिन्नत्वादित्यनुमानम् । यदि सुखादिकं ज्ञानं स्यात्, संशयादिरूपं स्यात् । तथाच सुखकाले, अहं संदेह्मि, अहं निर्णयामीत्यनुव्यवसायः स्यात् । न च संशयनिर्णयान्तर्भावेऽपि अन्यादृशज्ञानत्वमस्तु । तथाच ज्ञानं त्रिविधम्, संशयो निर्णयः सुखं दुःखञ्चेति इति वाच्यम्—धर्मिभेदस्य सर्वाभिमतत्वे तत्र ज्ञानत्वरूपधर्मान्तरकल्पने गौरवात् ; मानाभावाच्च ।

प्रकारविशेष्यावगाहिनश्च ज्ञानात् तदनवगाहि सुखादिकमतिरिक्तमेव । न च निर्विकल्पकमेव सुखादिकं भवितुमर्हति, अनुभूयमानत्वात् । निर्विकल्पकं ह्यतीन्द्रियम् । चकारः सविषयकत्वाभावस्य संदेह्मीत्याद्यनुव्यवसायविषयत्वाभावस्य च समुच्चयार्थः ॥ २ ॥

अथ प्रसक्तज्ञानातिरिक्तत्वस्थापनेऽप्युपयुक्तः सुखदुःखयोः कारणाधिकरणविचारः प्रस्तूयते । तत्र पूर्वमिन्द्रियार्थसंनिकर्षात् सुखदुःखजन्मोक्तया प्रत्यक्षमात्रं कारणमिति सिद्ध्येदिति तद्व्यावृत्त्यर्थमाह---तृतीयादिसूत्राणामपि सुखादौ ज्ञानातिरिक्तत्वस्थापनार्थतया उपस्कारयोजनाप्यन्ते संग्रहीष्यते—

**३. तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् (३६०)**

यथा तत्तदिन्द्रियजन्यप्रत्यक्षात् संनिकर्षसहकृतात् सुखादेर्निष्पत्तिः, तथा लिङ्गकरणकादनुमानादपि । विषयस्यात्यन्तानुकूलश्रवणमनननिदिध्यासनादीनामपि सुखहेतुतायाः प्रामाणिकत्वात् । चोरसर्पदर्शनात् यद् भयम्, तत् खल्वागाम्यनिष्टानुमानजं दुःखमेव । अत्र शाब्दबोधात्मकानुभवस्य लैङ्गिकेऽन्तर्भूतत्वात पृथगनुक्तिः ॥ ३ ॥

स्मृतेरपि हेतुत्वमाह-—

**४. अभूदित्यपि (३६१)**

विरहिस्थविरादीनाम्, प्रागस्माकं तथाऽभूदिति प्राचीनभोगप्रवचनादिस्मरणादपि सुखं भवति । एवं दुःखमपि। तथाच भाष्यम्,

---

उप सू. ३. तयोः संशयनिर्णययोरुत्पत्तिः प्रत्यक्षात् लिङ्गाच्च । नैवं सुखदुःखयोः । वृत्तिकृतस्तु तयोः ज्ञानसुखयोरुत्पत्तिः प्रत्यक्षलैङ्गिकाभ्यां—प्रत्यक्षलैङ्गिकज्ञानव्याख्यानाभ्यां व्याख्याता । सुखमिन्द्रियलिङ्गप्रभवं नेति यद्वदिति व्याचकुः ।

उप. सू. ४. लैङ्गिकमतीतभविष्यद्विषयकमपि; नैवं सुखम् ।

"अतीतेषु विषयेषु सर्पव्याघ्रचोरादिषु स्मृतिजम, अनागतेषु संकल्पजम्" इति ॥ ४ ॥

अथाधिकरणं विचार्यते । तत्रेन्द्रियार्थसंनिकर्षजन्यत्वात् सुखं दुःखञ्चेन्द्रियनिष्ठमस्तु । अथेन्द्रियस्यातीन्द्रियत्वात् तन्निष्ठत्वे तदप्रत्यक्षमेव स्यादिति चेत्—तर्हि शरीरनिष्ठं भवितुमर्हति; न त्वात्मनिष्ठम् । तस्य सविषयकविशेषगुणाधारत्वेन दृश्यमानस्य निर्विषयकसुखदुःखरूपविशेषगुणाश्रयत्वायोगात् । तत्राऽऽह—

**५. सति च कार्यादर्शनात् (३६२)**

सत्येव शरीरे कदाचित् सुखं दुःखं च न दृश्यते । न च शरीरविशेषगुणो रूपादिरेवम् । अतः सुखदुःखे न शरीरविशेषगुणौ अयावच्छरीरभावित्वादिति । एवं वा—सतीन्द्रियार्थसंनिकर्षे सुखादेः कार्यस्यादर्शनात अन्येनादृश्यमानत्वान्न शरीरगुण इति । सुखादिकं न शरीरगुणः बाह्यप्रत्यक्षाविषयत्वादित्युक्तं भवति ॥ ५ ॥

युक्त्यन्तरमाह—

**६. एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् (३६३)**

एकस्मिन् अर्थे आत्मनि समवायीनि इच्छाद्वेषादीनि ज्ञानवत् कारणान्तराणि, तेषु सत्सु अनुभूयमानत्वात् । पुरुषो ह्यनुभूय स्मृत्वा अभिलष्य सुखसाधनानुष्ठाने प्रयत्य सुखं लभते । कारणभूतानां तेषां मिथ एकार्थसमवायवत् सुखदुःखयोरपि तदेकार्थभूतात्मसमवायित्वमेव युक्तमिति । सुखमिच्छादिसमानाधिकरणं तद्व्यधिकरणत्वेनानिश्चितत्वे

---

उप. सू. ५. इन्द्रियार्थसंनिकर्षे सत्यपि सुखादि न जायते ।

उप. सू ६. सुखदुःखविषये स्वविजातीयस्वाधिकरणसमवेतधर्माधर्मज्ञानेच्छादिविशेषकारणापेक्षाऽस्ति । नैवं ज्ञाने ।

सति तत्कार्यत्वादित्यनुमानम् । यद्वा रागपूर्वकप्रयत्नवानहं संप्रति सुखीति रागाद्येकार्थसमवायितया प्रत्यक्षतोऽनुभूतत्वादिति सूत्रार्थः । एवं द्वेषाद्विहितहिंसस्य राजदण्डादापतिते दुःखेऽपि भाव्यम् । यदि च इच्छादिसामानाधिकरण्येन दृष्टत्वात् तदनधिकरणे अदृष्टत्वादित्यर्थ इष्यते, तदा पूर्वसूत्रकथितद्वितीयार्थोऽत्रैव विवक्षणीयः ॥ ६ ॥

आत्माधिकारे भाष्ये सुखादि प्रस्तुत्य, "ते च न शरीरेन्द्रियगुणाः, कस्मात् ? अहङ्कारेणैकवाक्यताभावात्, प्रदेशवृत्तित्वात्, अयावद्द्रव्यभावित्वात्, बाह्येन्द्रियाप्रत्यक्षत्वाच्च" इति चत्वारो हेतव उक्ताः । तत्र अहङ्कारैकवाक्यता नाम-- अहमित्यनेन सामानाधिकरण्यम् । अत्र सूत्रद्वयेन हेतुत्रयं कथितमासीत् । अवशिष्टं प्रदेशवृत्तित्वमव्याप्यवृत्तित्वरूपम् । तं हेतुमाह—

**७. एकदेश इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः (३६४)**

एकदेश इतीत्यत्र संध्यैक्यात् प्रथमान्तमेकदेशपदम् । एकस्मिन् शरीरे एकदेशः इत्युच्यमानानि शिरः पृष्ठमुदरं मर्माणि च; न तु शरीरमेव शिरआदीनि । तेषामेकदेशत्वात्, अस्य चावयवित्वात् । तथाऽस्यैकत्वात् तेषामनेकत्वाच्च । कथं तर्हि सर्वेषां शरीराणामेकरूपत्वाभावः ? उच्यते—तद्विशेषः शरीरविशेषः तद्विशेषेभ्यः शिरःपृष्ठाद्यवयवगतविशेषेभ्यः संपद्यते । अवयवापेक्षया शरीरस्य भिन्नत्वेऽपि नावयव-

उप· सू. ७. ननु कारणभेदाच्चेत् ज्ञानसुखयोर्भेदः, शरीरतदवयवानां कथं भेदः ? तत्राह-एकदेशे अवयवे, एकस्मिन्-शरीरे शिरआदीनि भवन्ति । तद्वैजात्यं कारणवैजात्यादेवेत्यर्थः ।

वैलक्षण्याधीनवैलक्षण्यभाक्त्वस्य हानिरिति । अस्तु नामैतत् । प्रकृते किमायातमिति चेत्--इदमेव । शिरसि मे सुखम्, पृष्ठे मे वेदनेत्याद्युपलम्भानुसारेण शिरआद्यवच्छेदेनैव शरीरवृत्तित्वं सुखादेर्वक्तव्यम् । तथा चास्य तत्राव्याप्यवृत्तित्वं स्यात् । न च शरीरविशेषगुणो रूपादिरव्याप्यवृत्तिः । न च शिरसि मे सुखमित्यस्य शिरोनिष्ठसुखमित्येवार्थः, तत्र च तद् व्याप्यवृत्त्येवेति वाच्यम्--तथासति सुखस्य शरीरनिष्ठत्वाभावात् । न च शिरआदिकं शरीरमेव, अवयवावयविभावेन मिथो भेदादिति । एकदेशे इति सप्तम्यन्ततया छेदे तु, एकदेशावच्छेदेन शरीरे सुखादिप्रतीतेरित्यर्थः । 'अतो न शरीरगुण' इति प्रकृतान्वयः । कोऽसावेकदेश इत्यत्राऽऽह, एकस्मिन् शिर इत्यादि । तथा चैकस्य देश एकदेशः इत्यर्थः । शिष्टं पूर्ववत् ।

ननु हस्तादिनिष्ठमेव सुखादिकम्, न तु शरीरनिष्ठमित्याशङ्कायां किं समाधानमिति चेत्--अत्यदेतत् । शरीरनिष्ठत्वपक्षे दूषणस्यैवात्र च भाष्ये च संप्रति कथनात् । अहङ्कारैकवाक्यत्वादिकं तु प्रागुक्तं हस्तादिव्यावर्तनेन आत्मनिष्ठत्वसाधकमस्त्येवेति । उक्तं यथाभाष्यम् ।

यदि तु सुखादेः ज्ञानातिरिक्तत्वस्थापनार्थमेव सर्वसूत्रप्रवृत्तिरिति मन्यते, तदा तृतीयादीनां सूत्राणां क्रमेणायमर्थः । सुखादेः प्रत्यक्षानुमितिजन्यत्वात् ज्ञानस्य तदभावात्, एवं स्मृतिजन्यत्वात्, उपेक्षात्मकज्ञाने तज्जनके इन्द्रियार्थसन्निकर्षे वा सति सुखदुःखरूपकार्यादर्शनात्, ज्ञानस्य स्वसमानाधिकरणप्रयत्नाजन्यत्वेऽपि सुखादेः तत्सत्त्वात्, ज्ञानस्य पादे मे ज्ञानमित्येवमवच्छेदकाप्रतीतावपि सुखस्य तथा प्रतीतेः सुखादिकं न ज्ञानम्; किंत्वन्य एव गुण इति ॥ ७ ॥

सुखदुःखे मिथो भिन्ने ज्ञानात् सर्वविधादपि ।
आत्मनिष्ठे तथेत्याह दशमस्याद्य आह्निके ॥

इति वैशेषिकरसायनसहिते वैशेषिकदर्शने दशमे प्रथममाह्निकम् ।

---

श्रीः

अथ दशमे द्वितीयमाह्निकम्

एवं तावत् द्रव्यगुणकर्माणि परीक्षितानि । सामान्यादीनां स्वाश्रयव्यावर्तनमात्रोपयोगिनां विशेष्यनया प्रतिपत्तुमनर्हाणां विधिनिषेध-भावनासु साक्षादनन्वयात् अर्थशब्दाभिधेयानां द्रव्यगुणकर्मणामेव धर्माधर्मजननशक्तिमत्त्वम् । अत एव भाष्यं साधर्म्यप्रकरणे, "त्रयाणां धर्माधर्मकर्तृत्वञ्च" इति । अतः प्रथमप्रतिज्ञातधर्मजनकत्वं त्रयाणा-मेवास्तीति तावन्मात्रपरीक्षणमित्याशयेन तेषां धर्महेतुत्वमुक्त्वा शास्त्र-मुपसंहरिष्यन् तदुपयोगितयैव द्रव्यादिष्वेकैकस्य कारणत्वविधां संभा-विताम्, 'साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानात्' इत्युपक्रमे अवश्यज्ञेयतयोद्दिष्ट-विवेचितसाधर्म्यवैधर्म्यान्तर्गतां दर्शयति—

**१. कारणमिति द्रव्ये कार्यसमवायात् (३६५)**

कारणमितीत्येतत् (कारणमिति प्रतीतिर्व्यवहारश्च) द्रव्ये कार्य-समवायाद् भवति । उत्पद्यमानस्य द्रव्यस्य गुणस्य कर्मणश्च द्रव्ये समवायात्, यत्समवेतं सत् कार्यमुत्पद्यते तत् समवायिकारणमिति सर्वत्र द्रव्यस्य समवायिकारणत्वमित्यर्थः ॥ १ ॥

द्रव्यस्य निमित्तकारणत्वमप्याह—

**२. संयोगाद्वा (३६६)**

कारणमिति द्रव्ये इत्यनुवर्तते। समवायिकारणे तन्तुकपालादौ साक्षात् परम्परया वा संयोगादपि तुरीवेम-चक्रदण्डादौ द्रव्ये कारणमिति प्रतीतिर्व्यवहारश्च। तथाच स्वसमवेतकार्ये स्वयं समवायिकारणं द्रव्यम्; परसमवेतकार्ये कारणं निमित्तकारणमिति ॥ २ ॥

एवं द्रव्यस्य द्वेधा कारणत्वमुक्त्वा परीक्षितक्रमेण कर्मण: कारणत्वप्रकारं समनन्तरमाह—

**३. कारणे समवायात् (कर्मणि) कर्माणि (३६७)**

पूर्वसूत्र इव कर्मणीति सप्तम्यन्तपाठो वा; कर्माणीति प्रथमान्तपाठो वा यथा पञ्चमसूत्रे। कस्यापि कर्मण: प्रकारान्तरेण कारणत्वं नास्तीति दर्शयितुम्, द्रव्यगुणापेक्षया कर्मणां साक्षाद् व्यापारतया विध्यन्वयिनां धर्मकर्तृत्वमधिकमिति सूचयितुञ्च बहुवचनमिति चिन्तनीयम्। कारणमितीत्यनुवर्तते। कर्मण: कार्यं प्रति कारणत्वं तादृशकार्यसमवायिकारणे समवायाद् भवति। संयोगविभागासमवायिकारणं हि कर्म। तथाच हस्तादौ समवेतं सत् कर्म कार्यैकार्थप्रत्यासत्त्या हस्तसमवेतविभागसंयोगकारणमिति ॥ ३ ॥

कारणैकार्थप्रत्यासत्त्याऽपि कर्मणोऽसमवायिकारणत्वमाह—

---

उप. सू २. संयोगात् तुरीतन्तुसंयागान्निमित्तादपि पटो भवति। अतो द्रव्यं निमित्तकारणमपि।

**४. तथारूपे कारणैकार्थसमवायाच्च (३६८)**

तथारूप इत्येकं पदम्। कर्मपदमप्यनुवर्तते। तथा पूर्वाभिमतं रूपं धर्मो यस्य तत्। तादृशे पूर्वसूत्राभिमतकार्यसजातीये कार्यविशेषे संयोगविशेषे विभागविशेषे चैव; न त्वन्यत्रेति भावः। क्वचित् संयोगादौ कर्मणः कारणत्वं कारणैकार्थसमवायात्। कारणेन=कार्यसमवायिकारणेन सह एकस्मिन्नर्थे समवायाद् भवति। चकारः कर्मणि पूर्वोक्तविधासमुच्चयार्थः। यदा हस्तक्रियया हस्तपुस्तकसंयोगो भवति, तदैव शरीरपुस्तकसंयोगोऽपि तयैव क्रियया हस्तगतया कारणैकार्थप्रत्यासत्त्या जन्यत इत्यर्थः। ननु किमिदमपूर्वमुच्यते—तस्य संयोगजसंयोगतया कर्मकार्यत्वप्रसिध्द्यभावादिति चेत्—श्रूयताम्। संभवति कर्मण एव कारणैकार्थप्रत्यासत्त्या कारणत्वे किमिति संयोगस्य तत्र कारणत्वकल्पना? एवञ्च युगपदेव संयोगद्वयमपि भवतीत्यौचित्यमपि। संयोगजसंयोगोक्तिर्ग्रन्थेषु कुत इति चेत्—यत्र खल्वङ्गुलिक्रिया, तत्राङ्गुलिपुस्तकसंयोगहस्तपुस्तकसंयोगशरीरपुस्तकसंयोगाः, तत्र व्यवहितायां क्रियायां कारणैकार्थप्रत्यासत्त्यभावात् हस्तपुस्तकसंयोगादेव शरीरपुस्तकसंयोगो भवतीति। अतोऽन्यतरकर्मजन्यः उभयकर्मजन्यश्च संयोगः। तदसंभवे तु संयोगज इति। एवं हस्तपूर्वदेशविभाग-शरीरपूर्वदेशविभागयोरपि हस्तक्रिया कारणमिति द्रष्टव्यम्॥

रूप इति पृथक्पदं कृत्वा रूपाद्यनेकगुणविषयतया सूत्रव्याख्यानमुपस्कारे ॥ ४ ॥

---

उप. सू. ४: रूपे तन्तुरूपे कारणे कार्थप्रत्यासत्त्या पटरूपं प्रति असमवायिकारणत्वमित्यर्थः।

अथ गुणस्य कारणत्वविधाः तिस्रो दर्शयति—

### ५. कारणसमवायात् संयोगः पटस्य (३६९)

कारणमित्यनुवर्तते । तन्तुद्वयसंयोगः पटस्य कारणम्—पटकारणे तन्तौ समवायात् । एवं तुरीतन्तुसंयोगोऽपि पटकारणमेव । परं तु न तस्यासमवायिकारणत्वम्, अवयवमात्रसमवेतत्वाभावात् ॥ ५ ॥

कारणैकार्थप्रत्यासत्तिमाह—

### ६. कारणकारणसमावायाच्च (३७०)

कारणं संयोग इत्यनुवर्तते । महातूलपरिमाणं प्रति तूलपिण्डद्वयगतः प्रचयाख्यः संयोगः परिमाणकारणमहातूलकारणतूलपिण्डसमवायात् कारणं भवतीति । एवंरीत्या रूपादीनां कारणगुणानां कार्यगुणारम्भकत्वमप्यत्रैव दर्शित इति वेदितव्यम् ॥ ६ ॥

गुणस्य कारणत्वं प्रकारान्तरेण दर्शयति—

### ७. संयुक्तसमवायादग्नेर्वैशेषिकम् (३७१)

विशेष एव वैशेषिकम् । स्वाश्रयव्यवच्छेदोचितावान्तरसामान्यविशेषयुक्तो गुणः । अग्नेर्विशेषगुण औष्ण्यम्, स्पर्शत्वव्याप्यजातिविशेषवत्तया स्वाश्रयं पृथिव्यादितो व्यवच्छिनत्तीति । तत् पाकजपरमाणुरूपादिकं प्रति कारणम्—कार्यसमवायिकारणपरमाणुसंयुक्ताग्निसमवायात् ।

---

उप. सू ५. तंन्तुद्वयसंयोगः पटस्यासमवायिकारणं समवायिकारणे समवेतत्वात् ।

उद्भूतोष्णस्पर्शवत्तेजस्संयोगे सत्येव पाकजरूपाद्युत्पत्तिरित्यन्वयव्यतिरेकाभ्यामुष्णस्पर्शो निमित्तकारणमिति । एवमात्मगतः प्रयत्नो हस्तक्रियां प्रति क्रियाकारणहस्तसंयुक्तात्मसमवायात् कारणम् । एवं मुसलादिक्रियां प्रति स्वाश्रयसंयुक्तहस्तसंयुक्तात्मसमवायरूपपरम्परा द्रष्टव्या । एवं ज्ञानेच्छाधर्माधर्माणामपि संयुक्तसमवायात् बाह्यकार्यकारणत्वम् । इच्छादिकं प्रति ज्ञानादेः कारणत्वं तु कारणसमवायात् ; तुरीतन्तुसंयोगवत् ।

एवं कारणत्वोपयिक्यः प्रत्यासत्तयो दर्शिताः । तत्र अस्यासमवायिकारणत्वम् , अस्य निमित्तकारणत्वमिति विवेकः गमकान्तरसाहाय्येनास्माभिरधिगन्तुं शक्य इति महर्षिस्तत्रोदास्तेति सिद्धं त्रयाणामेवं प्रकारेण सर्वत्र कारणत्वमिति ॥ ७ ॥

एवं सर्वकार्यकारणानां द्रव्यगुणकर्मणां धर्मकारणत्वमपि दर्शयति—

**८. दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय (३७२)**

दृष्टानाम् 'धर्मविशेषप्रसूतात्' इत्यारभ्य "वैशेषिकम्" इत्यन्तैः सूत्रैर्वैशेषिकदर्शनेऽत्र दृष्टानाम् , दृष्टप्रयोजनानाम् एतदाह्निकोक्तनानाप्रकारकारणताशालितया निर्ज्ञातफलानां द्रव्यगुणकर्मणां दृष्टरूपप्रयोजनाभावे सति आम्नायचोदितः प्रयोगः अनुष्ठानमभ्युदयाय अदृष्टद्वारकानेकप्रकाराय फलायेति । अयं भावः—शास्त्रे द्रव्यगुण-

---

उप. सू. ८. शास्त्रोपदिष्टानामुपदिष्टप्रयोजनानां कर्मणामनुष्ठानमपूर्वाय । कुतः? दृष्टाभावे = भ्रमविप्रलिप्सादिरूपदृष्टपुंदोषविरहादित्यर्थः ।

कर्मगोचराः सन्ति सहस्रशो विधयः, 'व्रीहिभिर्यजेत', 'अग्नीषोमीयं पशुमालभेत', 'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति', 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति', 'निर्मन्थ्येनेष्टकाः पचन्ति', 'दध्नेन्द्रियकामस्य जुहुयात्', 'यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात्', 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादयः। तत्र यथार्हं द्रव्यगुणकर्मणां दृष्टं फलमन्वेष्टव्यम् । सति तस्मिन् तदर्थान्येव तानि । परंतु तत्रापि नियमांशेनादृष्टमस्तीति अभिषेचनसूत्रे प्रागभिहितमेव । असंभवद्दृष्टद्वारफलानां तु चोदितान्यादृशफलार्थत्वमदृष्टद्वाराऽस्तीति तेषां प्रयोगो युक्त एव । अनेकप्रकारस्य कारणत्वस्य लोकसिद्धस्य प्राग्दर्शितत्वेन एवंविधकारणत्वस्यापि स्वीकार्यत्वात् । यद्यपि, 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ अग्निहोत्रहोमनिर्वृत्तिर्दृष्टं प्रयोजनमस्ति दध्नः - अथापि यद् यदुद्देशेन विहितम् , तत्र किं दृष्टं द्वारमस्ति, उतादृष्टमिति विवेचनीयम । इन्द्रियार्थञ्च होमाश्रिततया विहितं दधि नादृष्टमन्तरेण तत फलं कल्पयितुमीष्टे । एवं नीचैस्त्वमपि सदोगतं मानक्रियाश्रितं सत् पर्जन्यवर्षरूपफलहेतुः । अतोऽत्र शास्त्रे एषां द्रव्यादीनां निरूपणम् आत्मतत्त्वविवेचनार्थतयेव, एवं धर्मोपयोगितयापीति प्रतिपत्तव्यमिति ॥ ८ ॥

ननूपक्रमे, 'तद्वचनादाम्नायस्य प्रामाण्यम' इति सूत्रेण धर्मवचनादाम्नायः प्रमाणमित्युक्तम् । यद्यप्येवं महाजनपरिगृहीतधर्मप्रतिपादकत्वेन महाजनपरिगृहीतत्वेनैव वा प्रामण्यमनुमातुं शक्यते—अथापि यावत् प्रामाण्यकारकं दृढं नावसीयते, तावत् अनुत्पन्नस्य प्रामाण्यस्य

स्थापनमनुमानतोऽसंभवि। तत्र च नित्यनिर्दोषत्वाद् वेदः प्रमाणमिति वादः षष्ठे निरस्तः, 'बुद्धिपूर्वा वाक्यकृतिर्वेदे' इत्यादिना। बुद्धिश्च पुंसां विप्रलिप्सादिदोषदूषितैवेति निश्चयचम्। अतः कर्मविशेषयोगविशेषसिद्धकारुणिकमहर्षिपरिबृढप्रणीतत्वेऽपि कार्त्स्न्येन प्रामाण्ये नूनमनाश्वास एव। तथाच षष्ठाध्यायोक्तरीत्या आप्तगुणस्यैव शब्दप्रामाण्यकारकत्वात् प्रकृते कारकाभावान्निवर्तमानं प्रामाण्यं महाजनपरिग्रहः कथङ्कारमास्थापयेत्। असिद्धश्च महाजनपरिग्रहः सृष्ट्यारम्भे। अतो नैतस्मादभ्युदयसिद्धिनिर्णय इति शङ्कायामाह—

यद्वा कर्मयोगसिद्धसार्वज्ञ्यकपिलादिकारुणिककृतत्वेन वेदप्रामाण्यादभ्युदयसिद्धिरिति भ्रमं वारयितुमाह—

***९. अस्मद्बुद्धिभ्यो लिङ्गमृषेस्तद्वचनादाम्नायप्रामाण्यमिति (३७३)**

कन्दलीकिरणावल्यनुसारात्, क्वचित् सूत्रपाठाच्चैवमेव सूत्रम्। न तु पूर्वभागरहितम्। आम्नायस्य प्रामाण्यमिति व्यस्तोक्तिरुपस्कारे। अत्र पुनः आम्नायप्रामाण्यमिति समस्तम्। भाष्ये समस्तमेवोदाहृतम्। तत्राम्नायोद्देशेन प्रामाण्यविधानमुपक्रमसूत्रे। अत्र तत्रोक्ताम्नायप्रामाण्यानुवादेन तद्वचनाधीनत्वविधानमिति भेदात् तथा। यत् तावदाम्नायप्रामाण्यं प्रागुक्तम्, तत् तद्वचनात् तेन पुरुषधौरेयेण ईश्वरेण प्रणयनाद्भवतीति उत्तरखण्डार्थः। तच्छब्दनिर्देष्टव्यः पुरुषधौरेयः पूर्वखण्डेन

---

उप. सू. ९. तद्वचनादाम्नायस्य प्रामाण्यमिति सूत्रम्।
**ईश्वरेण प्रणीतत्वादाम्नायः प्रमाणमित्यर्थ इति ॥**

स्थाप्यते । अस्मद्बुद्धिभ्य इति औपचारिकावधित्वविवक्षया पञ्चमी । ल्यब्लोपे पञ्चमी वा । पूर्वसूत्रपर्यन्तप्रतिपादितं द्रव्यगुणकर्मजातमत्रार्थात् कर्तृत्वेन संबध्यते । ऋषिशब्द एकवचनान्त: परमपुरुषपर: । तथाचेदं परिदृश्यमानं महीमहीधरमहार्णवादिद्रव्यतद्गुणकर्मरूपम् अस्मद्बुद्धीर्विहायान्यस्यैकस्याद्वितीयस्य तत्तदुपादानोपकरणादिसर्वगोचरस्वाभाविकसाक्षात्कारशालिन: सकलकार्यसंकल्पसमकालनिर्माणनिपुणस्य महापुरुषस्य लिङ्गमनुमापकमिति तदर्थ: ।

न चैवं सर्वजगत्स्रष्टारं सकलप्राणिहितविदं परमकारुणिकं पुरुषोत्तमं परित्यज्य अन्यस्य कस्यचिदर्वाचीनस्याम्नायविधातृत्वे किञ्चिद् गमकमस्ति । भाष्ये आम्नायविधातॄणामिति बहुवचनं गौतमधर्मसूत्र इवाम्नायपदेन स्मृतिसंग्रहणात् । कामं स्मृतिरूपाणामाम्नायानामन्येऽप्याम्नातार: ; न मूलभूतस्याम्नायस्य । भोक्तृभोग्यभोगोपकरणस्रष्टुस्तस्यैव भोगप्रथकर्तव्योपदेशकर्तृत्वस्याभ्युचितत्वात् । अन्यथाऽर्वाचीनमहर्षिप्रवृत्तेरपि दौर्घट्यात् । तथाच श्रुति:—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति । अतो नान्य आम्नायकर्ता । पश्चात् पुन: कैश्चिद् ब्रह्मणे तदुपदिष्टस्य वेदराशेरंशास्तपोबलेन तस्यैव महतो भूतस्य तच्छिष्यस्य चतुर्मुखस्यानुग्रहेण प्रत्यक्षीकृत्य प्राकाश्यन्तेति तावता न तेषां वेदकर्तृत्वम् । अत: प्रमाणभूतवेदादिदर्शितया विधया प्रकृतशास्त्रदर्शितद्रव्यगुणकर्मपरिस्थितिं यथावद् विदुषा यथाभिलषितमभ्युदयसाधनान्यनुष्ठेयानि ; नि:श्रेयसार्थिना च कर्मयोग: षष्ठोक्तयमनियमादिमय:, आत्मयोगश्च ज्ञानमय: साधु समाचरणीय इति ।

द्रव्यादीनां कारणत्वविधा अभ्युदयार्थताम ।
सर्वज्ञसिद्ध्या वेदस्य प्रामाण्यञ्चातिमेऽब्रवीत ॥

इति शास्त्रपरिसमाप्तौ । इत्थमिदं लोकवेदसर्वोपयोगि सर्व-श्रेयस्करं सर्वसेव्यं विशिष्टं वैशेषिकदर्शनमिति ॥ ९ ॥

तर्कार्णवेन कुसुमाञ्जलिविस्तरादीन्
ग्रन्थान् बहून् कृतवता कृतिरुज्ज्वलेयम ।
वैशेषिकोपरि रसायननामधेया
श्रीवीरराघवशिरोमणिना व्यधायि ॥

दुर्वादक्षोभकुक्षिम्भरिदृढधिषणोद्रिक्त-सर्वाभियुक्त-
प्राचीनप्राज्ञवेद्ये गहन इह क्रियानेष वैशेषिकेऽहम् ।
सत्यं सर्वत्र पूर्णः स तु हयवदनः सर्वविद्याधिदेवो
विश्वात्मस्वात्महृद्यां व्यधित कृतिमिमां व्याजयन् मां दयालुः ॥

शास्त्रेऽत्रैवमिदंवित्सु शैथिल्यञ्चारुचिं हरत ।
विधत्ते पुष्टिमिष्टार्थान् वैशेषिकरसायनम ॥

वर्षेभ्यस्त्रिंशतः प्राक् यमहमररचं दर्शनेऽस्मिन् विमर्शं
प्रायेणाष्टादशभ्यः प्रचरणमभजत् सोऽत्र पश्चात् विधाय ।
ईषद् व्याख्याविमर्शं तदनु बहु परामृश्य सूत्राण्यकार्षं
व्याख्यांम् ऋष्यक्षवस्विन्द्वधिगतगणने वत्सरे शालिवाहे ॥

सेयं वैशेषिकव्याख्या सोपस्कारार्थसंग्रहम् ।
रसर्षिवसुचन्द्राब्दे संस्कृत्यैवं प्रकाश्यते ॥

**इति वैशेषिकरसायनसंहिते वैशेषिकदर्शने दशमे द्वितीयमाह्निकम्**
**इति दशमोऽध्यायः ॥**

तर्कार्णवस्य पण्डितरत्नस्य पूर्वोत्तरमीमांसाप्रदीपस्य देशिकदर्शनधुरन्धरस्य उभयमीमांसावल्लभस्य उत्तमूर्. वात्स्यसच्चक्रवर्तिनो श्रीरराघवाचार्यशिरोमणेः

अभिनवदेशिकस्य कृतिषु

**वैशेषिकदर्शनव्याख्यानं**

वैशेषिकरसायनं संपूर्णम् ॥

श्रीरस्तु । शुभमस्तु ॥



श्रीः

# शोधनिका

| | |
|---|---|
| गुणगणो | 1-6 |
| ब्रूयात् | 3-8 |
| निरवयवत्वा | 11-8 |
| प्रकाराणाम् | 12-16 |
| संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ | 14-1 |
| परत्वापरत्वे | 14-22 |
| आरम्भवादः | 21-15 |
| पुस्तकसंयोग | 22-6 |
| अद्वारक | 24-18 |
| द्वित्वसंयो | 28-3 |
| इष्वादिषु | 30-8 |
| असमवा | 30-17 |
| पटाद्युत्पत्ति | 31-3 |
| मनेकेषां | 34-13 |
| बौद्धो | 37-22 |
| बुद्ध्यपे- | 41-22 |
| शेषाश्चै- | 42-6 |
| ग्रहणा. | 43-17 |
| राधाराधे | 47-1 |
| .मानत्वात् | 47-2 |
| सदिति यतो | 45-10 |
| तेष्वेव | 50-7 |
| नीलंनील. | 50-13 |
| अन्यादृशी | 50-18 |

| | |
|---|---|
| प्रत्येक | 51-12 |
| तस्यानुद्भूतत्वात् | 53-10 |
| ह्रासेन- | 53-19 |
| कालादिष्वपि | 54-4 |
| मधू | 54-18 |
| मग्नि. | 55-4 |
| साध्यबाध | 55-11 |
| शङ्कायां | 55-20 |
| वालाः | 56-9 |
| सर्ववायु | 60-21 |
| नित्यत्वमुक्त | 61-11 |
| उच्यते | 62-9 |
| सिद्ध्यति | 62-16 |
| सिद्धिरित्यत्र | 64-9 |
| समवायि | 69-7 |
| द्रव्यातिरिक्त | 74-12 |
| नित्यत्वे | 74-16 |
| भावः तत्त्वम् | 75-2 |
| साधारण | 75-14 |
| गन्धाभाव | 76-18 |
| व्याख्याता | 78-6 |
| वायुस्पर्शस्यान्यत्र | 79-2 |
| संबन्धेन. | 79-18 |
| रित्यादौ | 82-21 |
| इत इद | 83-15 |

| | | | |
|---|---|---|---|
| दैशिक- | 85-16 | रूपत्रये. | 117-4 |
| प्रत्ययाश्च | 86-3 | जायत | 1117-2 ✗ |
| च्छिन्ना | 87-3 | श्रयासिद्ध. | 118-19 |
| तिसृषु | 87-10 | नैभर्यम् | 119-8 |
| विप्रकर्षावच्छिन्न | 88-3 | यस्माद्विषाणी | 119-11 |
| प्रथमाङ्ग. | 88-9 | तदनुमानम् | 122-12 |
| सामान्ये—अन्यतर | 88-14 | अनिन्द्रिय | 123-6 |
| धर्मिणि. | 89-22 | चक्षुर्निमीलनोन्मीलने | 125-6 |
| धर्मिणि | 90-7 | मानायोगात् | 126-20 |
| दिन्द्रिय | 90-11 | पूर्वपक्षे | 127-15 |
| सोमोपरागो. | 9-22 | प्रत्ययस्य | 128-5 |
| नाधिकरणं | 92-16 | सामानाधिकरण्य | 130-4 |
| मःश्रोत्र. | 93-7 | तीत्यत्र. | 130-16 |
| कर्मेति | 94-1 | निर्बाधम् | 134-1 |
| दर्शनस्य | 95-4 | तद्व्यत्तचव | 135-1 |
| पृथिवी. | 95-9 | प्रत्यक्षाङ्गीका | 135-7 |
| कथनञ्च | 95-18 | शरीरावच्छिन्न | 137-8 |
| नुत्थिति: | 95-21 | जीवेश्वरनानात्व | 140-9 |
| पलम्भ | 96-16 | यत्यति — त्रसरेणु | 142-9 |
| स्यात् | 97-17 | द्व्यणुके | 143-8 |
| उक्तविधा. | 106-3 | एतावत्तु | 143-19 |
| क्विण्वादि. | 107-16 | आकाशादे | 145-5 |
| सत्यपि—वेञ्व | 108-6 | रूपसंस्कारा- | 149-1 |
| कस्मिन्नर्थे सम | 112-1 | विशेषाच्च | 150-2 |
| दाहरण. | 114-11 | गुणोद्भव. | 150-21 |
| लिङ्गम् | .112-16 | परिहारार्थं. | 15-31 |
| एतदारभ्य त्रीणि सूत्राणी | 113-6 | अप्रत्यक्षवाय्वाका | 155-3 |
| | | द्व्यणुको | 155-6 |

| | |
|---|---|
| सयुक्तानां | 156 10 |
| पूर्वकत्वात् | 157-13 |
| तदानारम्भ | 175-17 |
| संनिकर्षात् | 175-18 |
| तिष्ठतीत्यात्मस्थ | 176-21 |
| ल्युट्. | 1[illegible]4-5 |
| त्रीणीमानि | 198-11 |
| हिंसारूप | 198-12 |
| तदनुद्देशेन | 199-14 |
| पुरुषार्थतया | 202-15 |
| यमापेक्षत्वम् | 203-12 |
| मित्यनु. | 208-1 |
| अवयविन्येव | 210-18 |
| परमाणुष्वपि | 21?-9 |
| पूर्वक | 214-7 |
| अवश्यञ्च | 215-21 |
| रूपाद्युत्पत्तिः | 216-19 |
| पूर्विकैव | 216-20 |
| अग्निक्रिया | 217-23 |
| विभागज. | 218-11 |
| द्व्यणुक | 218-18 |
| रूपादिवत् | 220-10 |
| महत्त्वाभावः | 224-3 |
| द्व्यणुके- | 224-13 |
| त्र्यणुकात् | 226-3 |
| अणुमहच्छब्दयो | 226-12 |
| पारिमण्डल्या | 227-10 |
| कथं तद्- | 229-15 |
| पृथक्त्वम् | 235-7 |
| अपरत्वाद्युत्पादक | 245-4 |
| प्रकृतासमवायि | 245-17 |
| तावत्संबन्धि | 248-4 |
| संयुक्त | 252-2 |
| विषयेपरं | 252-12 |
| विपरिण | 255-9 |
| तत्वा | 256-5 |
| सांख्यपक्षे | 259-14 |
| तथाऽऽपस्तेजो | 261-5 |
| धर्म्यैक्य | 263-15 |
| प्रत्यक्षत्वा- | 265-10 |
| परिहर्तुं | 265-17 |
| प्रतीतिः | 269-12 |
| कदाचिद्वटाधिकरणभूते | 269-15 |
| असमाहिता — | 2/2-15 |
| संबन्धि | 27/-14 |
| देवदत्तेन | 281-5 |
| ज्ञापकहेतुश्च | 281-18 |
| करणपदं च | 282-1 |
| प्रयोगमर्हति | 282-2 |
| व्याप्यव्यापक | 282-6 |

मुद्रायन्त्रान्तिके चेत स्यात् शोधनप्रत्यवेक्षकः ।
तदा स्यान्मुद्रणं शुद्धम् ; द्विगुणोऽर्थोऽत्र कांक्षितः ॥